(७६) अचोऽन्त्यादि टि १।१।६४॥ अचां मध्ये योऽन्त्यः सः आदिर्यस्य तट्टिसंज्ञं स्यात्। 'शकन्ध्वादिषु पररूपं वाच्यम्' (वा २६३२)। तच्च टेः। शकन्धुः। कर्कन्धुः। कुलटा। 'सीमन्तः केशवेशे' (वा २६३३) सीमान्तोऽन्यः। मनीषा। हलीषा। लाङ्गलीषा। पतञ्जलिः। 'सारङ्गः पशुपक्षिणोः' (ग १२६)। साराङ्गो-

---

अथ क्वचित् टेः पररूपं विधातुं टिसंज्ञामाह—अचोऽन्त्यादि टि। अच इति निर्धारणे षष्ठी। जातावेकवचनम्। अन्ते भवः अन्त्यः, अन्त्यः आदिः यस्य तत् अन्त्यादीति विग्रहः। फलितमाह—अचां मध्य इत्यादिना। शकन्ध्वादिष्विति। शकन्ध्वादिषु विषये तत्सिद्ध्यर्थं पूर्वपरयोः पररूपं वक्तव्यमित्यर्थः। ततश्च शकादिशब्दानां टेरचि परे टेश्च परस्याचश्च स्थाने पररूपमेकादेश इत्यर्थाल्लभ्यते। आदित्यनुवृत्तौ शकन्ध्वादिगणे सीमन्त इत्यादिकतिपयरूपाणामसिद्धेः। तदाह—तच्च टेरिति। शकन्ध्वादिगणं पठति—शकन्धुरित्यादिना। शकानां देशविशेषाणाम् अन्धुः कूप इति विग्रहः। शक अन्धुः इति स्थिते सवर्णदीर्घे प्राप्ते अनेन पररूपम्। अत्र शकशब्दे द्वावचौ। तत्र अन्त्यः अच् ककारादकारः, तदादिः अकार एव, 'आद्यन्तवदेकस्मिन्' इति वचनात्। एवमग्रेऽपि द्रष्टव्यम्। कर्कन्धुरिति। कर्काणां राज्ञाम् अन्धुरिति विग्रहः। कर्क अन्धुः इति स्थिते पररूपम्। कुलटेति। अट गतौ। पचाद्यच्। टाप्। कुलानाम् अटेति विग्रहः। भिक्षार्थं व्यभिचारार्थं वा या गृहानटति सा कुलटा। कुलान्यटतीति विग्रहे तु कर्मण्यणि टिड्ढाणञिति ङीप् स्यात्। कुल अटेति स्थिते पररूपम्। सीमन्तः केशवेशे इति। गणान्तर्गतवार्तिकमेतत्। केशानां वेशः सन्निवेशविशेषः। तस्मिन् गम्ये सीमन्शब्दस्य टेरन् इत्यस्य अन्तशब्दस्यावर्णस्य च स्थाने पररूपमित्यर्थः। आदित्यनुवृत्तौ तु इदं न सिध्येत्। सीमान्तोऽन्य इति। ग्रामान्तप्रदेशः इत्यर्थः। मनीषेति। मनस ईषेति विग्रहः। अत्र अस् इति टेः ईकारस्य च स्थाने पररूपमीकारः। ईष गतौ। 'गुरोश्च हलः' इत्यप्रत्ययः। टाप्। 'बुद्धिर्मनीषा' इत्यमरः। हलीषेति। 'ईषा लाङ्गलदण्डः स्यात्' इत्यमरः। हलस्य ईषेति विग्रहः। करिकलभ इतिवत् पुनरुक्तिः समाधेया। अत्र गुणे प्राप्ते पररूपम्। एवं लाङ्गलीषेत्यत्रापि। पतञ्जलिरिति। पतन् अञ्जलिर्यस्मिन्नमस्कार्यत्वादिति विग्रहः। अत्र अत् इति टेः अकारस्य च स्थाने पररूपमकारः। केचित्तु, गोनर्दाख्यदेशे कस्यचिदृषेः सन्ध्योपासनसमये अञ्जलेर्निर्गत इत्यैतिह्यात् अञ्जलेः पतन्निति विगृह्णन्ति। मयूरव्यंसकादित्वात् समासः। सारङ्गः पशुपक्षिणोरिति। इदमपि गणान्तर्गतं वार्तिकम्। भाष्ये तु न दृश्यते। सारशब्द उत्कृष्टे। 'सारो बले स्थिरांशे च न्याय्ये क्लीबे वरे त्रिषु' इत्यमरः।

ऽन्यः । आकृतिगणोऽयम् । मार्तण्डः । 'ओत्वोष्ठयोः समासे वा' ( वा ३६३४ ) । स्थूलोतुः । स्थूलौतुः । बिम्बोष्ठः बिम्बौष्ठः । 'समासे' किम् । तवौष्ठः । (८०) **ओमाङोश्च ६।१।९५॥** ओमि आङि च आत्परे पररूपमेकादेशः स्यात् । शिवायों नमः । शिव एहि—शिवेहि । ( ८१ ) **अव्यक्तानुकरणस्यात इतौ ।** **६।१।९८॥** ध्वनेरनुकरणस्य योऽच्छब्दस्तस्मादितौ पररूपमेकादेशः स्यात् ।

---

साराणि अङ्गानि यस्येति विग्रहः । सार अङ्ग इति स्थिते सवर्णदीर्घे प्राप्ते अनेन पररूपम् । 'चातके हरिणे पुंसि सारङ्गः शबले त्रिषु' इत्यमरः । आकृतिगणोऽयमिति । आकृत्या एवं जातीयकतया निर्णेतव्योऽयं गण इत्यर्थः । लोकप्रयोगानुसारेण एवं जातीयकाः शब्दाः अस्मिन् गणे निवेशनीया इति यावत् । तत्फलमाह—मार्तण्ड इति । मृतम् अण्डं यस्य सः मृतण्डः कश्चिदृषिः । मृत अण्ड इति स्थिते सवर्णदीर्घं बाधित्वा अनेन पररूपम् । ततः अपत्ये अणि मार्तण्डः । 'परामार्ताण्डमास्थत्' इति सवर्णदीर्घस्तु च्छान्दसः । ओत्वोष्ठयोः । अवर्णात् ओतुशब्दे ओष्ठशब्दे च परे पूर्वपरयोः पररूपं वक्तव्यमित्यर्थः । स्थूलोतुरिति । 'ओतुर्बिडालो मार्जारः' इत्यमरः । स्थूल ओतुः इति स्थिते वृद्धिं बाधित्वा पाक्षिकं पररूपम् । बिम्बोष्ठ इति । बिम्बफलवत् रक्तवर्णौ ओष्ठौ यस्येति विग्रहः ।

ओमाङोश्च । ओम् च आङ् चेति विग्रहः । आदिति पररूपमिति चानुवर्तते, एकः पूर्वपरयोरिति च तदाह—ओमित्यादिना । शिवायों नम इति । अत्र वृद्धिं बाधित्वा पररूपम् । शिवेहीति । आ इहीति स्थिते गुणे एहीति रूपम् । ततः शिव एहि इति स्थिते वृद्धिं बाधित्वा पररूपमेकारः । न च शिव आ इहीति स्थिते सवर्णदीर्घे कृते पश्चाद्गुणे शिवेहीति रूपसिद्धेराङ्ग्रहणं व्यर्थमिति वाच्यम्, 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इति न्यायेन प्रथमम् आद्गुण इति गुणे कृते शिव एहीति स्थिते वृद्धौ प्राप्तायां तन्निवृत्त्यर्थत्वात् । भाष्ये तु, आ ऋश्यात्, गुणः, अर्श्यात्, अद्य अर्श्यात् अद्यर्श्यादित्यत्र सवर्णदीर्घनिवृत्त्यर्थम् आङ्ग्रहणमिति स्थितम् । अव्यक्तानुकरणस्य । पररूपमित्यनुवर्तते । अव्यक्तः अस्फुटवर्णविभागः वृक्षपतनादिजनितध्वनिः । तस्यानुकरणं तत्प्रतिपादकस्तत्सदृशः अपरिस्फुटवर्णविभागः शब्दः यस्यावयवः यः अत् शब्दः तस्मात् इतिशब्दे परे अत्शब्दस्य इकारस्य च स्थाने पररूपं स्यादित्यर्थः । अत्र इतिशब्दे यः प्रथम इकारः तस्मिन्परे इति व्याख्येयम् । अन्यथा इतिशब्दस्य कृत्स्नस्यादेशप्रसङ्गात् । तदाह—ध्वनेरित्यादिना । अत्र अलोऽन्त्यस्येति न भवति, 'नानर्थकेऽलोऽन्त्यविधिः' इति निषेधात् । पटत् इतीति प्रक्रियावाक्यप्रदर्शनम् । न तु पररूपाभावपक्षे रूपमिति भ्रमितव्यम्, अत्र पररूपस्य नित्यत्वात् । असंहितायां

पटत् इति पटिति। 'एकाचो न' (वा ३६३७)। श्रदिति। (८२) नाम्रेडितस्यान्त्यस्य तु वा ६।१।६६॥ आम्रेडितस्य प्रागुक्तं न स्यात्। अन्त्यस्य तु तकारमात्रस्य वा स्यात्। 'डाचि बहुलं द्वे भवतः' (वा ४६९७)। इति बहुलग्रहणात् द्वित्वम्। (८३) तस्य परमाम्रेडितम् ८।१।२॥ द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात्। पटत्पटेति। (८४) झलां जशोऽन्ते ८।२।३९॥ पदान्ते झलां जशः स्युः। पटत्पटदिति। (८५) अकः सवर्णे दीर्घः ६।१।१०१॥

निर्देशो वा। पटितीति। उदाहरणमेतत्। वृक्षः पतित इत्याद्यध्याहार्यम्। अत्र अनेकाज्ग्रहणं कर्तव्यमिति वार्तिकमर्थतः सङ्गृह्णाति—एकाचो नेति। एकः अच् यस्य सः एकाच् तथाभूतस्यानुकरणस्य उक्तं पररूपं नेत्यर्थः। श्रदितीति। अत्र एकाच्त्वात् न पररूपम्।

ननु पटत्पटत् इति इत्यत्र पटत्पटेति रूपमिष्यते। तत्राव्यक्तानुकरणस्येति पररूपे पटत्पटिति इत्येव स्यात्। तत्राह—नाम्रेडितस्य। अव्यक्तानुकरणस्यात इताविति पररूपमिति एकः पूर्वपरयोरिति चानुवर्तते। आम्रेडितस्य अव्यक्तानुकरणस्य अवयवः यः अत्शब्दः तस्य इतिशब्दे परे पररूपं न स्यात्। अन्त्यस्य तु वा। तुरवधारणे। अत्शब्दान्त्यस्य तकारस्यैव इकारस्य च पररूपं वा स्यात्। नत्वकारस्यापीत्यर्थः। तदाह—आम्रेडितस्य प्रागुक्तमित्यादिना। ननु पटत् पटत् इत्यत्र कथं द्वित्वमित्यत आह–डाचीति। 'डाचि बहुलं द्वे भवतः' इति द्वित्वमित्यन्वयः। ननु 'अव्यक्तानुकरणात् द्व्यजवरार्धादनितौ डाच्' इति डाचः कथमिह सम्भवः, इतिशब्दे परतस्तत्पर्युदासः स्यादित्यत आह—बहुलग्रहणादिति। वेत्यनुक्त्वा बहुलग्रहणमधिकविधानार्थम्, बहूनर्थान् लाति गृह्णातीति तद्व्युत्पत्तेरिति भावः। अभियुक्ताश्चाहुः—'क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव। शिष्टप्रयोगाननुसृत्य लोके विज्ञेयमेतत् बहुलग्रहे तु' इति। ननु किमाम्रेडितं नाम? तत्राह—तस्य परमाम्रेडितम्। सर्वस्य द्वे इत्यनन्तरमिदं सूत्रं पठ्यते। ततश्च तस्येत्यनेन द्विरुक्तस्येति लभ्यते। अवयववाचिपरशब्दयोगे अत एव ज्ञापकात् षष्ठी। तदाह—द्विरुक्तस्येत्यादिना। पटत्पटेतीति। पटत् पटत् इति इति स्थिते तकारस्य इकारस्य च पररूपम् इकारः। ततश्च आद्गुणः। अथ पररूपाभावपक्षे पटत्पटत् इतीत्यत्र तकारस्य दकारं विधत्ते—झलां जशोऽन्ते। पदस्येत्यधिकृतम्। तदाह—पदान्त इति। पटत्पटदितीति। स्थानसाम्यात् तकारस्य दकारो जशिति भावः। अत्र अत्शब्दस्य पररूपनिषेधाभावे तकारमात्रस्य पररूपैकादेशविकल्पविधौ तस्य पररूपाभावपक्षे अत्शब्दस्य पूर्वसूत्रेण पररूपापत्तौ पटत्पटितीति स्यादिति ध्येयम्।

अकः सवर्णे। अक इति पञ्चमी। इको यणचीत्यतः अचीत्यनुवर्तते। एकः पूर्व-

अकः सवर्णेऽचि परे दीर्घ एकादेशः स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः । 'अचि' किम् । कुमारी शेते । 'नाज्झलौ' ( सू १२ ) इति सावर्ण्यनिषेधस्तु न दीर्घशकारयोः । ग्रहणकशास्त्रस्य सावर्ण्यविधिनिषेधाभ्यां प्रागनिष्पत्तेः । 'अकः' किम् । हरये । 'अकोऽकि दीर्घः' इत्येव सुवचम् । 'ऋति सवर्णे ऋ वा' ( वा

परयोरित्यधिकृतम् । तदाह—अकः सवर्णेऽचीत्यादिना । दैत्यारिरिति । दैत्य अरि इति स्थिते द्वयोरकारयोरेको दीर्घः आकारः स्थानसाम्यात् । श्री ईश इति स्थिते ईकारयोरेकः ईकारः । विष्णु उदय इति स्थिते उकारयोरूकारः । अत्राचीत्यनुवृत्तेः किं प्रयोजनमिति पृच्छति—अचि किमिति । कुमारी शेत इति । अचीत्यननुवृत्तौ ईकारस्य शकारस्य च तालुस्थानविवृतप्रयत्नसाम्येन सवर्णतया तयोर्दीर्घः ईकार एकादेशः स्यात् । तन्निवृत्त्यर्थमचीत्यनुवर्तनीयमिति भावः । ननु ईकारशकारयोः स्थानप्रयत्नसाम्येऽपि न सावर्ण्यम्, नाज्झलाविति निषेधात् । अतः 'कुमारी शेते' इत्यत्र अकस्सवर्ण इत्यस्याप्रसक्तेः अचीत्यनुवृत्तिर्व्यर्थैवेत्यत आह—नाज्झलावितीति । नाज्झलाविति सावर्ण्यनिषेधो वार्णसमाम्नायिकानामेव, नतु दीर्घप्लुतानामपि, आदिरन्त्येन सहेतेत्यनेन वार्णसमाम्नायिकानामेव, अच्शब्दवाच्यत्वावगमात् । अत ईकारशकारयोः सावर्ण्यसत्त्वात् कुमारी शेत इत्यत्रातिप्रसङ्गः स्यादित्यचीत्यनुवृत्तिरावश्यकीत्यर्थः । ननु वार्णसमाम्नायिकानामेव अच्शब्दवाच्यत्वेऽपि अच्शब्दोपस्थितैः अकारादिभिः ह्रस्वदीर्घप्लुतानामपि ग्रहणं भवति, अणुदित्सूत्रबलात् । अत ईकारशकारयोर्न सावर्ण्यप्रसक्तिरित्यजनुवृत्तिर्व्यर्थैवेत्यत आह—ग्रहणकेति । अणुदित्सवर्णस्येति ग्रहणकसूत्रं हि लब्धात्मकमेव सत् 'अस्य च्वौ' इत्यादौ प्रवृत्तिमर्हति । नाज्झलाविति प्रवृत्तिदशायां च ग्रहणकशास्त्रमिदं न लब्धात्मकम् । तद्धि सवर्णपदघटितत्वात् सवर्णपदार्थावगमोत्तरमेव लब्धात्मकम् । सवर्णसंज्ञाविधायकं च तुल्यास्यसूत्रं सामान्यतः स्वार्थं बोधयदपि नाज्झलाविति अपवादविषयं परिहृत्य तदन्यत्रैव पर्यवसानं लब्ध्वा स्वकार्यक्षमतामश्नुते । उक्तं च—'प्रकल्प्यापवादविषयमुत्सर्गोऽभिनिविशते' इति । एवं च अणुदित्सूत्रस्य नाज्झलाविति निषेधसहिततुल्यास्यसूत्रप्रवृत्तेः प्रागलब्धात्मकतया नाज्झलावित्यत्र अज्ग्रहणेन दीर्घप्लुतानां ग्रहणाभावेन ईकारशकारयोः सावर्ण्यनिषेधाभावेन सावर्ण्यसत्त्वात् कुमारी शेत इत्यत्र अकः सवर्ण इति प्राप्तौ तन्निवृत्त्यर्थमचीत्यनुवृत्तिराश्रयणीयेत्यर्थः । तदेतत् नाज्झलाविति सावर्ण्यनिषेधो यद्यपीति ग्रन्थव्याख्यावसरे प्रपञ्चितम् । अकोऽकि दीर्घ इत्येव सुवचमिति । एवं च सवर्णग्रहणं न कर्तव्यमिति लाघवम् । दध्युकार इत्यत्र तु यथासंख्याश्रयणान्नातिप्रसङ्गः । ततश्च अचीत्यनुवृत्तिरपि नाश्रयणीयेति भावः ।

ऋति ऋ वा इति वार्तिकम्, अकः सवर्ण इत्यतोऽनुवृत्तसवर्णपदेन योजयित्वा पठति—ऋति सवर्णे ऋ वा । अक इत्यनुवर्तते । एकः पूर्वपरयोरिति च । अकः सवर्णे

३६४० ) होतृकारः—होतॄकारः । 'लृति सवर्णे लृ वा' ( वा ३६४१ )। होत्लृकारः । पक्षे ऋकारः सावर्ण्यात् । होतॄकारः । 'ऋति ऋ वा' 'लृति लृ वा' इत्युभयत्रापि विधेयं वर्णद्वयं द्विमात्रम् । आद्यस्य मध्ये द्वौ रेफौ तयोरेका मात्रा, अभितोऽज्भक्तेरपरा । द्वितीयस्य तु मध्ये द्वौ लकारौ शेषं प्राग्वत् । इहोभयत्रापि 'ऋत्यकः' ( सू ९२ ) इति पाक्षिकः प्रकृतिभावो वक्ष्यते । (८६) **एङः पदान्तादति ६।१।१०९॥** पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव । विष्णोऽव । (८७) **सर्वत्र विभाषा गोः ६।१।१२२॥** लोके वेदे चैङन्तस्य

---

ऋति परे पूर्वपरयोः ऋ इत्येकादेशः स्यादित्यर्थः । होतृकार इति । होतृ ऋकार इति स्थिते अनेन द्वयोः ऋकारयोः स्थाने ऋकारविलक्षणो नृसिंहवत् द्व्यन्तरात्मा ऋकारः रेफद्वयवान् कश्चिद्वर्णो भवति । एतदभावपक्षे रूपं दर्शयति—होतृकार इति । अकः सवर्ण इति दीर्घः । लृति सवर्णे लृ वा । अकः सवर्णे लृति परे पूर्वपरयोः लृ इत्येकादेशो वा स्यादित्यर्थः । होत्लृकार इति । होतृ लृकार इति स्थिते ऋकारस्य लृकारस्य च स्थाने नृसिंहवत् द्व्यन्तरात्मा लृकारः द्विलकारवान् कश्चिद्वर्णो भवति । पक्ष इति । उक्तद्व्यन्तरात्मकवर्णाभावपक्षे ऋकारस्य लृकारस्य च स्थाने अकः सवर्ण इति दीर्घो भवन् ऋलृवर्णयोरिति सावर्ण्यादृकार एव भवति, लृकारस्य दीर्घाभावादिति भावः । अत एव होतृ लृकार इत्यत्र सवर्णदीर्घपक्षे होतॄकार इत्येवोदाहृतं भाष्ये । अथ ऋति ऋ वा, लृति लृ वेत्यत्र विधेयवर्णस्वरूपं विविनक्ति—ऋति ऋ वा लृति लृ वेत्युभयत्रापि विधेयं वर्णद्वयं द्विमात्रमिति । तदेवोपपादयति—आद्यस्य मध्य इति । एका मात्रेति । व्यञ्जनानामर्धमात्रतया एकैकस्य रेफस्य अर्धमात्रत्वादिति भावः । अभितोऽज्भक्तेरिति । अभित इत्यनन्तरं रेफाविति शेषः । अज्भक्तेरिति सामान्याभिप्रायमेकवचनम् । रेफद्वयस्य पुरस्तादुपरिष्टाच्च विद्यमानयोः ह्रस्वऋकारांशयोरन्या मात्रेत्यर्थः । द्वितीयस्य इति । विधेयस्येति शेषः । शेषं प्राग्वदिति । लकारयोरेका मात्रा, तावभितो विद्यमानयोः लृकारांशयोरन्या मात्रेत्यर्थः । एतच्च तुल्यास्यसूत्रे भाष्यकैयटयोः स्पष्टम् । एतेन दीर्घे प्राप्ते ह्रस्वः ऋकारः लृकारश्चात्र विधीयत इति प्राचीनग्रन्थः परास्तः । पाक्षिक इति । वैकल्पिक इत्यर्थः । प्रकृतिभाव इति । निर्विकारस्वरूपेणावस्थानमित्यर्थः । सन्ध्यभाव इति यावत् ।

एङः पदान्तादति । अमि पूर्व इत्यतः पूर्व इत्यनुवर्तते । एकः पूर्वपरयोरित्यधिकृतम् । तदाह—पदान्तादित्यादिना । हरे अव स्थिते अयादेशं बाधित्वा पूर्वरूपमेकारः । विष्णो अवेत्यत्र अवादेशं बाधित्वा पूर्वरूपमोकारः । सर्वत्र विभाषा । पदान्तादित्यनुवर्तते । प्रकृत्यान्तःपादमित्यतः प्रकृत्येत्यनुवर्तते । प्रकृत्या स्वभावेन निर्वि-

गोरति वा प्रकृतिभावः स्यात्पदान्ते । गो अग्रम्—गोऽग्रम् । 'एङन्तस्य' किम् । चित्रग्वग्रम् । 'पदान्ते' किम् । गोः । (८८) **अवङ् स्फोटायनस्य ६।१।१२३॥** 'अति' इति निवृत्तम् । अचि परे पदान्ते गोरवङ् वा स्यात् । गवाग्रम् । 'पदान्ते' किम् । गवि । व्यवस्थितविभाषया गवाक्षः । (८९) **इन्द्रे च ६।१।१२४॥** गोरवङ् स्यादिन्द्रे । गवेन्द्रः ।

---

कारस्वरूपेण अणतिष्ठत इत्यर्थः । यजुष्युर इत्यतो यजुषीति निवृत्तम् । तत्सूचनाय सर्वत्रेत्युपात्तम् । तेन लोके वेदे चेति लभ्यते । तदाह—लोक इत्यादि । प्रकृतिभाव इति । स्वभावेनावस्थानमित्यर्थः । एवं च पूर्वरूपसवादेशश्च न । गो अग्रमिति प्रकृतिभावे रूपम् । पूर्वरूपे गोऽग्रमिति । अत्र एङ इत्यप्यनुवर्तते । ततश्च एकदेशविकृतमनन्यवद्भवतीति न्यायेन चित्रग्वग्रमित्यत्र नातिप्रसङ्गः । हे चित्रगोऽग्रमित्यत्रापि न प्रकृतिभावः, प्रतिपदोक्तस्यैव एङो ग्रहणात्, प्रकृते च ह्रस्वस्य गुण इत्योकारस्य लाक्षणिकत्वात् । गोरिति । गो अस् इति स्थिते गो इत्योकारस्य पदान्तत्वाभावाच्च प्रकृतिभावः । न चैवमपदान्तत्वादेङः पदान्तादिति पूर्वरूपमपि दुर्लभमिति वाच्यम्, अत एव ङसिङसोश्चेति तत्र पूर्वरूपारम्भात् । अवङ् स्फोटायनस्य, अतीति निवृत्तमिति । एङः पदान्तादित्यत इति शेषः, व्याख्यानादिति भावः । पदान्तादिति, गोरिति, अचीति चानुवर्तते । स्फोटायनस्य ऋषेः मते अवङ । अन्यस्य तु न । ततश्च विकल्पः सिद्धः । तदाह—अचि पर इत्यादिना । ङिच्चेत्यन्तादेशः । गवाग्रमिति । गो अग्रमिति स्थिते गकाराद्योकारस्यावङ् । गव अग्र इति स्थिते सवर्णदीर्घः । न च अग्रशब्दे अकारमचं परत्वेनाश्रित्य प्रवृत्तः अवङ् कथं तद्विघातकं सवर्णदीर्घं प्रवर्तयति सन्निपातपरिभाषाविरोधादिति वाच्यम्, सन्निपातपरिभाषाया अनित्यत्वस्य रामायेत्यत्र वक्ष्यमाणत्वात् । गवीति । गो इ इति स्थिते ओकारस्य पदान्तत्वविरहान्नावङ् । नापि पूर्वसूत्राभ्यां प्रकृतिभावपररूपे । किन्तु अवादेशः । अतीत्यनुवृत्तौ तु गवेश इत्यादि न सिध्येत् । व्यवस्थितेति । क्वचित् भवतीत्यंश एव प्रवर्तते, क्वचित्तु न भवतीत्यंश एव, क्वचित्तूभयमित्येवं लक्ष्यानुसारेण व्यवस्थया प्रवृत्ता विभाषा व्यवस्थितविभाषा सर्वत्र विभाषा गोरित्यत्राश्रीयते । ततश्च गवाक्ष इत्यत्र नित्यमवङ् इत्यर्थः । इदं च ।

'देवत्रातो गलो, ग्राह, इति योगे च सद्विधिः ।
मिथस्ते न विभाष्यन्ते गवाक्षः, संशितव्रतः ॥'

इति शाच्छोरिति सूत्रे भाष्ये स्पष्टम् । गवाक्ष इति । गवां किरणानामक्षीवेति विग्रहः । अक्ष्णोऽदर्शनादित्यच् । पुंस्त्वं लोकात् । 'वातायनं गवाक्षः स्यात्' इत्यमरः । इन्द्रे च । गोः, अवङ्, अचीत्यनुवर्तते । तदाह—गोरिति । विकल्पनिवृत्त्यर्थः पुनरारम्भः । गवेन्द्र इति । गो इन्द्र इति स्थिते अवङ् आद्गुणः ।

## अथ प्रकृतिभावः ॥ ४ ॥

(९०) प्लुतप्रगृह्या अचि नित्यम् ६।१।१२५॥ प्लुताः प्रगृह्याश्च वक्ष्यन्ते, तेऽचि परे नित्यं प्रकृत्या स्युः। एहि कृष्ण ३ अत्र गौश्चरति। हरी एतौ। 'नित्यम्' इति किम्। 'हरी एतौ' इत्यादावयमेव प्रकृतिभावो यथा स्यात्, 'इकोऽसवर्णे'—(सू ९१) इति ह्रस्वसमुच्चितो मा भूत्। (९१) इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६।१।१२७॥ पदान्ता इकोऽसवर्णेऽचि परे प्रकृत्या स्युर्ह्रस्वश्च वा। 'अत्र ह्रस्वविधिसामर्थ्यादेव प्रकृतिभावे सिद्धे तदनुकर्षणार्थश्चकारो न कर्तव्यः'

---

अथ प्रकृतिभाव इति। निरूप्यत इति शेषः। प्लुतप्रगृह्याः। वक्ष्यन्त इति। दूराद्धूते चेत्यादिना ईदूदेदित्यादिना चेत्यर्थः। प्रकृत्येति। प्रकृत्यान्तः पादमित्यतस्तदनुवृत्तेरिति भावः। प्रकृत्या स्वभावेनावस्थिता स्युरित्यर्थः। संधयो न भवन्तीति यावत्। एहि कृष्ण ३ अत्रेति। दूराद्धूते चेति णकारादकारः प्लुतः। तस्य अकारे न सवर्णदीर्घः। हरी एताविति। ईदूदेदिति रेफादीकारः प्रगृह्यः तस्य यणादेशो न भवति। ननु सर्वत्र विभाषेति पूर्वसूत्रे विभाषेत्यस्य अस्वरितत्वादेव निवृत्तिसिद्धेरिह नित्यग्रहणं किमर्थमिति पृच्छति—नित्यमिति किमिति। उत्तरमाह—हरी एताविति। नित्यग्रहणे सत्येव हरी एतावित्यादौ प्लुतप्रगृह्या अचीत्ययमेव केवलः प्रकृतिभावः स्यादित्यर्थः। यथाशब्दो योग्यतायाम्। अयमेव प्रकृतिभावः प्राप्तुं योग्यः। स च नित्यग्रहणे सति प्राप्नुयादित्यर्थः। एवमग्रेऽप्येवंजातीयकेषु। एवशब्दव्यवच्छेद्यं दर्शयति—इक इति। 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इति वक्ष्यमाणो ह्रस्वसमुच्चितः प्रकृतिभावः माभूत् न भवेत्। माङि लुङ् सर्वलकारापवादः। अकृते सति नित्यग्रहणे परत्वात् शाकलह्रस्वसहितप्रकृतिभावः प्रसज्येत। नित्यग्रहणे कृते तु तत्सामर्थ्यादेव परमपि शाकलं ह्रस्वसमुच्चितप्रकृतिभावं प्लुतप्रगृह्या इति केवलः प्रकृतिभावो बाधत इत्यर्थः। इकोऽसवर्णे। इक इति षष्ठी। एङः पदान्तादित्यतः पदान्तादित्यनुवर्तते। तच्च षष्ठ्यन्ततया विपरिणम्यते। अचीति चानुवर्तते। ततश्च पदान्तस्येकः असवर्णेऽचि परे ह्रस्वः स्यादित्येकं वाक्यम्। चकारात् प्रकृत्यान्तःपादम् इत्यतः प्रकृत्येत्यनुकृष्यते। ह्रस्व इति तत्रापि सम्बध्यते। ततश्च उक्तो ह्रस्वः प्रकृत्या स्वभावेन अवतिष्ठत इति वाक्यान्तरं सम्पद्यते। फलितमाह—पदान्ता इक इत्यादिना। यदि चकारो न क्रियेत, तर्हि पदान्तस्य इकः असवर्णेऽचि ह्रस्वः स्यादित्येव लभ्येत। तस्य ह्रस्वस्य प्रकृतिभावो न लभ्येत। ततश्च चक्री अत्रेति स्थिते ईकारस्य ह्रस्वे सति तस्य यणादेशे चक्रयत्रेत्येव स्यात्। चक्रि अत्रेति ह्रस्वसमुच्चितप्रकृतिभावविशिष्टं रूपं न स्यात्। इष्यते तदपि। अतः प्रकृत्येत्यनुकर्षणार्थश्चकार आवश्यक इति सूत्रकारस्य हृदयम्।

इति भाष्ये स्थितम् । चक्रि अत्र–चक्र्यत्र । 'पदान्ताः' इति किम् । गौर्यौ । 'न समासे' ( वा ३६८४ ) । वाप्यश्वः । 'सिति च' ( वा ३६८४ ) । पार्श्वम् ॥

(९२) ऋत्यकः ६।१।१२८॥ ऋति परेऽकः प्राग्वत् । ब्रह्म ऋषिः—ब्रह्मर्षिः ।

---

भाष्यकारमतमाह—अत्र ह्रस्वेति । अत्र चकारो न कर्तव्यः, प्रकृत्येत्यनुकर्षस्य व्यर्थत्वात् । न च विहितस्य ह्रस्वस्य यण्निवृत्त्यर्थः स इति वाच्यम्, ह्रस्वविधिसामर्थ्यादेव यणो निवृत्तिसिद्धेः । अन्यथा यणमेव विदध्यात् । अतः प्रकृत्येत्यनुकर्षणार्थश्चकारो न कर्तव्य इति भाष्ये स्थितमित्यर्थः । चक्रि अत्रेति ह्रस्वसमुच्चितप्रकृतिभावपक्षे रूपम् । तदभावपक्षे तु यणि चक्र्यत्रेति रूपम् । न चात्र ककारस्य 'स्कोः संयोगाद्यो'रिति लोपः शङ्क्यः, अचः परस्मिन्निति यणः स्थानिवत्त्वेन अच्त्वेन पदान्तसंयोगाभावात् । न च पूर्वत्रासिद्धे न स्थानिवदिति तन्निषेधः शङ्क्यः, तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति वचनात् । न समासे । वार्तिकमेतत् । समासे उक्तशाकलविधिर्न भवतीत्यर्थः । वाप्यश्व इति । वाप्यामश्व इति विग्रहः । शौण्डादेराकृतिगणत्वात् सुप्सुपेति वा समासः । सिति च । सकारः इत् यस्य सः सित्, तस्मिन् परे उक्तः शाकलविधिर्न भवतीत्यर्थः । पार्श्वमिति । पर्शु पार्श्वास्थि । पर्शूनां समूहः पार्श्वम् । 'पर्श्वा णस् वक्तव्यः' इति णस् । आदिवृद्धिः । यणादेशः । अत्र पार्शु अ इति स्थिते उक्तः शाकलो विधिर्न भवति । ओर्गुणस्तु न, भस्यैव तद्विधानात् । 'सिति चे'ति पदत्वेन भत्वबाधात् । अचो ञ्णितीति वृद्धिरपि न भवति । आदिवृद्ध्या तद्बाधात् । तथा च सूत्रकारो वक्ष्यति । 'आदिवृद्धिरन्त्योपधावृद्धी बाधते' इति । अत्र 'सिन्नित्यसमासयोः शाकलप्रतिषेधः' इति वार्तिकम् । तदिह द्विधा विभज्य व्याख्यातम् । न चैवं सति वाप्यश्व इत्यत्र कथं शाकलप्रतिषेधः, तत्र समासस्य वैकल्पिकत्वादिति वाच्यम्, भाष्ये नित्यग्रहणस्य प्रत्याख्यातत्वात् ।

ऋत्यकः । अकः इति षष्ठी । शाकल्यस्य ह्रस्वश्चेत्यनुवर्तते । असवर्ण इति निवृत्तम् । एङः पदान्तादित्यतः पदान्तादित्यनुवर्तते । तच्च षष्ठ्यन्ततया विपरिणम्यते । ततः पदान्तस्य अकः ऋति ह्रस्वो वा स्यादित्येकं वाक्यं सम्पद्यते । चकारात् प्रकृत्येत्यनुकृष्यते । उक्तो ह्रस्वः प्रकृत्या अवतिष्ठत इति द्वितीयं वाक्यं सम्पद्यते तदाह—ऋति परे अकः प्राग्वदिति । ब्रह्म ऋषिरिति । ब्रह्मा ऋषिरिति स्थिते आकारस्य ह्रस्वः प्रकृतिभावश्च । ततश्च आद्गुण इति रपरः अकारो न भवति । अत्र आकारस्य इक्त्वाभावादिकोऽसवर्णे इत्यप्राप्ते इदं वचनम् । ब्रह्मर्षिरिति । उक्तह्रस्वसमुच्चितप्रकृतिभावाभावपक्षे आद्गुण इति अकारः । रपरत्वम् । 'ऋत्यस्य' इत्येव तु न सूत्रितम् ।

'पदान्ताः' इत्येव । आर्च्छत् । समासेऽप्ययं प्रकृतिभावः । सप्तऋषीणाम्–सप्तर्षीणाम् ॥ (६३) वाक्यस्य टेः प्लुत उदात्तः ।८।२।८२॥ इत्यधिकृत्य ॥ (६४) प्रत्यभिवादेऽशूद्रे ८।२।८३॥ अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः

होतृ ऋकार इत्यत्र प्रकृतिभावार्थमग्रहणस्यावश्यकत्वात् । पदान्ता इत्येवेति । पदान्तग्रहणमत्राप्यनुवर्तनीयमेवेत्यर्थः । आर्च्छदिति । ऋ गतौ । लङ् तिप् शप् । पाघ्राध्मेति ऋच्छादेशः । इतश्चेति इकारलोपः, आडजादीनामित्याडागमः, आटश्चेति वृद्धिः, आ ऋच्छ् दिति स्थिते आकारस्य अकः पदान्तत्वाभावान्नोक्तः प्रकृतिभावः । न समास इति पूर्वसूत्रस्थं निषेधवार्तिकमिह न सम्बध्यत इत्याह—समासेऽपीति । सप्तऋषीणामिति । 'दिक्सङ्ख्ये संज्ञाया'मिति समासः । सप्तऋषीणामिति प्रकृतिभावपक्षे रूपम् । तदभावपक्षे तु आद्गुण इति गुणे रपत्वे सप्तर्षीणामिति भवति ।

अथ प्लुतप्रगृह्या इति सूत्राकाङ्क्षितप्लुतप्रगृह्ययोर्मध्ये प्रथमोपात्तप्लुतप्रकरणमारभते—वाक्यस्य टेः । पदस्येत्यधिकृतम् । वाक्यस्य टेः पदावयवस्य प्लुतो भवति, स च उदात्तो भवतीत्यर्थः । अत्र पदस्येत्यनुवृत्तिर्नश्छव्यप्रशानित्याद्युत्तरार्था, इहानुवृत्तिविच्छेदे उत्तरत्रानुवृत्तेरसम्भवात् । वाक्यस्येत्यभावे पदस्य टेरित्युक्ते यावन्ति वाक्ये पदानि तावतां टेः प्लुतः प्रसज्येत । वाक्यस्येत्युक्ते तु वाक्यस्य टिरन्त्यस्यैव पदस्य सम्भवतीति न दोषः । टिग्रहणाभावे प्लुतश्रुत्या अचश्चेति परिभाषया अच इत्युपस्थितौ तस्य वाक्यविशेषणत्वात् तदन्तविधौ अजन्तस्य वाक्यस्येत्यर्थे सति अलोऽन्त्यपरिभाषया वाक्यान्तस्याचः प्लुत इति पर्यवसानात् ग्रामं गच्छाग्निचि३त् इत्यादिहलन्तवाक्येषु प्लुतो न स्यात् । टिग्रहणे तु तत्सामर्थ्यादेव टिना अचो विशेषणात् टेरवयवस्याचः प्लुत इत्यर्थो लभ्यत इति न दोष इति भाष्ये स्पष्टम् । इत्यधिकृत्येति । प्लुतविधय आरभ्यन्त इति शेषः । प्रत्यभिवादेऽशूद्रे । वाक्यस्य टेः प्लुत उदात्त इत्यधिकृतम् । अशूद्र इति च्छेदः । न शूद्रः अशूद्रः द्विजातिः तद्विषयः प्रत्यभिवादः विधिवत् अभिवादयमानं प्रति विधिवदाशीर्वचनम् । भावे घञ् । अस्मिन् प्रत्यभिवादे विषये यद्वाक्यं तस्य टेः प्लुतः स्यात् । स चोदात्त इत्यर्थः ।

अभिवादविधिमाह आपस्तम्बः—'दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयीत, उरःसमं राजन्यः, मध्यसमं वैश्यः, नीचैः शूद्रः ।' 'प्राञ्जलिः' इति । 'तिष्ठन् प्रातरभिवादमभिवादयीतासावहं भोः' इति च । असाविति स्वनामनिर्देशोऽभिमतः । देवदत्तोऽहं भोः इति ब्रुवन् अभिवादं आशीर्वचनं अभिवादयीत वक्तव्यत्वेन विज्ञापयेत् । ततश्च यथावर्णं दक्षिणं बाहुं प्रसार्य अभिवादये देवदत्तोऽहं भोः इति ब्रूयादित्यर्थः । अयमभिवादनप्रकारः ।

स्यात्, स चोदात्तः। अभिवादये देवदत्तोऽहम् भोः। आयुष्मान् भव देवदत्त ३। 'स्त्रियां न' (वा ४८६४)। अभिवादये गार्ग्यहम्। भो आयुष्मती भव गार्गि। नाम गोत्रं वा यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्रैव प्लुत इष्यते। नेह आयुष्यमानेधि। भो राजन्य विशां वेति वाच्यम्। (वा० ४८६५) आयुष्मानेधि भोः ३। आयुष्माने-

---

प्रत्यभिवादनप्रकारस्तु मनुना दर्शितः—

'आयुष्मान् भव सौम्येति विप्रो वाच्योऽभिवादने।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः॥' इति।

अत्र नाम्नोऽन्ते इति वचनाद् आयुष्मान् भव सौम्येत्यनन्तरमभिवादयमानस्य नाम सम्बुद्ध्यन्तं प्रयोक्तव्यमिति स्मृत्यन्तरसिद्धमनुगृहीतं भवति। अस्य नाम्नः अन्ते अकारश्च वाच्यः प्रयोज्यः। तस्मादकारात् पूर्वाक्षरः पूर्वः अच् प्लुतः प्रयोक्तव्य इत्यर्थः। एवं च आयुष्मान् भव सौम्य देवदत्त३ अ इति प्रत्यभिवादवाक्यं सम्पन्नमिति स्थितिः। अभिवादये देवदत्तोऽहमिति अभिवादवाक्यप्रदर्शनम्। भोः इत्यस्याप्युपलक्षणम्। आयुष्मान् भव देवदत्त३ इति प्रत्यभिवादवाक्यप्रदर्शनम्। अभिवादये इत्यस्य अभिवादमाशीर्वचनं वक्तव्यत्वेन विज्ञापयामीत्यर्थः। भवेत्यनन्तरं सौम्यशब्दस्य देवदत्त इत्यनन्तरमकारस्याप्युपलक्षणम्। अत्र देवदत्तशब्दे तकारादकारस्य प्लुतः। आयुष्मत्त्वस्य विधेयत्वात् सम्बोधनविभक्त्यभावः। अत्र प्रत्यभिवादवाक्ये शर्मान्तं ब्राह्मणस्येत्यादि न भवति, एचोऽप्रगृह्यस्येति सूत्रे शर्मादिशब्दं विना केवलस्य नाम्नो भाष्ये उदाहरणाद् उक्तमन्वादिस्मृतिविरोधाच्च। अशूद्र इति किम्? 'कुशल्यसि तुषजक' इति भाष्यम्। एवञ्च शूद्रविषये आयुष्मान् भवेति न प्रयोक्तव्यमिति गम्यते। 'अशूद्रस्त्र्यसूयकेष्विति वक्तव्यम्' इति वार्तिकम्। शूद्रविषय एव प्लुतप्रतिषेधो न भवति, किंतु शूद्रवत् स्त्रीविषये असूयकविषयेऽपि प्लुतप्रतिषेधो भवतीति वक्तव्यमित्यर्थः। तत्र शूद्रविषये उदाहृतम्। स्त्रीविषये वार्तिकं विभज्यार्थतः सङ्गृह्णाति—स्त्रियां नेति। स्त्रीविषयकप्रत्यभिवादवाक्ये उक्तो विधिर्न भवतीत्यर्थः। अभिवादये गार्ग्यहमिति अभिवादनवाक्यप्रदर्शनम्। आयुष्मती भव गार्गीति प्रत्यभिवादवाक्यम्, अत्र न प्लुतः। असूयके तु उदाहरणं भाष्ये स्फुटम्। यद्यपि गार्गीति नाम न भवति किं तु गोत्रमेव, तथापि भाष्ये गार्गीशब्दोदाहरणादेव अभिवादप्रत्यभिवादवाक्ययोर्नाम्नो गोत्रस्य च विकल्पः। तदाह—नाम गोत्रं वेति। अत्र नामशब्देन द्वादशेऽहनि पिता नाम कुर्यादिति विहितं नामैव गृह्यते। अत एव आयुष्मान् भव दण्डिन्नित्यादौ प्लुतो नेति भाष्ये स्पष्टम्। नाम गोत्रं वेति परिगणनस्य प्रयोजनमाह—नेहेति। आयुष्मानेधीति। अस्तेस्सिप्, हिः, घ्वसोरित्येत्वं, हेर्धिः। श्नसोरल्लोपः। अत्र धकारादिकारस्य न प्लुतः, अना-

धीन्द्रवर्म ३ न्। आयुष्मानेधीन्द्रपालित ३॥ (९५) **दूराद्धूते च ८।२।८४॥** दूरात्सम्बोधने यद्वाक्यं तस्य टेः प्लुतः स्यात्। सक्तून्पिब देवदत्त ३॥ (९६) **हैहेप्रयोगे हैहयोः ८।२।८५॥** एतयोः प्रयोगे दूराद्धूते यद्वाक्यं तत्र हैहयोरेव प्लुतः स्यात्। है ३ राम। राम है ३॥ (९७) **गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ८।२।८६॥** दूराद्धूते यद्वाक्यं तस्य ऋद्भिन्नस्यानन्त्यस्यापि गुरोर्वा प्लुतः

---

न्त्वादगोत्रत्वाच्च। भोराजन्यविशाम्। भोश्शब्दस्य राजन्यवैश्यवाचकनाम्नोश्च टेः प्लुतो वा स्यादिति वक्तव्यमित्यर्थः। भोश्शब्दस्य अप्राप्ते इतरयोस्तु नामत्वात् प्राप्ते विभाषेयम्। तत्र भोश्शब्दे यथा—आयुष्मानेधि भोः। आयुष्मानेधि देवदत्त भोः' इति भाष्यम्। अत एव प्रत्यभिवादवाक्यान्ते नाम्नोऽनन्तरं भोश्शब्दस्य भवशब्देन एधिशब्दस्य च प्रयोगविकल्पो गम्यते। राजन्ये यथा—आयुष्मानेधि इन्द्रवर्मश्न्, इन्द्रवर्मन्। वैश्ये यथा—आयुष्मनेधि इन्द्रपालित३, इन्द्रपालित इति भाष्यम्। अत एव भाष्यात् प्रत्यभिवादवाक्ये शर्मान्तं ब्राह्मणस्य वर्मान्तं क्षत्रियस्य पालितान्तं वैश्यस्येति विधयोऽपि प्रवर्तन्त इति गम्यते। उक्तभाष्यमन्वादिस्मृतिविरोधाद्विकल्पः। अत्र भाष्ये अपर आहेत्युक्त्वा प्रत्यभिवादे सर्वस्यैव नाम्नो भोश्शब्द आदेशो वक्तव्य इति पठित्वा आयुष्मानेधि भोः इत्येतावदेव सर्वत्र प्रत्यभिवादवाक्यमित्युक्तम्।

दूराद्धूते च। यत्र प्रदेशे स्थितस्य प्रयत्नोच्चारितं शब्दं बोध्यमानो न शृणोति किं त्वधिकं प्रयत्नमपेक्षते तद् दूरम्, हूतमाह्वानं भावे क्तः। तच्च सम्बोधनमिह विवक्षितम्। वाक्यस्य टेः प्लुत उदात्त इत्यधिकृतम्। तदाह—दूरात्सम्बोधन इत्यादिना। यदि तु आह्वानमेवात्र विवक्षितं स्यात् तर्हि एहि देवदत्तेत्यादौ आह्वानवाचकपदे सत्येव स्यात्। सम्बोधनपरत्वे तु तदन्यत्रापि भवतीत्यभिप्रेत्योदाहरति—सक्तूनिति। हैहेप्रयोगे। है हे इत्यव्यये सम्बोधनद्योतके। तयोः प्रयोगे हैहयोः प्लुतः स्यादित्यर्थः। पूर्वसूत्रेण गुरोरनृत इत्यनेन च सिद्धे किमर्थमिदमित्याशङ्क्य नियमार्थमिति व्याचष्टे—हैहयोरेवेति। हैहयोरेवेति नियमार्थमिति भावः। पाहि है३ राम, पाहि हे३ रामेत्यत्र हैहयोरेव प्लुतः, न तु गुरोरनृत इत्यन्त्यस्यापीत्येतत् हैहयोरित्यनेन लभ्यत इति यावत्। प्रयोगग्रहणाभावे वाक्यस्य टेरित्यधिकारात् राम है३ राम हे३ इत्यत्रैव स्यात्। अतः प्रयोगग्रहणम्। ततश्च अनन्त्ययोरपि तयोः प्लुतो भवति। गुरोरनृतोऽनन्त्यस्य। दूराद्धूते चेत्यनुवर्तते। वाक्यस्य टेः प्लुत उदात्त इत्यधिकृतम्। दूरात् सम्बोधने यद्वाक्यं तत्र सम्बोध्यमानवाचकं यत् पदं तदवयवस्य ऋकारभिन्नस्य अनन्त्यस्य गुरोः प्लुतः स्यात्। अन्त्यस्य तु गुरोरगुरोश्च स्यादित्यर्थः, टेः अपिना समुच्चयात्। तदाह—दूरादित्यादिना। दे३वदत्तेत्यादिषु सर्वत्र एहीति शब्दः

स्यात्। दे३वदत्त। देवद३त्त। देवदत्त३। 'गुरोः' किम्। वकारात्परस्याकारस्य माभूत्। 'अनृतः' किम्। कृष्ण ३। एकैकग्रहणं पर्यायार्थम्। इह 'प्राचाम्' इति योगो विभज्यते। तेन सर्वः प्लुतो विकल्प्यते॥ (९८) अप्लुतवदुपस्थिते ६।१।१२९॥ उपस्थितोऽनार्ष इति शब्दः, तस्मिन्परे प्लुतोऽप्लुतवद्भवति ( अप्लुतकार्यं यणादिकं करोतीत्यर्थः )। सुश्लोक ३ इति-सुश्लोकेति। 'वत्' किम्। अप्लुत इत्युक्तेऽप्लुत एव विधीयेत प्लुतश्च निषिध्येत। तथा च प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात्। अग्नी ३ इति॥ (९९) ई३चाक्रवर्मणस्य ।६।१।१३०॥

---

प्रागध्याहर्तव्यः। अन्यथा एकतिङ् वाक्यमिति वाक्यत्वानुपपत्तेः। पर्यायार्थमिति। अन्यथा सर्वेषां गुरूणां युगपत् प्लुतः स्यादिति भावः। इह प्राचामिति। गुरोरनृतोऽनन्त्यस्याप्येकैकस्येत्येकं प्राचामित्यन्यत्। तत्र प्लुत इत्येव अनुवर्तते। प्राचां मते प्लुतः स्यात्, नान्यमते इति फलति। ततः किमित्यत आह—तेनेति। एवं च 'सर्वः प्लुतः साहसमनिच्छता विभाषा वक्तव्य' इति वार्तिकं न कर्तव्यमिति भावः। प्लुतशास्त्रत्यागात्मकं साहसमनिच्छतेत्यर्थः। प्लुतशास्त्रेषु श्रद्धाजाड्यं विहायेति यावत्।

अप्लुतवत्। किमिदमुपस्थितं नाम? अनार्षमितिकरणमिति भाष्यम्। अवैदिक इतिशब्द इत्यर्थः। प्लुत इत्यध्याहार्यम्। अवैदिके इतिशब्दे परे प्लुतः अप्लुतवत् स्यादिति फलति। तदाह—उपस्थितोऽनार्ष इत्यादिना। अप्लुतवद्भावस्य प्रयोजनमाह—प्लुतकार्यं प्रकृतिभावं न करोतीति। अप्लुतकार्यं यणादिकं करोतीति पाठान्तरम्। सुश्लोक३ इतीति। तैत्तिरीये सुश्लोक३ इति प्लुतान्तो मन्त्रः पठितः। पदकाले अवग्रहे तस्मात् परतः इतिशब्दं पदकाराः पठन्ति। तत्र सुश्लोक३ इति इति स्थिते अप्लुतवद्भावेन प्रकृतिभावाभावे सति आद्गुणे सुश्लोकेतीति भवति। अत्र इतिशब्दः पदकारप्रक्षिप्तत्वादवैदिकः। तदेव सुश्लोकेति इत्युदाहरणं भाष्ये स्थितम्। पदकारास्तु सुश्लोक३ इति सुश्लोक३ इति इत्येव अवगृह्णन्ति। तदपि संहितायां अविवक्षितत्वान्निर्वाह्यम्। संहितायामेव यणादिसन्धिविधानात्। वत्किमिति। अप्लुतवदित्यत्र वद्ग्रहणस्य किं प्रयोजनमिति प्रश्नः। उत्तरमाह—अप्लुत इत्युक्त इत्यादिना। वद्ग्रहणं विहाय अप्लुत उपस्थित इत्युक्ते प्लुतस्य स्थाने अप्लुत एव विधीयेत। अतः प्लुत एव निवर्तेत। ततश्च अग्नी३ इत्यत्र सम्बोधनप्रथमाद्विवचनान्तस्यानुकरणे प्रगृह्य ईकारः त्रिमात्रो न श्रूयेत। वत्करणे तु प्लुतकार्यस्य प्रकृतिभावस्यैव निवृत्तिर्गम्यते न तु प्लुतस्यापीति नोक्तदोष इत्यर्थः। ई३चाक्रवर्मणस्य। ई३ इति प्लुतस्य लुप्तप्रथमाविभक्तिको निर्देशः। उपस्थित इत्यस्वरितत्वान्निवृत्तम्। अप्लुतवदित्यनुवर्तते।

ई३कारः प्लुतोऽचि परेऽप्लुतवद्वा स्यात्। चिनु हि ३ इति-चिनु हीति। चिनु हि३ इदम्-चिनुहीदम्। उभयत्र विभाषेयम्॥ (१००) ईदूदेद्द्विवचनं प्रगृह्यम् १।१।११॥ ईदूदेदन्तं द्विवचनं प्रगृह्यसञ्ज्ञं स्यात्। हरी एतौ। विष्णू इमौ। गङ्गे अमू। पचेते इमौ। 'मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इत्यत्र त्विवार्थे वशब्दो वाशब्दो वा बोध्यः। (१०१) अदसो मात् १।१।१२॥ अस्मा-

इको यणचीत्यतः अचीत्यनुवर्तते। चाक्रवर्मणमुनेर्मते ईकारः अचि परे अप्लुतवद्भवति, नत्वन्यमत इत्यर्थः। तदाह—प्लुतोऽचि परेऽप्लुतवद्वेति। चिनु हि३ इदमिति। किं मया कर्तव्यमिति पृष्टस्येदं प्रतिवचनम्। चिनु इति लोडन्तम्। उतश्च प्रत्ययादिति हेर्लुक्। हि इति त्वव्ययम्। 'विभाषा पृष्टप्रतिवचने हेः' इति प्लुतः। चिनु इत्यतः प्राक् देवदत्तेत्यध्याहार्यम्। इदमिति तु वाक्यान्तरस्थम्, न तु चिनु इत्येतेन एकवाक्यतामापन्नम्। अन्यथा वाक्यस्य टेरित्यधिकारात् हिशब्दे इकारस्य प्लुतो न स्यात्। उभयत्रेति। इतिशब्दे परतो नित्यतया प्राप्ते, तदन्यत्र अप्राप्ते चारुभादुभयत्र विभाषेयमित्यर्थः। विभाषाशब्दस्तु अव्ययमिति न भ्रमितव्यम्, नवेति विभाषायामिति भाष्यप्रयोगात्। विभाष्यते विकल्प्यत इति विभाषा। गुरोश्च हल इत्यप्रत्ययः। टाप्।

ईदूदेद्द्विवचनम्। ईच्च ऊच्च एच्चेति समाहारद्वन्द्वः। ईदूदेदिति द्विवचनविशेषणत्वात्तदन्तविधिः। द्विवचनमित्यनेन तु प्रत्ययत्वेऽपि न तदन्तं गृह्यते, संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति तन्निषेधात्। तदाह—ईदूदेदन्तमित्यादिना। हरी एताविति। अत्र ईकारस्य परादिवत्त्वाश्रयणाद् द्विवचनत्वम्। प्रगृह्यत्वे सति प्लुतप्रगृह्या इति प्रकृतिभावान्न यण्। विष्णू इमावित्यत्राप्येवम्। गङ्गे अमू इत्यत्र तु अयादेशो न भवति। ईदूदेदन्तमिति तदन्तविधेः प्रयोजनं दर्शयितुमाह—पचेते इमाविति। तदन्तविध्यभावे ईदूदेदात्मकं द्विवचनं प्रगृह्यमिति लभ्येत। एवं सति पचेते इत्यत्र इते इति द्विवचनस्य एद्रूपत्वाभावात् प्रगृह्यत्वं न स्यादिति भावः। ईदूदेदन्तं यद् द्विवचनान्तमिति व्याख्याने तु कुमार्योरगारं कुमार्यगारमित्यत्रातिप्रसङ्गः स्यात्। ईदूदेदन्तं द्विवचनमिति व्याख्याने तु नातिप्रसङ्गः। ओसो द्विवचनस्य ईदूदेदन्तत्वाभावात्। ननु 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इति भारतश्लोके मणी इवेति ईकारस्य प्रगृह्यत्वे सति प्रकृतिभावे सवर्णदीर्घो न स्यादित्यत आह—मणीवोष्ट्रस्येत्यादिना। 'वं प्रचेतसि जानीयादिवार्थे च तदव्ययम्।' इति मेदिनी। 'व वा यथा तथैवैवं साम्ये' इत्यमरः।

अदसो मात्। अदस इत्यवयवषष्ठी। अदश्शब्दावयवान्मकारादित्यर्थः। ईदूदिति प्रगृह्यमिति चानुवर्तते। मादिति दिग्योगे पञ्चमी। परशब्दोऽध्याहार्यः। तदाह—

त्परावीदूतौ प्रगृह्यौ स्तः। अमी ईशाः। रामकृष्णावमू आसाते। 'मात्' किम्। अमुकेऽत्र। असति माद्ग्रहणे एकारोऽप्यनुवर्तेत॥ (१०२) शे १।१।१३॥ अयं

अस्मात् पराविति। अदश्शब्दावयवमकारात् परावित्यर्थः। एदिति नानुवर्तते, अदश्शब्दे मकारात् परस्य एकारस्यासम्भवात्। द्विवचनमित्यपि नानुवर्तते, अदश्शब्दे मकारात् परस्य ईकारस्य अमी इति बहुवचनत्वाद् ऊकारस्य च मकारात्परस्य तत्र द्विवचनान्तेष्वेव सत्त्वेन व्यावर्त्याभावात्। अमी ईशा इति। अदश्शब्दाज्जसि त्यदाद्यत्वं पररूपत्वं जसश्शी आद्गुणः। अदे इति स्थिते एकारस्य एत ईदिति ईत्त्वं दस्य च मत्वम्। अमी इति रूपम्। अत्र ईकारस्य द्विवचनत्वाभावात् पूर्वसूत्रेण प्रगृह्यसंज्ञा न प्राप्तेत्यनेन सा विधीयते। रामकृष्णावमू इति। पुंलिङ्गाददश्शब्दात् प्रथमाद्विवचने औङि, त्यदाद्यत्वं, पररूपत्वं वृद्धिरेचि, अदौ इति स्थिते, अदसोऽसेरित्यौकारस्य ऊत्वम्, दस्य मत्वम्। अमू इति रूपम्। यद्यप्ययमूकारो द्विवचनं भवति, तथापि पूर्वसूत्रेण प्रगृह्यत्वे कर्तव्ये उत्वमत्वयोरसिद्धतया दकारादौकारस्यैव शास्त्रदृष्ट्या सत्त्वात् पूर्वसूत्रेण तस्य प्रगृह्यत्वं न प्राप्तमित्यनेन विधीयते। अदसोमादिति सूत्रं प्रति तु उत्वमत्वे नासिद्धे, आरम्भसामर्थ्यात्। पूर्वसूत्रस्य तु तत्र न सामर्थ्यम्। हरी एतौ, विष्णू इमावित्यादौ चरितार्थत्वात्। स्त्रियौ फले वा अमू आसाते इति स्त्रीलिङ्गो नपुंसकलिङ्गश्च अदश्शब्दो नात्रोदाहरणम्। तथा हि स्त्रीलिङ्गाददश्शब्दात् औङि, त्यदाद्यत्वे, पररूपत्वे, टापि, औङ आप इति शीभावे, आद्गुणे, अदे इति स्थिते उत्वमत्वयोरमू इति रूपम्। तथा नपुंसकलिङ्गात्तस्मादौङि, त्यदाद्यत्वे, पररूपत्वे, नपुंसकाच्चेति शीभावे, आद्गुणे, उत्वमत्वयोरमू इत्येव रूपम्। अत्र पूर्वसूत्रेणैव प्रगृह्यत्वं सिद्धम्। उत्वमत्वयोरसिद्धत्वेऽप्येकारस्य द्विवचनस्य सत्त्वात्। अतः पुंलिङ्ग इव अदश्शब्दः अत्रोदाहणमिति प्रदर्शयितुं रामकृष्णावित्युक्तम्। मादिति किमिति। अदस इत्येव सूत्रमस्तु। माद्ग्रहणस्य किं प्रयोजनमिति प्रश्नः। अमुकेऽत्रेति। 'अव्ययसर्वनाम्नाकच् प्राक्टेः' इत्यकचि अदकश्शब्दाज्जसि, त्यदाद्यत्वं, पररूपत्वम्, जसश्शी, आद्गुणः, उत्वमत्वे, अमुके इति रूपम्। अत्र एकारस्य प्रगृह्यत्वनिवृत्त्यर्थं माद्ग्रहणम्। कृते च तस्मिन् एकारस्य मात्परत्वाभावाच्च प्रगृह्यत्वमिति भावः। नन्वेवमपि माद्ग्रहणं व्यर्थम्, एद्ग्रहणमननुवर्त्य ईदूतोरेवात्र प्रगृह्यत्वविधानाभ्युपगमेन अमुके इत्यत्र प्रगृह्यत्वप्रसक्तेरेवाभावादित्यत आह—असतीति। अदसो मादित्यत्र ईदूदेतास् एकसमासपदोपात्तानां मध्ये ईदूतोर्द्वयोरनुवृत्तौ एतोऽप्यनुवृत्तिप्रसक्तौ माद्ग्रहणादेतोऽनुवृत्तिः प्रतिबद्धा। माद्ग्रहणाभावे तु बाधकाभावादेतोऽप्यनुवृत्तिः स्यात्। ततश्च अमुक इत्यत्रापि एकारस्य प्रगृह्यत्वप्रसक्तौ तन्निवृत्त्यर्थं माद्ग्रहणम्। कृते तु तस्मिन् एतोऽनुवृत्तिप्रतिबन्धादमुके इत्यत्र न प्रगृह्यत्वम्। तथा च एकाराननुवृत्ति-

प्रगृह्यः स्यात्। अस्मे इन्द्राबृहस्पती। (१०३) **निपात एकाजनाङ् १।१।१४॥** एकोऽज्निपात आङ्वर्जः प्रगृह्यः स्यात्। इ विस्मये। उ वितर्के। इ इन्द्रः। उ उमेशः। 'अनाङ्' इत्युक्तेरङिदाकारः प्रगृह्य एव। आ एवं नु मन्यसे। आ एवं किल तत्। ङित्तु न प्रगृह्यः। ईषदुष्णं ओष्णम्। 'वाक्यस्मरणयोरङित्'। 'अन्यत्र ङित्' इति विवेकः॥ (१०४) **ओत् १।१।१५॥** ओदन्तो निपातः प्रगृह्यः स्यात्। अहो ईशाः॥ (१०५) **सम्बुद्धौ शाकल्यस्येतावनार्षे १।१।१६॥**

---

फलकं साद्ग्रहणमिति भावः। शे। एकपदं सूत्रम्। प्रगृह्यमित्यनुवर्तते। छन्दसीत्यनुवृत्तौ 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' इति विहितः शे इत्येकारान्त आदेशः प्रगृह्यः स्यादित्यर्थः। तदाह—अयमिति। शे आदेश इत्यर्थः। अस्मे इति। अस्मभ्यमित्यर्थः। भ्यसः शे आदेशः, लशक्वतद्धित इति, शकार, इत्, शेषे लोपः अस्मे इति रूपम्। अद्विवचनत्वादप्राप्तौ वचनम्। यद्यपि छान्दसमिदं वैदिकप्रक्रियायामेव निबन्ध्यम्, तथापि अस्मे इति त्वे इति इत्याद्यवग्रहे लोकार्थत्वस्यापि सत्त्वादिह तन्निबन्धनम्, पदपाठस्याधुनिकत्वात्।

निपात एकाच्। प्रगृह्यमित्यनुवर्तते। पुंलिङ्गतया च विपरिणम्यते। एकश्चासावच्चेति कर्मधारयः। तदाह—एकोऽजित्यादिना। इ विस्मये इति। इ इति चादित्वान्निपातः। स च आश्चर्ये वर्तत इत्यर्थः। इ इन्द्रः। उ उमेशः। इ इति उ इति निपातः सम्बोधने। उभयोरपि एकाच्त्वान्निपातत्वाच्च प्रगृह्यत्वान्न सन्धिः। अनाङित्यत्र ङकारानुबन्धस्य प्रयोजनमाह—अनाङित्युक्तेरिति। आ एवमिति। पूर्वप्रक्रान्तवाक्यार्थस्य अन्यथात्वद्योतकोऽयमाकारः। पूर्वमित्थं नामंस्थाः, इदानीं त्वेवं मन्यसे इत्यर्थः। आ एवमिति। स्मरणद्योतकोऽयमाकारः। इहोभयत्रापि आकारस्य ङित्त्वाभावान्न पर्युदासः। ङित्त्विति। ङित्तु आकारः प्रगृह्यो न भवति अनाङिति पर्युदासादित्यर्थः। ओष्णमिति। आ उष्णमित्यत्र आकारस्य ङित्त्वात् प्रगृह्यत्वाभावे सति आद्गुणः। ननु प्रयोगदशायां ङकारस्याश्रवणाविशेषात् ङिदङिद्विवेकः कथमित्यत आह—वाक्येति। प्रक्रान्तवाक्यार्थस्यान्यथात्वे स्मरणे च अङित्। अन्यत्र। ईषदाद्यर्थे गम्ये ङिदिति। विवेकः—भेदोऽवगन्तव्य इत्यर्थः। तथा च भाष्यम्—

'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित्' इति॥

एकः अच् यस्येति बहुव्रीहिस्तु नाश्रितः। तथा सति प्रेदमित्यादावतिप्रसङ्गात्। ओत्। निपात इत्यनुवर्तते। ओदिति तस्य विशेषणम्। अतस्तदन्तविधिः। प्रगृह्यमित्यनुवर्तते। पुंलिङ्गतया च विपरिणम्यते। तदाह—ओदन्त इत्यादिना। अहो ईशा

सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिक इतौ परे। विष्णो इति-विष्ण इति विष्णविति। अनार्षे इति किम्। ब्रह्मबन्धवित्यब्रवीत्॥ (१०६) उञः १।१।१७॥ उञ इतौ वा प्रागुक्तम्। उ इति-विति॥ (१०७) ऊँ १।१।१८॥ उञ इतौ दीर्घोऽनुनासिकः प्रगृह्यश्च ऊँ इत्ययमादेशो वा स्यात्। ऊँ इति-विति॥ (१०८) मय उञो वो वा ८।३।३३॥ मयः परस्य उञो वो वा स्यादचि। किमु उक्तम्, किम्वुक्तम्। वस्यासिद्धत्वान्नानुस्वारः॥ (१०९) ईदूतौ च सप्तम्यर्थे १।१।१९॥

इति। अनेकाच्त्वात् पूर्वसूत्रेण अप्राप्तौ वचनम्। सम्बुद्धौ शाकल्यस्य। सम्बुद्धाविति निमित्तसप्तमी ओदित्यनुवृत्तेन अन्वेति। प्रगृह्यमित्यनुवर्तते' पुंल्लिङ्गतया च विपरिणस्यते। ऋषिर्वेदः, तदुक्तमृषिणेत्यादौ तथा दर्शनात्। ऋषौ भवः आर्षः, न आर्षः। अनार्षः, अवैदिके इति शब्दे परत इत्यर्थः। शाकल्यग्रहणाद्विकल्पः। तदाह—सम्बुद्धिनिमित्तक इत्यादिना। विष्णो इतीति। अत्र आकारः ह्रस्वस्य गुण इति सम्बुद्धिनिमित्तकः। अत्र ओदन्तत्वेऽपि निपातत्वाभावादप्राप्ते विभाषेयम्। विष्णवितीति प्रगृह्यत्वाभावे रूपम्।

उञः। एकपदं सूत्रम्। शाकल्यस्य इतौ प्रगृह्यमिति चानुवर्तते। उ इति ञित् उकारः निपातः। तस्य इति शब्दे परे शाकल्यमते प्रगृह्यसंज्ञा स्यादित्यर्थः। तदाह—उञ इतौ वा प्रागुक्तमिति। पूर्वोक्तं प्रगृह्यत्वमित्यर्थः। उ इति वितीति। निपात एकाजिति नित्यं प्राप्ते विकल्पोऽयम्। प्रगृह्यत्वपक्षे प्रकृतिभावे प्रथमं रूपम्। तदभावपक्षे यणादेशे द्वितीयं रूपम्। ऊँ इदमप्येकपदं सूत्रम्। ऊँ इति दीर्घस्य अनुनासिकस्य ऊकारस्य लुप्तप्रथमाविभक्तिकस्य निर्देशः। उञ इत्यनुवर्तते इतौ शाकल्यस्य प्रगृह्यमिति च। तदाह—उञ इतावित्यादिना। ऊँ इतीति। उक्तविधे ऊँकारादेशे रूपम्। प्रगृह्यत्वात् प्रकृतिभावः। एतदादेशाभावपक्षे पूर्वसूत्रेण प्रगृह्यत्वे सति उ इतीति रूपम्। प्रगृह्यत्वस्याप्यभावे सति यणादेशे वितीति रूपमिति त्रीणि रूपाणि फलितानि। तदेवम् उञ ऊँ इत्येकमेव सूत्रं विभज्य व्याख्यातम्। एकसूत्रत्वे तु उञः इतौ परे ऊँ इत्ययं दीर्घोऽनुनासिकः प्रगृह्यश्चादेशः शाकल्यमते स्यात्। तदभावपक्षे तु 'निपात एकाजि'ति नित्यं प्रगृह्यत्वमित्येतावल्लभ्येत। ततश्च ऊँ इति उ इतीति पदद्वयमेव स्यात्, वितीति रूपं न लभ्येत। अतो विभज्य व्याख्यातम्। मय उञो वो वा। मय इति पञ्चमी उञ इति षष्ठी 'ङमो ह्रस्वादचि' इत्यतः अचीत्यनुवर्तते। तदाह—मयः परस्येत्यादिना। किम्वुक्तमिति। किमु उक्तमिति स्थिते मकारादुकारस्य उञो 'निपात एकाच' इति नित्यं प्रगृह्यत्वाद् प्रकृतिभावात् यणभावे प्राप्ते वत्ववचनमिदम्। ननु तर्हि इको यणचीत्यनन्तरमेव मय उञो वेति पठितव्यम्। वग्रहणाभावेन लाघवात्। त्रिपाद्यां पाठे वग्रहणस्यापि कर्तव्यत्वेन गौरवादित्यत आह—वस्येति। यदि षष्ठस्य

सप्तम्यर्थे पर्यवसन्नमीदूदन्तं प्रगृह्यं स्यात्। सोमो गौरी अधिश्रितः। मामकी तनू इति। 'सुपां सुलुक्—' (सू २५६१) इति सप्तम्या लुक्। अर्थग्रहणं किम्। वृत्तावर्थान्तरोपसङ्क्रान्ते मा भूत्। वाप्यामश्वो वाप्यश्वः॥ (११०) अणोऽप्रगृ-

प्रथमे पादे इको यणचीत्यत्रैव सय उञो यणादेशविकल्पो विधीयेत, तर्हि किमुक्तमित्यत्र मोऽनुस्वार इति मकारस्य वकारे परे अनुस्वारः स्यात्। त्रिपाद्यां वत्वविधौ तु तस्यासिद्धत्वान्नानुस्वारः। त्रिपाद्यामनुस्वारविध्यपेक्षया वत्वविधेः परत्वादिति भावः।

ईदूतौ च। प्रगृह्यमित्यनुवर्तते। तच्च द्विवचनान्ततया विपरिणम्यते। शब्दस्वरूपस्य विशेष्यत्वात्तदन्तविधिः। ईदूतौ च सप्तम्यावित्येव सिद्धे अर्थग्रहणाद्यत्र सप्तम्या लुकि 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन प्रकृतेरेव सप्तम्यर्थे पर्यवसानं तथाविधत्वमीदूदन्तयोर्गम्यते। तथा च सप्तम्यर्थे पर्यवसन्नावीदूदन्तौ शब्दौ प्रगृह्यौ स्त इत्यक्षरार्थः। फलितमाह—सप्तम्यर्थ इत्यादिना। सोमो गौरी अधिश्रित इति। गौर्यामित्यर्थः। 'सुपां सुलुगि'ति सप्तम्या लुक्। प्रगृह्यत्वे प्रकृतिभावान्न यण्। वातप्रमीत्यादिसप्तम्यन्तं तु नात्रोदाहरणम्, तत्र सप्तम्या लुप्तत्वाभावेन प्रकृतेः सप्तम्यर्थे अप्रवृत्तेः। मामकी तनू इति। मामक्यां तन्वामित्यर्थः। सुपां सुलुगिति सप्तम्या लुक्। प्रगृह्येभ्यः परत इतिशब्दप्रयोगस्य पदकारैर्नियमितत्वात् पदपाठे मामकी इति तनू इतीत्यत्र प्रगृह्यत्वफलं बोध्यम्। ननु 'ईदूतौ च सप्तम्याः' इत्येव सूत्र्यताम्। षष्ठ्या च अर्थद्वारा सम्बन्धो विवक्ष्यताम्। ततश्च सप्तम्यर्थे विद्यमानमीदूदन्तमित्यर्थस्य अर्थग्रहणं विनैव लाभादर्थग्रहणं किमर्थमिति पृच्छति—अर्थग्रहणं किमिति। कस्मै प्रयोजनायेत्यर्थः। किमित्यव्ययम्। वृत्ताविति। अर्थग्रहणसामर्थ्यात् लुप्तसप्तम्यर्थमात्रे पर्यवसन्नमित्यर्थो विवक्षितः। ततश्च समासवृत्तौ लुप्तसप्तमीके ईदूदन्तपूर्वपदे सप्तम्यर्थमतिलङ्घ्य उत्तरपदार्थे प्रवृत्ते सति प्रगृह्यसञ्ज्ञा न भवति। मा भूदिति। माङि लुङ्। सर्वलकारापवादः। वाप्यामश्वो वाप्यश्व इति। वाप्याम् अश्व इति विग्रहे सुप्सुपेति समासे वाप्यश्व इति रूपमित्यर्थः। अत्र वाप्यामिति सप्तम्या अधिकरणत्वमवगतम्। तच्चाधिकरणकारकं क्रियापेक्षम्। तत्र वाप्यामश्वो वर्तत इति क्रियाध्याहारे वर्तमानक्रियायां वाप्या अधिकरणत्वेन अश्वस्य कर्तृत्वेनान्वयात्तयोः परस्परमन्वयाभावादसामर्थ्यात् समासो नोपपद्यते। वाप्यां विद्यमानोऽश्व इति विद्यमानपदस्याध्याहारेऽपि अश्वपदेनासामर्थ्यात् समासो न सम्भवति। अतः वाप्यामित्यस्य वाप्यां विद्यमाने अश्वे लक्षणया प्रवृत्तिं पुरस्कृत्य समासो वक्तव्यः। एवं च समासे लुप्तसप्तमीकस्य वापीशब्दस्य सप्तम्यर्थमतिलङ्घ्य तत्संसृष्टे आधेयभूते अश्वेऽपि प्रवृत्तेः सप्तम्यर्थमात्रविश्रान्त्यभावान्न प्रगृह्यत्वमिति भावः। अणोऽप्रगृह्यस्य।

ह्रस्यानुनासिकः ८।४।५७॥ अप्रगृह्यस्याणोऽवसानेऽनुनासिको वा स्यात्। दधिँ दधि। 'अप्रगृह्यस्य' किम्। अग्नी॥

॥ इत्यच्सन्धौ प्रकृतिभावप्रकरणम्॥



## अथ हल्सन्धिप्रकरणम्॥ ५॥

(१११) स्तोः श्चुना श्चुः ८।४।४०॥ सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः। हरिश्शेते। रामश्चिनोति। सच्चित्। शार्ङ्गिञ्जय॥

वा अवसाने इत्यनुवर्तते। तदाह—अप्रगृह्येत्यादिना। अत्र अण् पूर्वेणैव णकारेण व्याख्यानात्। ततश्च कर्तृ इत्यत्र नानुनासिकः। इत्यच्सन्धीनि। अल्पाच्तरमिति, सिद्धमनच्त्वादिति, कथमनच्त्वमिति च सूत्रवार्तिकभाष्यप्रयोगादेवंजातीयस्थलेषु असन्देहार्थं सन्ध्यभावोऽभ्यनुज्ञातः। अतोऽत्र कुत्वश्चुत्वयोरभावेऽपि न दोषः।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायाम् अच्सन्धौ प्रकृतिभावप्रकरणं समाप्तम्।

स्तोः श्चुना श्चुः। स् च तुश्चेति समाहारद्वन्द्वः। पुंस्त्वमार्षम्। इतरेतरयोगद्वन्द्वो वा। तथा सत्येकवचनमार्षम्। एवं श्चुना श्चुरित्यत्रापि। श्चुनेति। सहार्थे तृतीया। योगे इत्यध्याहार्यम्। ततश्च सहशब्दयोगाभावेऽपि तदर्थस्य गम्यत्वात्तृतीया युज्यते, अस्मादेव निर्देशात्। तदाह—सकारतवर्गयोरित्यादिना। अत्र स्थान्यादेशानां यथासङ्ख्यं भवति। ततश्च सकारस्य शकारः, तवर्गस्य चवर्गः। तत्रापि त थ द ध नानां क्रमेण च छ ज झ ञा इति फलितम्। त थ द ध नेत्यादिक्रमस्याप्यनादिलोकसिद्धत्वात्। श्चुना योगे इत्यत्र न यथासङ्ख्यमित्युत्तरसूत्रे वक्ष्यते। ततश्च सकारस्य तवर्गस्य शकारेण चवर्गेण च यथासम्भवं योगे श्चुत्वं भवति। हरिश्शेते इति। हरिस् शेत इति स्थिते, शकारेण योगात् सकारस्य शकारः। 'श्चुना योगे इत्यत्र न यथासङ्ख्य'मित्यस्य प्रयोजनं दर्शयितुं सकारस्य चकारयोगेऽप्युदाहरति—रामश्चिनोतीति। रामस् चिनोतीति स्थिते, चवर्गयोगात् सकारस्य शकारः। श्चुना योगे इत्यत्रापि यथासंख्याश्रयणे तु इह सकारस्य शकारयोगाभावात् शकारो न स्यादिति भावः। सच्चिदिति। सत् चित् इति स्थिते, श्चुत्वस्यासिद्धत्वात् जश्त्वेन तकारस्य दत्वे, तस्य श्चुत्वेन जकारे, 'खरि चे'ति चर्त्वेन तस्य चकारे च रूपम्। शार्ङ्गिन् जयेति

**(११२) शात् ८।४।४४** । शात्परस्य तवर्गस्य श्चुत्वं न स्यात् । विश्नः, प्रश्नः ॥ **(११३) ष्टुना ष्टुः ८।४।४१॥** स्तोः ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे ॥ **(११४) न पदान्ताट्टोरनाम् ८।४।४२॥** 'अनाम्' इति लुप्तषष्ठीकं पदम् । पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात् । षट् सन्तः । षट् ते । 'पदान्तात्' किम् । ईट्टे । 'टोः' किम् । सर्पि-

---

स्थिते, चवर्गयोगात् नकारस्य श्चुत्वं ञकारः । शात् । न पदान्तादिति पूर्वसूत्राद् नेत्यनुवर्तते । स्तोः श्चुना श्चुरित्यतः तोरिति, चुरिति चानुवर्तते । न तु सकारः शकारश्च । शादिति दिग्योगे पञ्चमी । परस्येत्यध्याहार्यम् । तदाह—शात्परस्येत्यादिना । विश्न इति । विच्छ गतौ । 'यज याच यत विच्छ प्रच्छ रक्षो नङ्' इति नङ् । छ्वोः शूड्' इति छस्य शः । ङित्वान्न गुणः । अत्र शकारयोगात् तवर्गीयनकारस्य श्चुत्वेन ञकारे प्राप्ते निषेधः । पूर्वसूत्रे श्चुना योगे इत्यत्रापि यथासङ्ख्याश्रयणे तु इह तवर्गीयस्य नस्य चुना योगाभावेन चुत्वस्याप्रसक्ततया तन्निषेधो व्यर्थः स्यात् । एवञ्च अस्मादेव निषेधात् पूर्वसूत्रे श्चुना योगे इत्यत्र न यथासङ्ख्याश्रयणमिति विज्ञायते । प्रश्न इति । प्रच्छ ज्ञीप्सायाम् । पूर्ववत् नङादि । अत्र 'ग्रहिज्या' इति सम्प्रसारणं न । 'प्रश्ने चासन्नकाले' इत्यादिनिर्देशात् । अत्र वर्गपञ्चमानां नासिकास्थानाधिक्येऽपि तत्तद्वर्गीयैरस्ति सावर्ण्यमिति तुल्यास्यसूत्रे अवोचाम । ष्टुना ष्टुः । स्तोरित्यनुवर्तते । तदाह—स्तोरिति । अत्रापि स्थान्यादेशानां यथासङ्ख्यम् । न तु ष्टुयोगे इत्यत्र । रामष्षष्ठ इति । रामस् षष्ठ इति स्थिते षकारयोगात् । सस्य ष्टुत्वेन षः । अत्रापि ष्टुना योग इत्यत्र न यथासङ्ख्यमित्यस्य प्रयोजनं दर्शयितुं सकारस्य टवर्गयोगेऽपि उदाहरति—रामष्टीकत इति । टीकृ गतौ । तट्टीकेति । तस्य टीकेति विग्रहः । तद् टीका इति स्थिते टुत्वेन तस्य डत्वे चर्त्वम् । चक्रिण्ढौकस इति । ढौकृ गतौ । चक्रिन् ढौकसे इति स्थिते टवर्गयोगाद् नस्य टुत्वेन णत्वम् ।

न पदान्तात् । अनामिति तोरित्यस्य विशेषणम् । ननु भिन्नविभक्तिकमेतत्कथं तद्विशेषणमित्यत आह—अनामिति लुप्तषष्ठीकमिति । नामवयवभिन्नस्येत्यर्थः । स्तोः ष्टुरित्यनुवर्तते । तदाह—पदान्तादित्यादिना । ईट्टे इति । 'ईड् स्तुतौ' आत्मनेपदी । ईड् ते इति स्थिते, खरि चेति डस्य चर्त्वम् , ततः परस्य तकारस्य टुत्वम् । तस्य टवर्गात् परत्वेऽपि पदान्तात् परत्वाभावाद् न टुत्वनिषेधः । सर्पिष्टममिति । सर्पिष् तमम् इति स्थिते स्वादिष्वसर्वनामस्थान इति अन्तर्वर्तिनीं विभक्तिमाश्रित्य वा पदत्वात् , षकारस्य पदान्तत्वात्ततः परस्य तकारस्य टुत्वनिषेधो न भवति, पदान्ताट्टवर्गात्परत्वाभावात् । न च षकारस्य 'झलाञ्जशोऽन्ते' इति जश्त्वेन डकारे सति तकारस्य

ष्टमम् । 'अनाम्नवतिनगरीणामिति वाच्यम्' ( वा ५०१६ )। षण्णाम् । षण्णवतिः । षण्णगर्यः । **(११५) तोः षि ८।४।४३॥** तवर्गस्य षकारे परे न ष्टुत्वम् । सन्षष्ठः । 'झलां जशोऽन्ते' ( सू ८४ )। वागीशः । चिद्रूपम् ॥ **(११६) यरोऽनुनासिकेऽनुनासिको वा ८।४।४५॥** यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः—एतद्मुरारिः । स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्तते । चतुर्मुखः । 'प्रत्यये भाषायां नित्यम्' ( वा

---

टोः परत्वात् टुत्वनिषेधः स्यादेवेति वाच्यम् । 'ह्रस्वात्तादौ तद्धिते' इति षत्वस्यासिद्धत्वेन जश्त्वाभावात् । इह आदेशप्रत्यययोरिति षत्वं तु न भवति । 'अपदान्तस्य मूर्धन्यः' इत्यधिकारात् । अनाम्नवति । ष्टुत्वप्रतिषेधे नाम एव पर्युदासो न भवति, किन्तु नवतिनगरीशब्दावयवनकारस्यापि पर्युदासो वक्तव्य इत्यर्थः । षण्णामिति । षष् नामिति स्थिते 'स्वादिष्वसर्वनामस्थाने' इति पदान्तत्वात् षस्य जश्त्वेन डकारे 'प्रत्यये भाषायां नित्यम्' इति तस्य णकारः । अत्र टवर्गयोगाद् नकारस्य टुत्वम् । न पदान्तादिति निषेधस्तु न, अनामिति पर्युदासात् । षण्णवतिरिति । षडधिका नवतिरिति विग्रहः। अत्रापि न कारस्य न टुत्वनिषेधः, नवतिशब्दस्यापि पर्युदासात्। षण्णगर्य इति । पृथक् पदे । न तु कर्मधारयः, 'दिक्संख्ये संज्ञायाम्' इति नियमात् । अत्रापि न पदान्तादिति नगरीशब्दे नकारस्य टुत्वनिषेधो न भवति, नगरीशब्दस्यापि पर्युदासात् । तोः षि । ष्टुरिति नेति चानुवर्तते । तदाह—तवर्गस्येति। सन्षष्ठ इति । अत्र नकारस्य षकारयोगात् टुत्वं प्राप्तं निषिध्यते । अस्मादेव ज्ञापकात् ष्टुना ष्टुरित्यत्र ष्टुना योगे इत्यत्र यथासंख्यं नेति विज्ञायते । 'झलाञ्जशोऽन्ते' इत्यच्सन्धिनिरूपणे प्रसङ्गादुपन्यस्तम् । हल्सन्धिप्रस्तावे पुनस्तदुपन्यासः ।

यरोऽनुनासिके । न पदान्ताट्टोरित्यतः पदान्तादित्यनुवर्तते । तच्च षष्ठ्यन्ततया विपरिणस्यते । तदाह—यरः पदान्तस्येति । एतन्मुरारिरिति कर्मधारयः । एतद् मुरारिरिति स्थिते दस्य अनुनासिको नकारः दन्तस्थानसाम्यात् स्पृष्टप्रयत्नसाम्याच्च । ननु चतुर्मुख इत्यत्रापि रेफस्य अनुनासिको णकारः स्यात् , रेफणकारयोः स्पृष्टेषत्स्पृष्टप्रयत्नभेदेऽपि मूर्धस्थानान्तर्यादित्यत आह—स्थानेति । एतन्मुरारिरित्यादौ स्थानतः प्रयत्नतश्चान्तरतमे स्पर्शे चरितार्थे लब्धप्रयोजनोऽयमनुनासिकविधिः स्थानमात्रेण आन्तर्यमादाय रेफे न प्रवृत्तिमर्हतीत्यर्थः । 'यूनि लब्धे तु युवतिर्जरठे रमते कथम्' इति न्यायादिति भावः । प्रत्यये भाषायां नित्यम् । वार्तिकमेतत् । भाषा लौकिकप्रयोगः । तत्र प्रत्यये विद्यमाने अनुनासिके परतः प्रागुक्तोऽनुनासिको नित्यं

५०१७) तन्मात्रम्। चिन्मयम्। कथं तर्हि 'मदोदग्राः ककुद्मन्तः' इति? यवादि (ग २५०) गणे दकारनिपातनात्। (११७) तोर्लि ८।४।६०॥ तवर्गस्य लकारे परे परसवर्णः स्यात्। तल्लयः। विद्वाँल्लिखति। नकारस्यानुनासिको लकारः। (११८) उदः स्थास्तम्भोः पूर्वस्य ८।४।६१॥ उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात्। 'आदेः परस्य' (सू ४४)। उत्थानम्। उत्तम्भनम्।

---

भवतीत्यर्थः। तन्मात्रमिति। तत् प्रमाणं यस्य तत्तन्मात्रं 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति मात्रच्प्रत्ययः। चिन्मयमिति। 'नित्यं वृद्धशरादिभ्यः' इत्यत्र नित्यमिति योगविभागात्ताद्रूप्ये मयट्। कथं तर्हीति। यदि प्रत्यये परे नित्यमनुनासिकः स्यात् तदा मदोदग्राः ककुद्मन्त इति कालिदासप्रयोगः कथमित्याक्षेपः। मतुपः प्रत्ययत्वेन तस्मिन् परे दकारस्य अनुनासिकनकारावश्यम्भावादिति भावः। परिहरति—यवादीति। यवादिगणे ककुद्मच्छब्दे दकारस्य निर्देशान्न तस्यानुनासिकः। यदि तत्र दकारस्य नकार एव इष्टः स्यात् तर्हि नकारमेव लाघवान्निर्दिशेदिति भावः। तोर्लि। अनुस्वारस्य ययीत्यतः परसवर्ण इत्यनुवर्तते। तदाह—तवर्गस्येत्यादिना। तल्लय इति। तस्य लय इति विग्रहः। तद् लय इति स्थिते दस्य परसवर्णः परनिमित्तभूतलकारसवर्णो भवति। स च लकार एव, अन्यस्य तत्सावर्ण्याभावात्। नकारस्येति विद्वाँल्लिखतीत्यत्र विद्वान् लिखतीति स्थिते नकारस्य स्थानिनः अनुनासिकस्य परसवर्णो लकारो भवन् आन्तर्यादनुनासिक एव लकारो भवतीत्यर्थः।

उदः स्थास्तम्भोः। 'अनुस्वारस्य ययि परसवर्णः' इत्यत्र समासनिर्दिष्टमपि सवर्णग्रहणमिह निष्कृष्य सम्बध्यते, एकदेशे स्वरितत्वप्रतिज्ञानात्। उद इति पञ्चमी। अतस्तस्मादित्युत्तरस्येति परिभाषया उदः परयोरिति लभ्यते। तदाह—उदः परयोरिति। पूर्वेति। पूर्वनिमित्तस्य उदो दकारस्य यः सवर्ण स आदेशः स्यादित्यर्थः। पूर्वसवर्णश्चायमलोऽन्त्यपरिभाषया स्थास्तम्भोरन्तादेशो न भवतीत्याह। आदेः परस्येति। अनया परिभाषया स्थास्तम्भोराद्यवयवस्य सकारस्यैव भवतीत्यर्थः। उत्थानमिति। ष्ठा गतिनिवृत्तौ। भावे ल्युट्। उत्तम्भनमिति। 'ष्टभि प्रतिष्टम्भे' भावे ल्युट्। स्तम्भु रोधन इति श्नुविधौ निर्दिष्टः सौत्रो वा धातुः। स्थास्तम्भोरिति पवर्गीयोपधनिर्देशस्य उभयसाधारणत्वात्। ननु उद् स्थानमित्यत्र सकारस्य पूर्वसवर्णविधौ पूर्वनिमित्तं दकारः तत्सवर्णाश्च त थ द ध नाः पञ्चैव। दन्तस्थानसाम्यात् स्पृष्टप्रयत्नसाम्याच्च। न तु लृकारः सकारश्च। तयोः स्थानसाम्येऽपि विवृतप्रयत्नत्वात्। नापि लकारः ईषत्स्पृष्टत्वात्। एतदतिरिक्ताश्च सर्वे वर्णाः भिन्नस्थानकत्वान्न दकारसवर्णाः। ततश्च पूर्वनिमित्तभूतदकारसवर्णाः त थ द ध नाः पञ्चापि सकारस्य प्राप्ताः। स्थानीभूतसकारेण दन्तस्थानत आन्तर्यस्य पञ्चस्वप्यविशिष्टत्वात्। आभ्य-

अत्राघोषस्य महाप्राणस्य सस्य तादृश एव थकारः। तस्य 'झरो झरि-' (सू ७१) इति पाक्षिको लोपः। लोपाभावपक्षे तु थकारस्यैव श्रवणम्। न तु 'खरि च' (सू १२१) इति चर्त्वम्। चर्त्वं प्रति थकारस्यासिद्धत्वात्। (११९) झयो होऽन्य-

न्तरप्रयत्नत आन्तर्यस्य च पञ्चस्वप्यभावात्। स्थानीभूतसकारस्य विवृतप्रयत्नत्वाद् एतेषां च पञ्चानां स्पृष्टप्रयत्नत्वात्। अतोऽत्र बाह्यप्रयत्नत एवान्तर्यमादाय पञ्चस्वन्यतमव्यवस्थामाह—अत्राघोषस्य महाप्राणस्य सस्य तादृश एव थकार इति। अघोषस्येत्यनेन श्वासवतो विवारवतश्चेत्युक्तप्रायम्, समनियतत्वात्। स्थानीभूतस्तावत् सकारः अघोषश्वासविवारमहाप्राणात्मकयत्नचतुष्टयवान्। तस्य त थ द ध नेषु प्रथमतृतीयपञ्चमा न भवन्ति, तेषामल्पप्राणत्वात्। नापि चतुर्थो भवति, तस्य घोषनादसंवारयत्नकत्वात्। द्वितीयस्तु थकारः अघोषश्वासविवारमहाप्राणात्मकयत्नचतुष्टयवान्। अतः स एव थकारः पूर्वनिमित्तभूतदकारसवर्णः सकारस्य भवतीत्यर्थः। एवं च उद् स्थानमिति स्थिते दकारस्य 'खरि च' इति चर्त्वेन तकारे सकारस्य पूर्वसवर्णे थकारे उत्थ्थानमित्येकतकारं द्विथकारं च रूपं सिद्धम्। एवम् उत्थ्तम्भनमित्यत्रापि योज्यम्। तत्र द्वितकारमेकथकारं चेति विशेषः। तस्येति सकारादेशस्य थकारस्येत्यर्थः। एवं च प्रथमथकारस्य लोपपक्षे एकतकारमेकथकारं च रूपमिति भावः। ननु प्रथमथकारस्य लोपाभावपक्षे एकतकारं द्विथकारं च रूपमित्यनुपपन्नम्। प्रथमथकारस्य खरि चेति चर्त्वे सति द्वितकारमेकथकारमित्यापत्तेरित्यत आह—लोपाभावेति, असिद्धत्वादिति। खरि चेति सूत्रापेक्षया उदस्स्थादित्यस्य परत्वादिति भावः। उत्त्तम्भनमिति त्रितकारपाठस्तु प्रामादिकः। उक्तप्रक्रियाया उभयत्रापि साधारण्यात्। केचित्तु 'न मुने' इत्यत्र नेति योगविभागमभ्युपगम्य पूर्वसवर्णस्य थकारस्य चर्त्वं प्रत्यसिद्धत्वाभावाच्चर्त्वे उत्त्तम्भनमिति त्रितकाररूपं कथञ्चित् साधयामासुः। तत्तु मूलकृतो न सम्मतम्, मूले उभयसाधारण्येनैव प्रक्रियानिरूपणात्। वस्तुतस्तु दीर्घादाचार्याणाम्' इत्युत्तरम् अनुस्वारस्य ययि परसवर्णः, वा पदान्तस्य, तोर्लि, उदस्स्थास्तम्भोः पूर्वस्य, झयो होऽन्यतरस्याम्, शश्छोऽटीति षट्सूत्रीपाठोत्तरं झलाञ्जश् झशि, अभ्यासे चर्च, खरि च, वाऽवसाने, अणोऽप्रगृह्यस्यानुनासिकः, इति पञ्चसूत्रीपाठ इति हलो यमामिति सूत्रस्थभाष्यसम्मतः सूत्रक्रमः। एवं च खरि चेति चर्त्वे कर्तव्ये उदस्स्थास्तम्भोरिति पूर्वसवर्णस्य थकारस्य असिद्धत्वाभावाच्चर्त्वे उत्त्थानमिति द्वितकारमेकथकारं च रूपम्, उत्त्तम्भनमिति तु त्रितकारमेव रूपमिति शब्देन्दुशेखरे प्रपञ्चितम्।

झयो हः। झय इति पञ्चमी। परस्येत्यध्याहार्यम्। ह इति षष्ठी। उदस्स्थास्तम्भोरित्यतः पूर्वस्येति अनुस्वारस्य ययीत्यतः सवर्ण इति चानुवर्तते तदाह—

'निर्दिश्यमानस्यादेशा भवन्ति' (प १३)। एकदेशविकृतस्यानन्यत्वात् जरशब्दस्य जरस्। निर्जरसौ। निर्जरसः। इनादीन्बाधित्वा परत्वाज्जरस्। निर्जरसा। निर्जरसे। निर्जरसः। पक्षे हलादौ च रामवत्। वृत्तिकृता तु 'पूर्वविप्रतिषेधेनेनातोः

स्थत्वात् जराशब्दस्य तदन्तस्य च भवति। जरसावित्यादौ तु व्यपदेशिवद्भावेन तदन्तत्वं बोध्यम्। यद्यपि जराया इत्यस्य अङ्गविशेषणत्वादेव तदन्तविधिः सिद्धः, तथापि येन विधिरित्यस्य प्रपञ्चभूतेयं परिभाषेत्यदोषः। अत एव 'पदमङ्गं च विशेष्यं विशेषणेन च तदन्तविधिः' इति प्रौढमनोरमायामुक्तम्। ननु जराशब्दान्तस्य विधीयमानो जरसादेशः निर्जरशब्दस्य कृत्स्नस्य स्यात्, अनेकाल्त्वादित्याक्षिप्य समाधत्ते—अनेकाल्त्वादिति। निर्दिश्यमानस्यादेशा भवन्तीति। प्रत्यक्षनिर्दिश्यमानस्यैवेत्यर्थः। अनया परिभाषया जराशब्दस्यैव जरस्। जराशब्द एव ह्यत्र स्थानी प्रत्यक्षनिर्दिष्टः। जराशब्दान्तस्य तु निर्देशस्तदन्तविधिलभ्यत्वात् आनुमानिक इति भावः। इयञ्च परिभाषा 'षष्ठी स्थानेयोगा' इति सूत्रसिद्धार्थकथनपरेति तत्रैव भाष्ये स्पष्टम्। ननु निर्जरशब्दस्य जराशब्दान्तत्वाभावात् कथमिह जरसादेश इत्यत आह—एकदेशेति। 'छिन्नेऽपि पुच्छे श्वा श्वैव, न चाश्वो न च गर्दभ' इति न्यायादिति भावः। निर्जरसौ। निर्जरस इति। प्रथमाद्वितीययोः द्विवचने बहुवचने च रूपम्। अमि निर्जरसमित्युदाहार्यम्। ननु तृतीयैकवचने पञ्चम्येकवचने च, निर्जर आ, निर्जर अस् इति स्थिते इनातोः कृतयोः जरसादेशे निर्जरसिन निर्जरसादिति प्राप्तम्। तथा चतुर्थ्येकवचने षष्ठ्येकवचने च, निर्जर ए, निर्जर अस्, इति स्थिते, यादेशे, स्यादेशे च सति अजादिविभक्त्यभावात् जरसादेशाभावे, निर्जराय निर्जरस्येति प्राप्तम्, तदाह—इनादीनिति। इन-य आत्-स्य इत्यादेशान् नुटं च परत्वात् बाधित्वा जरसादेशः। ततश्च अदन्तत्वाभावात् इनादयो न भवन्तीत्यर्थः। निर्जरसेति। तृतीयैकवचनम्। निर्जरसे इति। चतुर्थ्येकवचनम्। निर्जरस इति। पञ्चम्येकवचने षष्ठ्येकवचने च रूपम्। निर्जरसोः निर्जरसां निर्जरसीत्यप्युदाहार्यम्। पक्ष इति। जरसादेशाभावपक्ष इत्यर्थः। हलादौ चेति। भिस ऐसादेशे निर्जरैरित्येव रूपम्। न तु जरसादेशे निर्जरसैरिति। अदन्तमङ्गमाश्रित्य प्रवृत्तस्य ऐसः सन्निपातपरिभाषया तद्विघातकजरसादेशनिमित्तत्वायोगात्।

अथ वृत्तिकृदुत्प्रेक्षितं मतान्तरं दूषयितुम् अनुवदति—वृत्तिकृता त्वित्यादिना। पूर्वविप्रतिषेधेनेत्यादि केचिदित्यन्तो वृत्तिग्रन्थः। वृत्तिकृता तु इनातोः कृतयोः जरसि कृते निर्जरसिन निर्जरसादिति रूपम्, न तु निर्जरसा निर्जरस इति केचिदित्युक्तमित्यन्वयः। ननु इनादेशमादादेशं च परत्वात् बाधित्वा जरसि कृते, अदन्तत्वाभावात् कथमिनातौ स्यातामित्यत आह—पूर्वविप्रतिषेधेनेति। विप्रतिषेधे पूर्वस्य प्रवृत्तिर्यत्र

कृतयोः सन्निपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते निर्जरसिन निर्जरसाद् इति रूपे, न तु निर्जरसा निर्जरसः इति केचित्' इत्युक्तम्। तथा भिसि निर्जरसैः- इति रूपान्तरमुक्तम्। तदनुसारिभिश्च षष्ठ्येकवचने 'निर्जरस्य' इत्येवं रूपमिति स्वीकृतम्। एतच्च भाष्यविरुद्धम्। (२२८) पद्दन्नोमास्हृन्निशसन्यूषन्दोष-

---

बोध्यते तत् पूर्वविप्रतिषेधम्, 'विप्रतिषेधे परं कार्यम्' इति सूत्रं तेनेत्यर्थः। तत्र परशब्दस्येष्टवाचित्वमाश्रित्य विप्रतिषेधे क्वचित् पूर्वस्य कार्यस्य प्रवृत्त्यभ्युपगमेनेति यावत्। ननु इनातोः कृतयोः कथं जरसादेशः, सन्निपातपरिभाषाविरोधादित्यत आह—सन्निपातपरिभाषाया अनित्यत्वमाश्रित्येति। तथेति। भिस ऐसादेशे जरसादेशाभावपक्षे निर्जरैरिति रूपम्। सन्निपातपरिभाषाया अनित्यत्वात् जरसि कृते तु निर्जरसैरिति रूपान्तरमुक्तमित्यर्थः। तदनुसारीति। निर्जरसिनेत्यादि रूपं यैरुक्तं तदनुसारिभिरित्यर्थः। निर्जरस्येत्येवेति। पूर्वविप्रतिषेधेन स्यादेशे कृते अजादिविभक्त्यभावान्न जरस्। इनातोः पूर्वविप्रतिषेधे आश्रिते सति एकसूत्रोपात्तत्वात् स्यादेशविषयेऽपि पूर्वविप्रतिषेधः आश्रयितुमुचितः। अतः निर्जरस्येत्येकमेव रूपं न तु निर्जरस इत्यपीति भावः। एतच्चेति। वृत्तिकृदुत्प्रेक्षितं केषाञ्चिन्मतं तदनुसारिमतं चेत्यर्थः। भाष्यविरुद्धमिति। 'टाङसिङसामिनात्स्याः' इत्यत्र नादेश एव विधेयः। इकारोच्चारणं मास्तु। तथा अदादेश एव विधेयः, न तु दीर्घ आदिति। रामेणेत्यत्र एकारस्तु योगविभागात् भवति। तथाहि 'बहुवचने झल्येत्' 'ओसि च' 'आङि चापः' 'सम्बुद्धौ च' इति सूत्रक्रमः। तत्र आङीति योगविभागः क्रियते। अत एकारः स्यात् आङि। रामेण। आपः सम्बुद्धौ चेत्यन्यो योगः। आप एकारः स्यात् सम्बुद्धौ आङि ओसि च। हे रमे, रमया, रमयोः। ङसेरदादेशे अकारोच्चारणसामर्थ्यात् 'अतो गुणे' इति न पररूपमित्यादि टाङसिङसामिति सूत्रे भाष्ये स्थितम्। निर्जरसिन निर्जरसादिति रूपसत्त्वे एतद्भाष्यासङ्गतिः स्पष्टैव। अत्र इकारस्य आकारस्य च श्रवणाय इनादेशे इकारोच्चारणावश्यकत्वात्। किंच गोनर्दीयस्त्वाह—अतिजरैरित्येव भवितव्यं सन्निपातपरिभाषया इति 'जराया जरसन्यतरस्याम्' इति सूत्रे भाष्ये स्थितम्। निर्जरसैरितिरूपाभ्युपगमे एतदसङ्गतिः स्पष्टैव। अतः पूर्वविप्रतिषेधेनेत्यादिमतान्तरमशुद्धमित्यर्थः।

अथ पादशब्दस्य शसादौ विशेषं दर्शयितुमाह—पद्दन्न इति। पद्–दत्–नस्–मास्–हृद्–निश्–असन्–यूषन्–दोषन्—यकन्—शकन्—उदन्–आसन् इत्येषां समाहारद्वन्द्वः। शस् द्वितीयाबहुवचनं प्रभृतिः–आदिः येषामिति तद्गुणसंविज्ञानो बहुव्रीहिः। 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इत्यतः अन्यतरस्यामित्यनुवर्तते।

न्यकन्लुकन्नुदन्नासञ्छस्प्रभृतिषु ६।१।६३ ॥ पाद दन्त नासिका मास हृदय निशा असृज् यूष् दोष् यकृत् शकृत् उदक् आस्य एषां पदादय आदेशाः स्युः शसादौ वा। यत्तु 'आसनशब्दस्यासन्नादेशः' इति काशिकायामुक्तं तत्प्रामादिकम्। पादः। पादौ। पादाः। पादम्। पादौ। पदः-पादान्। पदा-पादेनेत्यादि। ( २२९ ) सुडनपुंसकस्य १।१।४३॥ सुडिति प्रत्याहारः। स्वादिपञ्चवचनानि सर्वनामस्थानसञ्ज्ञानि स्युरक्लीबस्य। ( २३० ) स्वादिष्वसर्वनामस्थाने १।४।१७॥ कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसञ्ज्ञं स्यात्। ( २३१ ) यचि भम् १।४।१८॥ यकारादिष्वजादिषु च कप्प्रत्ययावधिषु

---

शसादिषु परेषु पदादय आदेशा वा स्युरित्यर्थः। पदाद्यादेशैश्च स्वानुरूपाः स्थानिन आक्षिप्यन्ते। तदाह—पाददन्तेत्यादिना। यथासङ्ख्यपरिभाषया पादादीनां क्रमेण पदादय आदेशाः प्रत्येतव्याः। तत् प्रामादिकमिति। भ्रममूलकमित्यर्थः। हव्या-जुह्वान आसनि' इति मन्त्रे 'आसन्यं प्राणमूचुः' इत्यादौ च आस्यार्थकत्वस्यैव दर्शनादिति भावः। दन्तशब्दस्य सुटि रामवत्। शसि पद्न्निति दत् आदेशः। दत् अस् इति स्थिते तकारस्य 'झलां जशोऽन्ते' इति पदान्ते विधीयमानजश्त्वमाशङ्कितुं पदसंज्ञाविधायकं सूत्रं वक्ष्यति—स्वादिष्वसर्वनामस्थान इति। तत्र किं सर्वनामस्थानमित्यत आह—सुडनपुंसकस्य। 'शि सर्वनामस्थानम्' इत्यतः सर्वनामस्थानमित्यनुवर्तते। अक्लीवं नपुंसकभिन्नप्रातिपदिकं, तस्य सुट् सर्वनामस्थानसंज्ञं स्यादित्यर्थः। तत्र-सुट्शब्दमप्रसिद्धार्थत्वाद्व्याचष्टे—सुडिति प्रत्याहार इति। सु इत्यारभ्य औटष्टकारेणेति शेषः। न तु टाटकारेण, प्रथमातिक्रमणे कारणाभावात्। तदेतदाह—स्वादिपञ्चवचनानीति। स्वादिष्वसर्वनामस्थाने। असर्वनामस्थान इति बहुत्वेऽप्येकवचनमार्षम्। कप्प्रत्ययावधिष्विति। पञ्चमाध्यायान्ते विधीयमानकप्प्रत्ययोत्तरावधिकेष्वित्यर्थः तत्र च व्याख्यानमेव शरणम्। एवं च दत् अस् इत्यत्र दत्शब्दस्य सुबन्तत्वाभावेन पदत्वाभावेऽपि अनेन सूत्रेण पदत्वात् 'झलां जशोऽन्ते' इति तकारस्य जश्त्वं स्यादित्याक्षेपः सूचितः। भसंज्ञया पदसंज्ञाबाधात् न जश्त्वमिति समाधातुं भसंज्ञासूत्रमाह—यचि भम्। य् च अच्चेति समाहारद्वन्द्वः। 'स्वादिष्वसर्वनामस्थाने' इत्यनुवृत्तं यचीत्यनेन विशेष्यते। यस्मिन् विधिरिति तदादिविधिः। तदाह—यकारादिष्वित्यादिना। एवं च दत् अस् इत्यत्र दत् इत्यस्य भसंज्ञया पदसंज्ञाबाधान्न जश्त्वमिति भावः। ननु पदभसंज्ञयोरिह समावेशः कुतो न स्यात्। न च विप्रतिषेधे परं कार्यमिति परैव भसंज्ञा भवतीति वाच्यम्, विरोधो हि विप्रतिषेधः। न ह्यत्र द्वयोरपि संज्ञयोः समावेशे विरोधोऽस्ति तव्यत्तव्यानीयरादौ कृत्कृत्यप्रत्ययादिसंज्ञासमावेश-

स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसञ्ज्ञं स्यात्। (२३२) आ कडारादेका सञ्ज्ञा १।४।१॥ इत ऊर्ध्वं 'कडाराः कर्मधारये' (सू ७५१) इत्यतः प्रागेकस्यैकैव सञ्ज्ञा ज्ञेया। या परा अनवकाशा च। तेन शसादावचि भसञ्ज्ञैव, न पदत्वम्। अतो जश्त्वं न। दतः। दता। जश्त्वम्। दद्भ्यामित्यादि। मासः। मासा। भ्यामि रुत्वे यत्वे च यलोपः। माभ्याम्। माभिरित्यादि। (२३३) भस्य

दर्शनादित्यत आह—आ कडारादिति। आङ्मर्यादायामित्याह—कडाराः कर्मधारय इत्यतः प्रागिति। आङिह नाभिविधौ। कडारशब्दस्यापि प्रवेशे प्रयोजनाभावात्। प्राक्कडारादिति कडारशब्दस्तु नोत्तरावधिः। 'कडाराः कर्मधारये' इति कडारशब्दस्य उत्तरावधित्वे अधिकलाभात्। प्राक्कडारादित्युत्तरं तत्पुरुषः द्विगुश्चेति चकाराच्च। संज्ञाद्वयसमावेशार्थौ हि चकारः। तत्रैकसंज्ञाया नियमाप्रवृत्तौ किं तेन। नन्वस्त्विह एकैव संज्ञा। तथापि विनिगमनाविरहात् भसंज्ञैवेति कुतो लाभः। तत्राह—या परा अनवकाशा चेति। विरोधाभावेन विप्रतिषेधसूत्रस्य सामान्याद्विशेषबलीयस्त्वस्य चाप्रवृत्तावपि परत्वनिरवकाशत्वयोः अन्यत्र बलवत्त्वेन दृष्टत्वादिहापि ताभ्यां व्यवस्था युज्यत इति भावः। द्वयोः सावकाशयोः परा संज्ञा बलवती। अन्यतरस्याः निरवकाशत्वे तु सैवेति बोध्यम्। तत्र परा यथा—धनुषा शरैर्विध्यतीत्यत्र शराणां विश्लेषं प्रत्यवधिभूतस्यैव धनुषो व्यधनं प्रति साधकतमत्वादपादानत्वे करणत्वे च प्राप्ते परा करणसंज्ञैव भवति। अनवकाशा यथा—अततक्षदिति। अत्र तकाराकारस्य 'संयोगे गुरु' इति गुरुसंज्ञैव अनवकाशत्वात् भवति, न तु लघुसंज्ञा। तस्याः असंयोगे परे चरितार्थत्वात्। अतः सन्वल्लघुनीति तत्र न प्रवर्तते। तेनेति। अनवकाशत्वेनेत्यर्थः। अत इति। पदत्वाभावात् जश्त्वं नेत्यर्थः। जश्त्वमिति। दत् भ्यामिति स्थिते 'स्वादिष्वसर्वनामस्थाने' इति पदान्तत्वात् 'झलां जशोऽन्ते' इति जश्त्वमित्यर्थः। इत्यादीति। दद्भिः दत्ते इत्यादिरादिशब्दार्थः। 'खरि च' इति चर्त्वे दत्सु। पक्षे रामवत्। मास इति। मासशब्दस्य शसि पद्दन्न इति मास् इत्यादेशे रूपम्। मासेति तृतीयैकवचनम्। यत्व इति। मास् भ्याम् इति स्थिते स्वादिष्विति पदत्वात् 'ससजुषोः' इति रुः। 'भोभगो' इति तस्य यकारे 'हलि सर्वेषाम्' इति तस्य लोपे माभ्यां माभिरिति रूपमित्यर्थः। इत्यादीति। माभ्यः इत्यादिरादिशब्दार्थः। मास् सु इति स्थिते रुत्वे 'खरवसानयोः' इति विसर्गे 'वा शरि' इति सत्वविकल्पः मास्सु—माःसु।

भस्य इति। इत्यधिकृतं स्पष्टमेव। यूषशब्दो मण्डवाची। 'मुद्गामलकयूषस्तु भेदी दीपनपाचकः' इत्यादि वैद्यशास्त्रे प्रसिद्धम्। तस्य शसि 'पद्दन्न' इति यूषन्–

६।४।१२९॥ इत्यधिकृत्य । ( २३४ ) अल्लोपोऽनः ६।४।१३४॥ अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः स्यात् । ( २३५ ) रषाभ्यां नो णः समानपदे ८।४।१॥ एकपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णः स्यात् । यूष्णः । यूष्णा । 'पूर्वस्मादपि विधौ स्थानिवद्भावः' इति पक्षे तु

---

देशे यूषन् अस् इति स्थिते । अल्लोपोऽनः । अत् इति लुप्तषष्ठीकं भिन्नं पदम् । अन इत्यवयवषष्ठ्यन्तम् अतो विशेषणम्—अनोऽवयवो योऽकारः तस्य लोप इति । अङ्गस्येत्यधिकृतम् इहावयवषष्ठ्यन्तमाश्रीयते । तच्चान इत्यत्रान्वेति—अङ्गावयवो योऽन् तदवयवस्य अकारस्य लोप इति । भस्येत्यधिकृतम् । अन इत्यनेनान्वेति । ततश्चानः असर्वनामस्थानयजादिस्वादिपरत्वं लभ्यते । तदाह—अङ्गावयव इत्यादिना । अन्नन्तस्य भस्याङ्गस्याकारस्य लोपः स्यादिति प्राचां व्याख्याने तु तक्ष्णेत्यत्र तकारादकारस्यापि लोपप्रसङ्गः । भस्याङ्गस्यानोऽकारस्य लोप इति व्याख्याने तु अनसा मनसेत्यत्रातिव्याप्तिः । अन इत्यावर्त्य अन्नन्तस्य भस्याङ्गस्यानोऽकारस्य लोप इति व्याख्याने तु अनस्तक्ष्णेत्यत्रातिव्याप्तिरेव । तस्मादुक्तैव व्याख्येत्यन्यत्र विस्तरः । यूषन् अस् इत्यत्र षकारादकारस्य लोपे यूष्न् अस् इति स्थिते—रषाभ्याम् । रषाभ्यामिति दिग्योगे पञ्चमी । परस्येत्यध्याहार्यम् । समानशब्द एकपर्यायः । यथा—समानग्रामावयमिति । आधारसप्तमीबलात् विद्यमानाभ्यामिति लभ्यते । नः इति षष्ठी । तदाह—एकपदस्थाभ्यामिति । एकत्वं चेहाखण्डत्वं विवक्षितम्, पदे इत्येतावतैव सिद्धे समानग्रहणसामर्थ्यात् । अन्यथा रामनामेत्यादौ 'अट्कुप्वाङ्' इति णत्वापत्तिः । एतस्यैव समानपदशब्दस्य तत्राप्यनुवृत्तेः । मातृभोगीणः इत्यत्र णत्वं तु तद्धिताधिकारे वक्ष्यते । यूष्ण इति । शसि रूपम् । यूष्णेति । तृतीयैकवचनम् । न चाल्लोपस्य स्थानिवद्भावात् नकारस्य षात् परत्वं नेति शङ्क्यम्, 'रषाभ्याम्' इति षात्परस्य हि नस्य णत्वे कर्तव्ये अल्लोपस्य स्थानिवद्भावो नापेक्षितः किन्तु णत्वाभावे तदपेक्षा, णत्वाभावश्चाशास्त्रीयत्वान्नातिदेश्यः । स्थानिनि सति यत्कार्यं भवति तदेव हि स्थानिवत्सूत्रेणातिदिश्यते । स्थानिनि सति यन्न भवति तदादेशेऽपि न भवतीत्येवं कार्याभावस्त्वशास्त्रीयत्वान्नातिदिश्यते इति स्थानिवत्सूत्रे अवोचाम ।

यद्यपि 'अचः परस्मिन्' इत्यत्र अशास्त्रीयः कार्याभावोऽप्यतिदिश्यत इत्यभ्यधायि । तथापि नेह तस्यापि सूत्रस्य प्रवृत्तिरस्ति । स्थानिभूतादचः पूर्वत्वेन दृष्टस्यैव विधौ तत्प्रवृत्तेः । इह चाल्लोपस्थानिभूतादकारात् परस्यैव णत्वविधानादिति भावः । ननु 'अचः परस्मिन्' इति सूत्रे स्थानिभूतादचः पूर्वस्मात् परस्य विधावजादेशः स्थानिवदिति पक्षोऽपि भाष्ये स्थितः, एवं चात्र लोपादेशस्थानिभूतादकारात्

'अड्व्यवाये' इत्येवात्र णत्वम्। 'पूर्वत्रासिद्धे न स्थानिवत्' (वा ४३२) इति त्विह नास्ति। 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' (वा ४४०) इति निषेधात्। (२३६) न लोपः प्रातिपदिकान्तस्य ८।२।७॥ नेति प्रातिपदिकेति

---

पूर्वो यः षकारः तस्मात्परस्य नकारस्य णत्वविधौ लोपस्य स्थानिवद्भावे सति अकारेण व्यवधानात् षात्परत्वाभावात् कथं णत्वमित्यत आह—पूर्वस्मादिति। पक्षे त्वित्यादिना अस्य पक्षस्यानित्यत्वं सूचितम्। अत एव प्रविगणय्येति भाष्ये प्रयुक्तं सङ्गच्छते। चुरादौ 'गण सङ्ख्याने' इत्यदन्तो धातुः। णिच्। अतो लोपः। अल्लोपस्य स्थानिवद्भावात् 'अत उपधायाः' इति वृद्धिर्न। ण्यन्तात् क्त्वो ल्यपि णिलोपं बाधित्वा 'ल्यपि लघुपूर्वात्' इति णेरयादेशः। पूर्वस्मात् परस्य विधौ स्थानिवद्भावस्य नित्यत्वे इह 'ल्यपि लघुपूर्वात्' इति णेरयादेशो न स्यात्। लोपस्थानिभूतादतः पूर्वस्मात् परस्य णेरयादेशविधावल्लोपस्य स्थानिवद्भावे सति अता व्यवहितत्वेन णेर्लघुपूर्वात् णकारात् परत्वाभावात्, तस्मात् 'अचः परस्मिन्' इत्यत्र पूर्वस्मात् परस्य विधौ स्थानिवद्भावस्यानित्यत्वं विज्ञायते। एवं च गोशब्दात् सम्बुद्धौ ओतो णित्त्वे वृद्धौ हे गौरिति सिध्यति। अन्यथा औकारस्य स्थानिभूतादोकारात् पूर्वो यो गकारः तस्मात् परस्याः सम्बुद्धेर्लोपविधौ स्थानिवद्भावे ओकारादेङः परत्वात् सम्बुद्धिलोपः स्यादिति शब्देन्दुशेखरे स्पष्टम्। अड्व्यवाये इत्येवेति। 'अट्कुप्वाङ्' इति सूत्रेणेवेत्यर्थः। षादव्यवहितपरस्य नस्य णत्वविधावुदाहरणं तु पुष्णातीत्यादि बोध्यम्। वस्तुतस्तु 'तत्रापि ष्टुत्वेनैव सिद्धे षग्रहणम् उत्तरार्थम्' इति स्पष्टमाकरे।

नन्वल्लोपस्य णत्वे कर्तव्ये कथं स्थानिवद्भावः। पूर्वत्रासिद्धे न स्थानिवदिति निषेधात्। णत्वस्य पूर्वत्रासिद्धीयत्वादित्यत आह—पूर्वत्रेति। संयोगादिलोपे लत्वे णत्वे च कर्तव्ये, तस्य पूर्वत्रासिद्धे न स्थानिवदित्यस्य, दोषो बाधः, अप्रवृत्तिरिति यावत्। संयोगादिलोपे यथा—चक्र्यत्र। इह 'अचः परस्मिन्' इति यणादेशस्य स्थानिवद्भावात् 'स्कोस्संयोगाद्योः' इति ककारलोपो न। लत्वे यथा—निगाल्यते। अत्र णिलोपस्य स्थानिवत्त्वात् 'अचि विभाषा' इति लत्वम्। णत्वे यथा—माषवपनी। वपतेर्ल्युट्, अनादेशः, उगित्त्वात् ङीप्, 'यस्येति च' इति नकारात् अकारस्य लोपः। इह अकारलोपस्य स्थानिवत्त्वेन नकारस्य प्रातिपदिकान्तत्वाभावात् 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति णत्वं न। यूवन् भ्यामिति स्थिते। न लोपः। न इति स्थानषष्ठ्यन्तं पृथक्पदम्। आर्षः षष्ठ्याः लुक्। नकारस्य लोपः स्यादित्यर्थः। अन्तस्येति नकारस्य विशेषणम्। अत एव च नस्य विशेषणसापेक्षत्वात् लोपशब्देन समासो न भवति, असामर्थ्यात्। कस्यान्त इत्यपेक्षायां पदस्येत्यधिकृतम् अवयवषष्ठ्यन्तमन्वेति। पदस्य योऽयमन्तावयवः तस्य नकारस्य लोप इति। कीदृशं पद-

च लुप्तषष्ठीके पदे। प्रातिपदिकसञ्ज्ञकं यत्पदं तदन्तस्य नकारस्य लोपः स्यात्। नलोपस्यासिद्धत्वाद्दीर्घ ऐस्त्वमेत्त्वं च न। यूषभ्याम्। यूषभिः। यूषभ्य इत्यादि।
**(२३७) विभाषा ङिश्योः ६।४।१३६॥** अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः। यूष्णि यूषणि। पक्षे रामवत्। 'पद्दन्नो—' ( सू २२८ ) इति सूत्रे प्रभृतिग्रहणं प्रकारार्थम्। तथा च औङः श्यामपि दोषन्नादेशः। अत एव भाष्ये 'ककुद्दोषणी' इत्युदाहृतः। तेन 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' 'स्वान्तं हृन्मानसं मनः' इत्यादि च सङ्गच्छते। 'आसन्यं प्राणमूचुः' इति च। आस्ये भवः आसन्यः। दोष्शब्दस्य नपुंसकत्वमत एव

---

मित्यपेक्षायां प्रातिपदिकेति लुप्तषष्ठ्यन्तमन्वेति। प्रातिपदिकसंज्ञकं यत् पदं तस्य योऽयमन्तावयवो नकारः तस्य लोपः स्यादिति। अत एव प्रातिपदिकान्तस्येति न समस्तमेकं पदम्। तस्य पदशब्देनान्वितेनान्तशब्देनासामर्थ्यात्। तदाह—नेति प्रातिपदिकेति च लुप्तषष्ठीके पदे इति। तदन्तस्येति। तस्य पदस्य अन्तावयवो यो नकारः तस्येत्यर्थः। प्रातिपदिकग्रहणं किम्, 'अहन् इति' तिङन्तस्य न भवति। पदग्रहणं किम्, राजानौ। ननु नलोपे सति यूषभ्यामित्यत्र 'सुपि च' इति दीर्घः स्यात्। यूषभिरित्यत्र 'अतो भिस ऐस्' इति ऐसादेशः स्यात्। यूषभ्य इत्यत्र 'बहुवचने झल्येत्' इति एत्वं स्यादित्यत आह—नलोपस्यासिद्धत्वादिति। इत्यादीति। यूष्णे–यूष्णः–यूष्णोः–यूष्णाम् इति आदिशब्दार्थः। यूषन् ङि इति स्थिते अल्लोपोऽनः इति नित्ये अल्लोपे प्राप्ते—विभाषा ङिश्योः। अल्लोपोऽन इत्यनुवर्तते। अङ्गस्येति भस्येति चाधिकृतम्। भस्येत्यनेन च असर्वनामस्थानयजादिस्वादिपरत्वं पूर्ववदनो लभ्यते। तदाह—अङ्गावयव इति। ङिश्योरिति। ङिश्च शी चेति विग्रहः। 'नपुंसकाच्च' इति विहित एवात्र शी गृह्यते। न तु जश्शसोश्शिः, तस्मिन् परे भत्वासम्भवात्। पक्षे इति। यूषन्नादेशाभावपक्षे इत्यर्थः।

अथ क्वचित् शसादिभ्योऽन्यत्रापि पदाद्यादेशं साधयितुमाह—पद्दन्नो इति सूत्र इति। प्रकारेति। प्रकारः सादृश्यम्। तच्च प्रत्ययत्वेन बोध्यम्। प्रभृतिग्रहणस्य प्रकारार्थत्वे प्रमाणं दर्शयति—अत एवेति। प्रभृतिग्रहणस्य प्रकारार्थकत्वादेवेत्यर्थः। 'ककुद्दोषणी याचते महादेव' इत्येवं भाष्ये औङादेशभूतशीभावे परतः उदाहृतो दोषन्नादेशः अत एव सङ्गच्छते इत्यन्वयः। तेनेति। प्रकारार्थकप्रभृतिग्रहणेनेत्यर्थः। पदङ्घ्रिरित्यत्र पदिति प्रथमैकवचनम्, स्वान्तं हृदित्यत्र हृदिति च सङ्गच्छत इत्यर्थः। आदिना निशादिसङ्ग्रहः। आसन्यं प्राणमिति। आसन्यं प्राणमूचुरिति च अत एव सङ्गच्छते इत्यन्वयः। आसनशब्दस्य आसन्नादेश इति भ्रमं वारयति—आस्ये भवः-

भाष्यात्। तेन 'दक्षिणं दोर्निशाचरः' इति सङ्गच्छते। 'भुजबाहू प्रवेष्टो दोः' इति साहचर्यात्पुंस्त्वमपि। 'दोषं तस्य तथाविधस्य भजतः' इति। द्वयोरह्नोर्भवो द्व्यह्नः।

(२३८) सङ्ख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ ६।३।११०॥ सङ्ख्यादिपूर्वस्याह्नस्याहन्नादेशो वा स्यात् ङौ। द्व्यह्नि—द्व्यहनि—द्व्यह्ने। विगतमहर्व्यह्नः। व्यह्नि—व्यहनि—व्यह्ने। अह्नः सायः सायाह्नः। सायाह्नि—सायाहनि—सायाह्ने॥

इत्यदन्ताः॥

---

इति। प्राणशब्दसमभिव्याहारादियमेव व्युत्पत्तिरिति भावः। 'शरीरावयवाच्च' इत्यास्यशब्दात् भवार्थे यत्प्रत्यये आसन्नादेशः। 'ये चाभावकर्मणोः' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न। प्रभृतिग्रहणस्य प्रकारार्थत्वाभावे तु इह आसन्नादेशो न स्यात्, यत्प्रत्ययस्य शसादिषु सुप्सु अनन्तर्भावादिति भावः। ननु दोषणी इति भाष्ये नपुंसकप्रयोगोऽनुपपन्नः। 'दोषं तस्य तथाविधस्य' इत्यादौ पुंस्त्वस्यैव प्रयोगदर्शनादित्यत आह—दोष्शब्दस्येति। अत एवेति। ककुद्दोषणी इति भाष्यादेव ज्ञेयमित्यर्थः। तेन दक्षिणमिति। 'तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः' इति रघुवंशे। दक्षिणं दोरुद्यम्य तमुपाद्रवदित्यन्वयः। दोष्शब्दस्य द्वितीयैकवचनं दोः इति। पुंस्त्वे दोषमिति स्यादिति भावः। ननु भाष्यानुसारात् दोष्शब्दस्य नपुंसकत्वमेव स्यादित्यत आह—भुजेति। 'भुजबाहू प्रवेष्टो दोः' इति कोशात् पुंस्त्वमपीत्यर्थः। नन्वयं कोशः दोष्शब्दस्य नपुंसकत्वेऽप्युपपन्न इत्यत आह—साहचर्यादिति। पुंल्लिङ्गभुजादिशब्दसाहचर्यादित्यर्थः। 'साहचर्याच्च कुत्रचित्' इति कोशे परिभाषितत्वादिति भावः। दोष्शब्दस्य पुंस्त्वसाधने फलं दर्शयति—दोषं तस्येति। 'दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन् गुणम्' इति श्रीहर्षः। दोषं हस्तं दूषणं च भजतश्चापस्य गुणं मौर्वीम् अतिशयं च गृह्णन्नित्यन्वयः। अत्र दोषमिति दोष्शब्दस्य पुंल्लिङ्गद्वितीयैकवचनम्। अत्र सुप्रभृतिष्विति वाच्ये शस्प्रभृतिष्विति वचनात् सुपि क्वचिदेव पदाद्यादेशा इति गम्यते। द्वयोरह्नोरिति। तद्धितार्थेति समासः। 'कालाट्ठञ्' इति ठञ्। 'द्विगोर्लुगनपत्ये' इति लुक्। 'राजाहस्सखिभ्यष्टच्' इति टच्। 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः। रामशब्दवद्रूपाणि। ङौ विशेषमाह—सङ्ख्याविसायेति। सङ्ख्या च विश्च सायश्च सङ्ख्याविसायाः ते पूर्वं यस्मादिति विग्रह इत्यभिप्रेत्य आह—सङ्ख्येत्यादिना। सङ्ख्यापूर्वमुदाहरति—द्व्यह्नि द्व्यहनीति। अल्लोपे तदभावे च रूपम्। द्व्यह्ने इति। अहन्नादेशाभावे रूपम्। एवं विपूर्वमुदाहरति—विगतमिति। 'प्रादयो गताद्यर्थे प्रथमया' इति समासः। पूर्ववदह्नादेशः। सायपूर्वमुदाहरति—अह्नः सायः इत्यादिना। अत एव ज्ञापकादेकदेशिसमासः॥ इत्यदन्तप्रकरणम्॥

विश्वपाः । (२३९) दीर्घाज्जसि च ६।१।१०५॥ दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात्। वृद्धिः। विश्वपौ। सवर्णदीर्घः। विश्वपाः। यद्यपीह औङि 'नादिचि' ( सू १६५ ) इत्येव सिद्धम्। जसि तु सत्यपि पूर्वसवर्णदीर्घे क्षतिर्नास्ति। तथापि 'गौर्यौ' 'गौर्यः' इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम्। (२४०) आतो धातोः ६।४।१४०॥ आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य

---

अथ आकारान्ता निरूप्यन्ते। विश्वपा इति। आबन्तत्वाभावात् न सुलोपः। एतदर्थमेव हल्ङ्यादिसूत्रे सत्यपि दीर्घग्रहणे आब्ग्रहणमिति भावः। विश्वं पाति रक्षतीत्यर्थे 'आतोऽनुपसर्गे कः' इति प्राप्ते वाऽसरूपन्यायेन 'आतो मनिन्क्वनिब्वनिपश्च' इति चकाराद्विच्। यद्यपि तत्र 'विजुपे छन्दसि' इत्यतो छन्दसीत्यनुवर्तते। तथापि वेदे अनेन विच्। लोके तु 'अन्येभ्योऽपि दृश्यन्ते' इति विच्। अन्ये तु 'क्विप्च' इति सूत्रेण क्विपमाहुः। 'घुमास्था' इतीत्त्वं तु न, 'वकारे ईत्त्वप्रतिषेधः' इति वार्तिकात्, क्वनिपि पावान इत्येतदर्थं तस्यावश्यकत्वात्। 'क्विपस्त्वादन्तेभ्यो भाष्यानुक्तक्रिभ्योऽनभिधानमेव' इति शब्देन्दुशेखरे स्पष्टम्। अत एव भाष्ये पावानः इत्यत्र वनिपा रूपसिद्धिमाश्रित्य 'ईत्त्वमवकारादाविति वक्तव्यम्' इति वार्तिकं प्रत्याख्यातम्। ततश्च विश्वपाः इत्यत्र विजेव। विश्वपा औ इति स्थिते 'प्रथमयोः पूर्वसवर्णः' इति प्राप्ते। दीर्घाज्जसि च। 'प्रथमयोः' इत्यतः पूर्वसवर्ण इति 'नादिचि' इत्यतो नेति इति इचीति च अनुवर्तते। तदाह—दीर्घादित्यादिना। नन्विदं सूत्रं व्यर्थम्, 'नादिचि' इत्येव सिद्धेरिति शङ्कते—यद्यपीह औङि नादिचीत्येव सिद्धमिति। ननु जसि विश्वपा अस् इति स्थिते पूर्वसवर्णदीर्घनिषेधार्थमिदं सूत्रमावश्यकम्। तत्र 'नादिचि' इत्यस्याप्रवृत्तेरित्यत आह—जसित्विति। मास्तु पूर्वसवर्णदीर्घनिषेधः। पूर्वसवर्णदीर्घे सत्यपि जसि विश्वपाः इति सिध्यति। तन्निषेधे सत्यपि 'अकः सवर्णे दीर्घः' इति कृतेऽपि विश्वपाः इत्येव रूपं सिध्यति। अतः किं तन्निषेधेनेत्यर्थः। परिहरति—तथापीति। इत्यादीति। आदिना लक्ष्म्यावित्यादिसङ्ग्रहः। तत्र 'नादिचि' इत्यस्याप्रसक्त्या तन्निषेध आवश्यक इति भावः। ननु 'दीर्घाज्जसि च' इति सूत्रं यदि गौर्यौ इत्याद्यर्थमेव, तर्हि ईदन्ताधिकारे गौरीशब्दनिरूपणावसर एव तदुपन्यासो युक्त इत्यत आह—इहापि न्याय्यत्वादिति। विश्वपावित्यत्र 'नादिचि' इत्यस्य 'दीर्घाज्जसि च' इत्यस्य च प्राप्तौ परत्वेन 'दीर्घाज्जसि च' इत्यस्यैव उपन्यासौचित्यादित्यर्थः। 'अमि पूर्वः' विश्वपाम्। औटि विश्वपौ।

शसि विश्वपा अस् इति स्थिते पूर्वसवर्णदीर्घे प्राप्ते। आतो धातोः। अङ्गस्येति भस्येति चाधिकृतम्। धातोरित्यात इति षष्ठ्यन्तेन विशेष्यते। तदन्तविधिः।

लोपः स्यात्। 'अलोऽन्त्यस्य' (सू ४२)। विश्वपः। विश्वपा। विश्वपाभ्यामित्यादि। एवं शङ्खध्मादयः। 'धातोः' किम्। हाहान्। टा सवर्णदीर्घः। हाहा। ङे वृद्धिः-हाहै। ङसिङसोर्दीर्घः-हाहाः। ओसि वृद्धि-हाहौः। ङौ आद्गुणः-हाहे। शेषं विश्वपावत्। 'आतः' इति योगविभागादधातोरप्याकारलोपः क्वचित्। क्त्वः। श्नः॥ इत्यादन्ताः॥

'अल्लोपोऽनः' इत्यतो लोप इत्यनुवर्तते। तदाह—आकारान्तो य इति। अलोऽन्त्यस्येति। अन्त्यस्याकारस्य लोप इति शेषः। विश्वपाभ्यामिति। अभत्वादाल्लोपो नेति भावः। इत्यादीति। विश्वपाभिः। विश्वपे। विश्वपः। विश्वपोः। विश्वपाम्। विश्वपि। विश्वपोः। विश्वपासु। एवं शङ्खध्मादय इति। शङ्खेन शङ्खं वा धमतीति शङ्खध्माः। 'ध्मा शब्दाग्निसंयोगयोः, पूर्ववत् विच् क्विब्वा। आदिना सोमपादिसङ्ग्रहः। सोमं पिबतीति सोमपाः। कीलालं पिबतीति कीलालपाः। वारिपर्यायेषु 'पयः कीलालममृतम्' इत्यमरः। मधु पिबतीति मधुपाः इत्यादि। धातोः किमिति। 'आतोऽनापः' इत्येव सूत्र्यताम्। तावतैव रमा इत्याद्याबन्तेषु लोपव्यावृत्तेरिति प्रश्नः। हाहानिति। पूर्वसवर्णदीर्घे 'तस्माच्छसः' इति नत्वम्। हाहा इति गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमेतत्। 'हाहाहूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम्' इत्यमरः। सुटि विश्वपावत्। शसि हाहा अस् इत्यत्रापि 'आतोऽनापः' इत्याल्लोपः स्यात्। अतो धातुग्रहणमित्यर्थः। टा सवर्णदीर्घ इति। टा इत्यविभक्तिकनिर्देशः प्रक्रियादशायां न दुष्यति। तृतीयैकवचने सवर्णदीर्घ इत्यर्थः। एवमग्रेऽपि योज्यम्। ङे वृद्धिरिति। हाहा ए इति स्थिते 'वृद्धिरेचि' इति वृद्धिरित्यर्थः। ङसिङसोरिति। हाहा अस् इत्यत्र सवर्णदीर्घ इत्यर्थः। ओसि वृद्धिरिति। हाहा ओस् इत्यत्र 'वृद्धिरेचि' इति वृद्धिरित्यर्थः। ङौ आद्गुण इति। हाहा इ इत्यत्र 'आद्गुणः' इति गुण एकार इत्यर्थः। क्त्वा, श्ना इति प्रत्ययौ आकारान्तौ विश्वपावत्। नन्वधातुत्वात् कथमिह आल्लोप इत्यत्र आह—आत इति। योगेति। 'आतो धातोः' इत्यत्र आत इति विभज्यते। आकारान्तस्य भस्याङ्गस्य लोपः स्यादित्यर्थः। तेन क्त्वः श्नः इति शसि रूपं सिध्यति। धातोरिति योगान्तरम्। आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यादित्यर्थः। आबन्तव्यावृत्त्यर्थं हाहादिव्यावृत्त्यर्थं चेदम्। आत इति योगविभागस्तु क्त्वः श्नः इत्यादौ क्वचिदाल्लोपार्थः। ननु मालेवाचरति मालाः। आचारक्विबन्तात् कर्तरि क्विप्। सुबुत्पत्तिः। अत्र कृतेऽपि धातुग्रहणे शसादावाल्लोपो दुर्वारः, 'सनाद्यन्ताः' इति धातुत्वात् आदन्तत्वाच्च। न च 'अनाप इति वक्तव्यम्' इति वार्तिकादाबन्तेषु नाल्लोप इति शङ्क्यम्, उक्तरीत्या योगविभागमभ्युपगम्य 'अनाप' इति वार्तिकस्य भाष्ये प्रत्याख्यातत्वादिति चेन्मैवम्, एतद्वार्तिकभाष्यप्रामाण्यादेव

हरिः । 'प्रथमयोः पूर्वसवर्णः' ( सू १६४ ) हरी । (२४१) जसि च ७।३।१०६॥ ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि परे । हरयः । (२४२) ह्रस्वस्य गुणः ७।३।१०८॥ ह्रस्वस्य गुणः स्यात्सम्बुद्धौ । 'एङ्ह्रस्वात्–' ( सू १९३ ) इति सम्बुद्धिलोपः । हे हरे । हरिम् । हरी । हरीन् । (२४३) शेषो घ्यसखि । १।४।७॥ अनदीसञ्ज्ञौ ह्रस्वौ याविवर्णोवर्णौ तदन्तं सखिवर्जं घिसञ्ज्ञं स्यात् । 'शेषः' किम् । मत्यै । एकसञ्ज्ञाधिकारात्सिद्धे शेषग्रहणं स्पष्टार्थम् । 'ह्रस्वौ' किम् ।

---

भावन्तेभ्यः आचारक्विबभावबोधनादिति शब्देन्दुशेखरे प्रपञ्चितम् । इत्यदन्तप्रकरणम् ॥

अथ इकारान्ता निरूप्यन्ते । हरिरिति । हरिशब्दात् सुः रुत्वविसर्गौ । न च विसर्जनीयस्य अकारादुपरि उपसङ्ख्यानेनाच्त्वात् तस्मिन् परतो रेफादिकारस्य यणादेशः शङ्क्यः, यणादेशे कर्तव्ये विसर्जनीयस्यासिद्धत्वात् । प्रथमयोः पूर्वसवर्ण इति । हरि औ इति स्थिते अनेन पूर्वसवर्णदीर्घे सति हरी इति रूपमित्यर्थः । जसि हरि अस् इति स्थिते पूर्वसवर्णदीर्घे प्राप्ते । जसि च । 'ह्रस्वस्य गुणः' इत्यनुवर्तते । अङ्गस्येत्यधिकृतं ह्रस्वेन विशेष्यते । तदन्तविधिः । तदाह—ह्रस्वान्तस्येत्यादिना । हरय इति । अलोऽन्त्यपरिभाषया अन्त्यस्य गुणः । इकारस्य तालुस्थानसाम्यादेकारः । अयादेशः । रुत्वविसर्गाविति भावः । हे हरि स् इति स्थिते । ह्रस्वस्य गुणः । 'सम्बुद्धौ च' इत्यतः सम्बुद्धावित्यनुवर्तते । तदाह—ह्रस्वस्येत्यादिना । अनेन रेफादिकारस्य गुण एकारः । सम्बुद्धिलोप इति । एङः परत्वादिति भावः । न त्वत्र ह्रस्वात् परत्वमस्ति, परत्वान्नित्यत्वाच्च सम्बुद्धिगुणे कृते ह्रस्वात् परत्वाभावात् । हरिमिति । अमि पूर्वरूपे रूपम् । हरीनिति । पूर्वसवर्णदीर्घे 'तस्माच्छसः' इति नत्वम् ।

तृतीयैकवचने हरि आ इति स्थिते घिकार्यं वक्ष्यन् घिसंज्ञामाह—शेषो० । 'यू स्त्र्याख्यौ' इत्यतो यू इत्यनुवर्तते । इश्च उश्च यू इवर्णश्च उवर्णश्च । 'ङिति ह्रस्वश्च' इत्यतो ह्रस्व इत्यनुवर्तते । तच्च यूभ्यां प्रत्येकमन्वेति । उक्तात् नदीसंज्ञकाद् अन्यः शेषः । स च यूभ्यां प्रत्येकमन्वेति । शब्दस्वरूपमित्यध्याहार्यं यूभ्यां विशेष्यते । तदन्तविधिः । तदाह—अनदीसंज्ञावित्यादिना । शेषः किमिति । अनदीसंज्ञकत्वविशेषणं किमर्थमिति प्रश्नः । मत्यै इति । शेषग्रहणाभावे 'ङिति ह्रस्वश्च' इति नदीत्वपक्षेऽपि घिसंज्ञा स्यात् । ततश्च 'आण्नद्याः' इत्याडागमे वृद्धौ 'घेर्ङिति' इति गुणे अयादेशे मतयै इति स्यादिति भावः । शेषग्रहणाभावेऽपि मत्यै इत्यत्र घिसंज्ञा न भवति 'आकडारादेका संज्ञा' इत्यनवकाशया नदीसंज्ञया बाधादित्यत आह—एक-

वातप्रम्ये। 'यू' किम्? मात्रे। (२४४) आङो नाऽस्त्रियाम् ७।३।१२०॥ घेः परस्याङो ना स्यादस्त्रियाम्। आङिति टासञ्ज्ञा प्राचाम्। हरिणा। 'अस्त्रियाम्' किम्। मत्या। (२४५) घेर्ङिति ७।३।१११॥ घिसञ्ज्ञकस्य ङिति सुपि गुणः स्यात्। हरये। 'घेः' किम्। सख्ये। 'ङिति' किम्। हरिभ्याम्। 'सुपि'

संज्ञेति। वातप्रम्य इति। ह्रस्वग्रहणाभावे वातप्रमी ए इति स्थिते ईकारान्तस्यापि घिसंज्ञा स्यात्। ततश्च 'घेर्ङिति' इति गुणे अयादेशे च वातप्रमये इति स्यात्। अतो ह्रस्वग्रहणमिति भावः। मात्रे इति। यू इत्यभावे मातृ ए इति स्थिते ऋकारान्तस्यापि घिसंज्ञायां 'घेर्ङिति' इति गुणे अकारे रपरत्वे मातरे इति स्यात्। अतः इदुताविति भावः। वस्तुतस्तु इदुताविति व्यर्थमेव। मात्रे इत्यत्र ऋकारान्तस्य घित्वेऽपि 'घेर्ङिति' इति गुणो न भवति 'ऋतो ङिसर्वनामस्थानयोः' इत्यत्र ङिग्रहणात् ज्ञापकात्। तद्धि मातरि इत्यादौ सप्तम्येकवचने गुणार्थम्। ऋकारान्तस्यापि घित्वे तु घेर्ङिति इत्येव गुणसिद्धौ किं तेन। आङो नाऽस्त्रियाम्। घेः परस्येति। 'अच्च घेः' इत्यतो घिग्रहणानुवृत्तेरिति भावः। हरिणेति। नादेशे 'अट्कुप्वाङ्' इति णत्वम्। ननु आङो विहितो नाभावः कथं टा इत्यस्य स्यादित्यत आह—आङितीति। प्राचामाचार्याणां शास्त्रे संज्ञितेत्यर्थः। मत्येति। 'स्त्रियां क्तिन्' इति क्तिन्नन्तमतिशब्दस्य स्त्रीलिङ्गत्वान्नाभावो नेति भावः। हरिभ्याम्। हरिभिः। हरि ए इति स्थिते। घेङिति। 'सुपि च' इत्यतः सुपीति 'ह्रस्वस्य' इत्यतो गुण इति चानुवर्तते। तदाह—घिसंज्ञकस्येत्यादिना। यणोऽपवादः। हरय इति। गुणे अयादेशे। सुपि किं पट्वीति। 'वोतो गुणवचनात्' इति ङीष्। तस्य ङित्वेऽपि सुप्त्वाभावात् तस्मिन् परतो न गुण इत्यर्थः। न च 'घेर्ङि' इत्येव सूत्र्यताम्, इद्ग्रहणं न कर्तव्यम्। 'यस्मिन् विधिः' इति परिभाषया ङकारादौ सुपीत्यर्थलाभादिति वाच्यम्। एवं सति 'आण्नद्याः' इत्यत्रापि ङीत्येवानुवृत्तौ ङकारादेराम आड् विधीयते। ततश्च मत्यामित्यत्र आण्न स्यात्। आमो ङादित्वाभावात्। न च स्थानिवद्भावेन ङादित्वं शङ्क्यम्, अल्विधित्वात् स्थानिनो ङेर्ङकारस्यादित्वेनाश्रयणात्। इद्ग्रहणे तु स्थानिवद्भावः सम्भवति। अनुबन्धकार्ये कर्तव्ये अनल्विधाविति निषेधाभावात् आमादेशदशायां ङेर्ङकारस्य इत्संज्ञालोपाभ्यामपहृतत्वेन आम्स्थान्यल्त्वाभावात् अनुबन्धानामनेकान्तत्वात्। एकान्तत्वपक्षेऽपि अल्ग्रहणेन अनुबन्धस्य ग्रहणं न भवति, 'अनेकाल्शित्सर्वस्य' इत्यत्र शिद्ग्रहणात् ज्ञापकात्। अन्यथा इदम् इशित्यादि शितां शकारेणानुबन्धेन सहानेकाल्त्वादेव सिद्धे किं तेन। अत एव तिबाद्यादेशेषु पित्त्वादि सिध्यति। अत एव 'सेर्ह्यपिच्च' इत्यत्र अपिदित्यर्थवत्। अन्यथा पित्कार्यस्याल्विधित्वात्तत्र स्थानि-

किम्। पट्वी। 'घेर्ङिति' इति गुणे कृते। (२४६) ङसिङसोश्च ६।१।११०॥ एङो ङसिङसोरति परे पूर्वरूपमेकादेशः स्यात्। हरेः। हरेः। हर्योः। हरीणाम्। (२४७) अच्च घेः ७।३।११९॥ इदुद्भ्यामुत्तरस्य ङेरौत्स्याद् घेरन्तादेशश्चाकारः। वृद्धिः, हरौ। हर्योः। हरिषु। एवं श्रीपत्यग्निरविकव्यादयः। (२४८) अनङ् सौ ७।१।९३॥ सख्युरङ्गस्यानङादेशः स्यादसम्बुद्धौ सौ परे। 'ङिच्च' ( सू ४३ ) इत्यन्तादेशः। ( २४९ ) अलोऽन्त्यात्पूर्व उपधा १।१।६५॥ अन्त्यादलः पूर्वो वर्ण उपधासञ्ज्ञः स्यात्। ( २५० ) सर्वनामस्थाने चास-

---

बद्भावस्यैवाप्रसक्त्या हेः पित्त्वस्यैवाप्रसक्तौ किं तन्निषेधेन। तदिदं स्थानिवत्सूत्रे शब्देन्दुशेखरे प्रपञ्चितम्।

गुणे कृत इति। ङसिङसोरिति शेषः। हरे अस् इति स्थिते अपदान्तत्वात् 'एङः पदान्तात्' इति पूर्वरूपे अप्राप्ते अयादेशे प्राप्ते—ङसिङसोश्च। 'एङः पदान्तात्' इत्यतः एङ इति, अतीति चानुवर्तते। 'अमि पूर्वः' इत्यतः पूर्व इत्यनुवर्तते। 'एकः पूर्वपरयोः' इत्यधिकृतम्। तदाह—एङो ङसिङसोरित्यादिना। हरेः इति। पूर्वपदे रुत्वविसर्गौ। पञ्चम्येकवचनस्य षष्ठ्येकवचनस्य च रूपमेतत्। यद्यपि ङसिङसौ द्वौ, एङौ च द्वौ। तथापि न यथासङ्ख्यमिष्यते। 'यथासङ्ख्यमनुदेशस्समानां, स्वरितेन' इति सूत्रच्छेदमभ्युपगम्य यत्र स्वरितत्वं प्रतिज्ञातं तत्रैव यथासङ्ख्यविज्ञानादिति यथासङ्ख्यसूत्रभाष्ये स्पष्टम्। 'अच्च घेः' 'उपसर्गे घोः किः' इत्यादिनिर्देशाच्च। हर्योरिति। षष्ठीद्विवचने यणादेशे रूपम्। हरीणामिति। 'ह्रस्वनद्यापः' इति नुट्। 'नामि' इति दीर्घः। 'अट्कुप्वाङ्' इति णत्वम्। हरि इ इति स्थिते 'घेर्ङिति' इति गुणे प्राप्ते। अच्च घेः। 'ङेराम्' इत्यतो ङेरित्यनुवर्तते। 'इदुद्भ्याम्' इति 'औत्' इति च सूत्रमनुवर्तते। तदाह—इदुद्भ्यामित्यादिना। अन्तादेश इति। अलोऽन्त्यपरिभाषालभ्यमेतत्। वृद्धिरिति। हर औ इति स्थिते 'वृद्धिरेचि' इति वृद्धौ हरौ इति रूपमित्यर्थः। हरिष्विति। 'आदेशप्रत्यययोः' इति षत्वम्। अथ सखिशब्दात् सुः। सखि स् इति स्थिते। अनङ् सौ। 'सख्युरसम्बुद्धौ' इत्यनुवर्तते। 'अङ्गस्य' इत्यधिकृतम्। तदाह—सख्युरङ्गस्येत्यादिना। सौ इति प्रथमैकवचनम्, न तु सप्तमीबहुवचनम्, असम्बुद्धाविति पर्युदासात्। अनङि ङकार इत् नकारादकार उच्चारणार्थः। अनेकाल्त्वात् सर्वादेशत्वमाशङ्क्य आह–ङिच्चेति। सखन् स् इति स्थिते उपधाकार्यं वक्ष्यन् उपधासंज्ञामाह—अलोऽन्त्यात्। अल इति पञ्चमी। अन्त्यादिति सामानाधिकरण्यात्। अल्प्रत्याहारः वर्णपर्यायः। पूर्वोऽप्यलेव गृह्यते, साजात्यादित्याह—अन्त्यादल इत्यादिना। अलः किम्। शिष्ट इत्यत्र शासधातौ आस् इति सङ्घातात् पूर्वशकारस्य उप-

म्बुद्धौ ६।४।८॥ नान्तस्योपधाया: दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने परे।
(२५१) अपृक्त एकाल्प्रत्ययः १।२।४१॥ एकाल्प्रत्ययो यः सोऽपृक्तसञ्ज्ञः स्यात्।
(२५२) हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ६।१।६८॥ हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सु ति सि इत्येतदपृक्तं हल् लुप्यते। 'हल्ङ्याब्भ्यः' किम्? ग्रामणीः। 'दीर्घात्' किम्? निष्कौशाम्बिः। अतिखट्वः।

---

धात्वं न भवति। अन्यथा 'शास इदङ्हलोः' इति शकारस्य इकारप्रसङ्गः। वर्णग्रहणं किम्। शास्धातौ शा इति समुदायस्य उपधात्वं न भवति। अन्यथा शा इति समुदायस्य इकारः स्यात्। न चालोऽन्त्यपरिभाषया आकारस्यैव इकारो भवतीति वाच्यम्, 'नानर्थकेऽलोऽन्त्यविधिः' इति तन्निषेधात्। सर्वनामस्थाने। 'नोपधायाः' इति सूत्रमनुवर्तते। न इति लुप्तषष्ठीकं पदम्। तेनाङ्गस्येत्यवयवषष्ठ्यन्तं विशेष्यते। तदन्तविधिः। 'ढ्रलोपे' इत्यतो दीर्घ इत्यनुवर्तते। तदाह—नान्तस्येत्यादिना। सखान् स् इति स्थिते अपृक्तकार्यं वक्ष्यन् अपृक्तसंज्ञामाह—अपृक्त इति। एकालिति कर्मधारयः। अत्रैकशब्दोऽसहायवाची। 'एके मुख्यान्यकेवलाः' इत्यमरः। स् इत्यस्यापृक्तसंज्ञायाम्।

हल्ङ्याब्भ्यो। हल् च ङी च आप् च इति द्वन्द्वः। दिग्योगे पञ्चमी। परमित्यध्याहार्यम्। समासैकदेशयोरपि ङ्यापोरेव दीर्घादिति विशेषणम्, न तु हलः, असम्भवात्। एवं च दीर्घादिति द्वित्वे एकवचनमार्षम्। हल्ङ्याब्भ्य इत्यस्य सुतिस्यात्सिप्रकृतिविशेषणतया प्रत्ययग्रहणपरिभाषया च तदन्तविधिः। ततश्च हलन्ताच्च दीर्घङ्याबन्ताच्च परमिति लब्धम्। सुतिसि इति समाहारद्वन्द्वः। अपृक्तमिति हलिति च सामानाधिकरण्येनान्वेति। उकारे इकारे च लुप्ते परिशिष्टः सकारस्तकारश्च सुतिसि इत्यनेन विवक्षितः। ततश्च हलित्यनेन सामानाधिकरण्यं न विरुध्यते। 'लोपो व्योः' इत्यतो लोप इत्यनुवर्तते। तच्च इह कर्मसाधनमाश्रीयते। लुप्यत इति लोपः। कर्मणि घञ्। तदाह—हलन्तात्परमित्यादिना। हल्ङ्याब्भ्यः किमिति। राम इत्यादावदीर्घान्तत्वान्न लोप इति प्रश्नः। ग्रामणीरिति। ग्रामं नयतीति विग्रहः। 'णीञ् प्रापणे' 'सत्सूद्विष' इत्यादिना क्विप्। 'अग्रग्रामाभ्यां नयतेर्णो वाच्यः' इति णत्वम्। हल्ङ्याबन्तत्वाभावान्न सुलोपः। दीर्घात् किमिति। ङ्यापोर्दीर्घत्वाव्यभिचारात् किमर्थं दीर्घत्वविशेषणमिति प्रश्नः। निष्कौशाम्बिः। अतिखट्व इति। निष्क्रान्तः कौशाम्ब्याः, खट्वामतिक्रान्त इति विग्रहे 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः। 'गोस्त्रियोः' इति ह्रस्वत्वम्। अत्र ङ्यापोर्ह्रस्वत्वान्न

'सुतिसि' इति किम् । अभैत्सीत् । तिपा सहचरितस्य सिपो ग्रहणात्सिचो ग्रहणं नास्ति । 'अपृक्तम्' इति किम् । बिभर्ति । 'हल्' किम् । बिभेद । प्रथमहल् किम् । राजा । नलोपादिर्न स्यात् । संयोगान्तलोपस्यासिद्धत्वात् । सखा । हे सखे । ( २५३ ) सख्युरसम्बुद्धौ ७।१।९२॥

सुलोपः । सुतिसि इति किम् अभैत्सीदिति । भिदेर्लुङि सिच् । अत्र तकारात् सकारस्य लोपो न, सुतिस्यन्यतमत्वाभावादित्यर्थः । ननु सिचस्सिरेवायमित्यत आह—तिपेति । तिपा सहचरितस्य विभक्तिरूपस्यैव ग्रहणात् सिचो ग्रहणं नेत्यर्थः । अपृक्तमिति किं बिभर्तीति । अत्र ति इति समुदायस्य न हल्त्वम् । तकारस्तु यद्यपि तेरवयवः हल् । तथापि तस्य नापृक्तत्वम् । वस्तुतस्तु उकारे इकारे च लुप्ते परिशिष्टः सकारस्तकारश्च सुतिसि इत्यनेन गृह्यते, हल्शब्दसामानाधिकरण्यादित्युक्तम् । नात्र इकारलोपोऽस्ति । अतो हल्ग्रहणेनैव बिभर्तीत्यत्र लोपाभावसिद्धेः अपृक्तग्रहणस्य नेदं प्रत्युदाहरणम् । द्वितीयहल्ग्रहणस्य प्रयोजनं पृच्छति—हल् किमिति । बिभेदेति । भिदेर्लिट् तिप् णल् । णलः अकारस्य हल्त्वाभावान्न लोपः । प्रथमहल् किमिति । राजन् स् इति स्थिते उपधादीर्घे संयोगान्तलोपेनैव राजेत्यादिसिद्धेरिति प्रश्नः । नन्विदं राजेति कथं प्रत्युदाहरणम् । संयोगान्तलोपेनैव अन्यथासिद्धत्वादित्यत आह—नलोपादिर्न स्यादिति । संयोगान्तलोपे सति नलोपो न स्यादिति भावः । अभिनोऽत्रेत्यत्र उत्वमादिशब्दार्थः । भिदेर्लङि सिप् । 'इतश्च' इति इकारलोपः । 'सिपि धातो रुर्वा' इति रुत्वम् । सलोपः । अत्र 'अतो रोरप्लुतात्' इत्युत्वं न स्यात् । कुत इत्यत आह—संयोगान्तलोपस्यासिद्धत्वादिति । हल्ङ्यादिलोपस्तु नासिद्धः, षष्ठप्रथमपादस्थत्वादिति भावः । अत्र क्वचित् पुस्तकेषु 'दीर्घात् किमित्यारभ्य संयोगान्तलोपस्यासिद्धत्वात्' इत्यन्तः सन्दर्भो न दृश्यते । युक्तं चैतत्, मूलकृतैव प्रौढमनोरमायामस्य सन्दर्भस्य प्रदर्शितत्वादिति शब्देन्दुशेखरे व्यक्तम् ।

सखेति । सुलोपे सति 'न लोपः' इति नकारलोपः । न चेह सुपमाश्रित्य अनङि कृते तन्नकारमाश्रित्य सोर्लोपो न सम्भवति, सन्निपातपरिभाषाविरोधादिति वाच्यम् । 'स्वतन्त्रः कर्ता' इत्यादिनिर्देशेन अनङो नकारमाश्रित्य सुलोपे कर्तव्ये सन्निपातपरिभाषाया अप्रवृत्तेरित्याहुः । हे सखे इति । 'अनङ् सौ' इत्यत्र असम्बुद्धावित्यनुवृत्तेरनङभावे ह्रस्वस्य गुणे 'एङ्ह्रस्वात्' इति सुलोपे रूपम् । सखि औ इति स्थिते णित्कार्यं वृद्धिं वक्ष्यन् णिद्वद्भावं दर्शयति—सख्युरसम्बुद्धौ । सख्युरिति दिग्योगे पञ्चमी । 'अङ्गस्य' इत्यधिकृतं पञ्चम्या विपरिणम्यते । परमित्यध्याहार्यम् । 'इतोऽत् सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इत्यनुवर्तते । असम्बुद्धावित्यभेदेनान्वेति । 'गोतो णित्' इत्यतो णिदिति प्रथमान्तमनुवृत्तम् । तत्सामानाधिकरण्यात् असम्बुद्धाविति सर्व-

सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात्। **(२५४) अचो ञ्णिति ७।२।११५॥** ञिति णिति च परेऽजन्ताङ्गस्य वृद्धिः स्यात्। सखायौ। सखायः। सखायम्। सखायौ। घिसंज्ञाभावान्न तत्कार्यम्। सख्या। सख्ये। **(२५५) ख्यत्यात्परस्य ६।१।११२॥** खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उत्स्यात्। सख्युः। **(२५६) औत् ७।३।११८॥** इदुद्भ्यां परस्य ङेरौत्स्यात। उकारानुवृत्तिरुत्तरार्था। सख्यौ। शेषं हरिवत्। शोभनः सखा

नामस्थाने इति च सप्तमी प्रथमा कल्प्यते। तदाह—सख्युरङ्गादित्यादिना। णिद्वदिति। णित्कार्यकृत् स्यादित्यर्थः। णिच्छब्दस्तत्कार्यातिदेशार्थ इति भावः। अचो ञ्णिति। ञ् च ण् च ञ्णौ तौ इतौ यस्य तत् ञ्णित्। 'मृजेः' इत्यतो वृद्धिरित्यनुवर्तते। अङ्गस्येत्यधिकृतमचा विशेष्यते। तदन्तविधिः। तदाह—अजन्तस्येत्यादिना। स्थानसाम्यादिकारस्य वृद्धिरैकारः। तस्य आयादेशः इत्यभिप्रेत्य आह—सखायाविति। एवं सखायः, सखायम्, सखायौ। सखीन् इति शसि हरिवद्रूपम्, असर्वनामस्थानत्वाण्णित्वाभावात् न वृद्धिः। घिसंज्ञाभावादिति। 'शेषो घ्यसखि' इत्यत्र असखीति पर्युदासादिति भावः। न तत्कार्यमिति। घिप्रयुक्तकार्यं नेत्यर्थः। सख्येति। सखि आ इति स्थिते घित्वाभावात् 'आङो नाऽस्त्रियाम्' इति नाभावाभावे यणि रूपम्। सख्ये इति। सखि ए इति स्थिते घित्वाभावात् 'घेर्ङिति' इति गुणाभावे यणि रूपम्।

ङसिङसोः सखि अस् इति स्थिते घित्वाभावात् 'घेर्ङिति' इति गुणाभावे यणि सख्यस् इति स्थिते। ख्यत्यात् परस्य। 'खिखी' इत्यनयोः 'तिती' इत्यनयोश्च कृतयणादेशयोः 'ख्यत्य' इति निर्देशः। यकारादकार उच्चारणार्थः। 'एङः पदान्तात्' इत्यतः अतीत्यनुवर्तते। तच्च परस्येति सामानाधिकरण्यात् षष्ठ्यन्तं विपरिणम्यते। 'ङसिङसोश्च' इत्यतो ङसिङसोरित्यनुवर्तते। अवयवषष्ठ्येषा। ततश्च ङसिङसोरवयवस्य अत इति लभ्यते। 'ऋत उत्' इत्यतः उदित्यनुवर्तते। 'एङः पूर्वपरयोः' इति तु निवृत्तम्। परग्रहणसामर्थ्यात्। अन्यथा ख्यत्यादिति पञ्चमीनिर्देशादेव सिद्धे किं तेन। तदाह—खितिशब्दाभ्यामित्यादिना। सख्युरिति। सख्यस् इति स्थिते यकारादकारस्य उकारे रुत्वविसर्गौ। ङौ सखि इ इति स्थिते घित्वाभावात् 'अच्च घेः' इत्यस्याप्रवृत्त्या सवर्णदीर्घे प्राप्ते। औत्। 'इदुद्भ्याम्' इति सूत्रमनुवर्तते। 'ङेराम्' इत्यतो ङेरिति च तदाह—इदुद्भ्यामित्यादिना। ननु घिसंज्ञकेषु हरिकव्यादिषु 'अच्च घेः' इति प्रवर्तते। नदीसंज्ञकेषु तु 'इदुद्भ्याम्' इति पूर्वसूत्रं प्रवर्तते। अतः सूत्रद्वयविषयादन्यौ सखिपतिशब्दौ एवास्य सूत्रस्य विषयौ इति व्यक्तम्। एवं च उकारानुवृत्तिर्व्यर्थेत्यत आह—उकारेति। उकारानुवृत्तिः 'अच्च घेः' इत्युत्तरसूत्रेऽनुवृत्त्यर्थेत्यर्थः।

सुसखा । सुसखायौ । सुसखायः । अनङ्णिद्वद्भावयोराङ्गत्वात्तदन्तेऽपि प्रवृत्तिः । समुदायस्य सखिरूपत्वाभावात् 'असखि' ( सू० २४३ ) इति निषेधाप्रवृत्तेर्घिसंज्ञा । सुसखिना । सुसखये । ङसिङसोर्गुणे कृते कृतयणादेशत्वाभावात् 'ख्यत्यात्—' ( सू० २५५ ) इत्युत्वं न । सुसखेः । सुसखावित्यादि । एवमतिशयितः सखा अतिसखा । 'परमः सखा यस्य' इति विग्रहे परमसखा परमसखायौ इत्यादि । गौणत्वे-

---

सख्यौ इति । ङेरौत्त्वे यणि रूपमिति भावः ।

सुसखेति । प्रादिसमासः । 'राजाहस्सखिभ्यष्टच्' इति टच् तु न भवति, 'न पूजनात्' इति निषेधात् । अनङ् सौ, उपधादीर्घः हल्ङ्यादिलोपः, 'न लोपः' इति नकारलोप इति भावः । सुसखायौ सुसखाय इति । णिद्वद्भावो वृद्धिः आयादेश इति भावः । नन्वनङ्णिद्वत्त्वे सखिशब्दस्य विधीयमाने कथं सुसखिशब्दे स्यातामित्यत आह— अनङ् इत्यादि । अङ्गाधिकारस्थतया 'पदाङ्गाधिकारे' इति परिभाषया सखिशब्दान्तेऽपि प्रवृत्तिरित्यर्थः । नन्वेवं सति सुसखिशब्दे असखि इति पर्युदासात् घित्वाभावे नात्वादि न स्यादित्यत आह—समुदायस्येति । न च सुसखिशब्दस्य सखिशब्दरूपत्वाभावेऽपि सखिशब्दान्तत्वादसखीति पर्युदासोऽपि दुर्निवार इति वाच्यम् । 'शेषो घ्यसखि' इत्यस्य पदाङ्गाधिकारस्थत्वाभावादिति भावः । सुसखिनेति । घित्वान्नात्वे रूपम् । सुसखये इति । 'घेर्ङिति' इति गुणे अयादेशः । ङसीति । ङसिङसोः 'घेर्ङिति' इति गुणे कृते 'ख्यत्यात्' इत्युत्वं नेत्यन्वयः । कुत इत्यत आह—कृतयणादेशत्वाभावादिति । 'ख्यत्यात्' इत्यत्र कृतयणादेशनिर्देशेन यत्र यणादेशप्रवृत्तिस्तत्रैवोत्वप्रवृत्तेरिति भावः । सुसखेरिति । ङसिङसोरेतद्रूपम् । सुसखाविति । 'अच्च घेः' इत्यौत्वम् । एवमिति । सुसखिशब्दवदित्यर्थः । अतिसखेति । प्रादिसमासः 'न पूजनात्' इति न टच् ।

वस्तुतस्तु उदाहृते सुसखिशब्दे अतिसखिशब्दे च घिसंज्ञा न भवत्येव । 'शेषो घ्यसखि' इत्यत्र हि असखीति शेषविशेषणम् । तदन्तविधिः । सखिशब्दान्तभिन्नः शेषो घिसंज्ञक इति लभ्यते । अत एव 'यस्येति च' इति सूत्रे ईकारे परतः इकारलोपे किमुदाहरणम् । सखीत्यत्र 'सख्यशिश्वीति भाषायाम्' इति ङीषि इकारलोपः । न च सवर्णदीर्घेण निर्वाहः शङ्क्यः । सखीमतिक्रान्तः अतिसखिः । प्रादिसमासः । 'गोस्त्रियोः' इति ह्रस्वः । अतिसखेरागच्छति इत्यत्र इकारलोपाभावात् सवर्णदीर्घे तस्य एकादेशस्य पूर्वान्ततया सखिग्रहणेन ग्रहणात् असखीति पर्युदासे घिसंज्ञाप्रतिषेधापत्तेः । इकारलोपे तु सति ङीषो ह्रस्वत्वे कृते नायं सखिशब्दः । ङीषस्तदवयवत्वाभावाद् इति भाष्यं सङ्गच्छते इति शब्देन्दुशेखरे प्रपञ्चितम् । परमसखेति । बहुव्रीहित्वात्तत्पुरुषत्वाभावान्न टच् । ननु बहुव्रीहौ सखिशब्दस्य गौणत्वात् कथम-

ऽप्यनङ्णित्वे प्रवर्तते। सखीमतिक्रान्तोऽतिसखिः। लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्न टच्। हरिवत्। इहानङ्णित्वे न भवतः। 'गोस्त्रियोः–' ( सू ६५६ ) इति ह्रस्वत्वेन सखिशब्दस्य लाक्षणिकत्वात्। 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात्' ( प ११४ ) ( २५७ ) **पतिः समास एव १।४।८॥** पतिशब्दः समास एव घिसंज्ञः स्यात्। पत्या। पत्ये। पत्युः। पत्युः। पतीनाम्। पत्यौ। शेषं हरिवत्। समासे तु भूपतये। कतिशब्दो नित्यं बहुवचनान्तः। ( २५८ )

---

नङ्णित्वे, गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः इति न्यायात्। इत्यत आह—गौणत्वेऽपीति। 'सिद्चोऽन्त्यात्' इति सूत्रे 'तृज्वत् क्रोष्टुः' 'स्त्रियां च' इति (अत्र च) भाष्यकैयटयोस्तथा दृष्टत्वादिति भावः। अतिसखिरिति। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः। 'गोस्त्रियोः' इति ह्रस्वः। 'राजाहस्सखिभ्यष्टच्' इति टच् तु न भवति। तस्मिन् कर्तव्ये ह्रस्वस्य बह्वपेक्षतया बहिरङ्गतया असिद्धत्वेन ईकारान्तत्वात्। नन्वेवमपि 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषया सखीशब्दान्तादपि टच् स्यादित्याशङ्क्य आह–लिङ्गविशिष्टेति। 'शक्तिलाङ्गलाङ्कुश' इति वार्तिके घटघटीग्रहणात्तस्याः अनित्यत्वमिति भावः। ननु हरिवदिति कथम्, अनङ्णिद्वद्भावयोः प्रवृत्तौ रूपभेदादित्यत आह—इहेति। कुतो न भवत इत्यत आह—गोस्त्रियोरिति। लाक्षणिकत्वादिति। लक्षणं शास्त्रं तत्र भवः इत्यर्थे 'बह्वचोऽन्तोदात्तात्' इति वा अध्यात्मादित्वाद्वा ठञ्। अतिसखिशब्दस्वरूपस्य सामान्यतश्शास्त्रादुन्नेयत्वादिति यावत्। सखिशब्दस्तु नैवम्। समानं ख्यायते जनैरित्यर्थे इणिति ङिच्चेति यलोप इति चानुवर्तमाने 'समाने ख्यः स चोदात्तः' इति ख्याधातोरिणश्च विशिष्योपादानेन व्युत्पादितत्वेन तस्य प्रतिपदोक्तत्वादिति भावः। ननु लाक्षणिकस्यापि ग्रहणं कुतो नेत्यत आह—लक्षणेति। लक्षणशब्देन लाक्षणिकं विवक्षितम्। विशिष्य प्रत्यक्षोपदिष्टं प्रतिपदोक्तमित्युच्यते। तयोर्मध्ये प्रतिपदोक्तस्यैव ग्रहणमिति परिभाषितत्वादित्यर्थः। प्रतिपदोक्तं झटित्युपस्थितिकम्। लाक्षणिकं तु लक्षणानुसन्धानाद्विलम्बितोपस्थितिकम्। प्रतिपदोक्तमादाय शास्त्रस्य चरितार्थत्वान्न लाक्षणिके प्रवृत्तिरिति न्यायसिद्धा चेयं परिभाषा।

अथ पतिशब्दे विशेषं दर्शयति—पतिः समास एव। 'शेषो घ्यसखि' इत्यतो घीत्यनुवर्तते। तदाह—पतिशब्द इत्यादिना। पत्या। पत्ये इति। घित्वाभावान्नात्वगुणाभावे यणि रूपम्। पत्युरिति। 'ख्यत्यात्' इत्युत्वम्। पत्याविति। घित्वाभावात् 'अच्च घेः' इत्यभावे 'औत्' इति ङेरौत्वे यणि रूपम्। आरम्भसामर्थ्यादेव नियमार्थत्वे सिद्धे एवकारस्तु पतिरेव समासे घिरिति विपरीतनियमव्यावृत्त्यर्थः। तेन सुहरिणेत्यादि सिद्ध्यति। समासे तु भूपतये इति। भूपतिनेत्याद्युपलक्षणम्। 'सीतायाः

बहुगणवतुडति सङ्ख्या १।१।२३॥ एते संख्यासंज्ञाः स्युः । ( २५९ ) डति च १।१।२५॥ डत्यन्ता सङ्ख्या षट्संज्ञा स्यात् । ( २६० ) प्रत्ययस्य लुक्श्लुलुपः १।१।६१॥ लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं

पतये नमः' इत्यादि स्वार्षम् । अथ कतिशब्दे विशेषं दर्शयति—कतिशब्दो नित्यं बहुवचनान्त इति । 'किमः सङ्ख्यापरिमाणे' इत्यनेन किंशब्दात् बहुत्वसङ्ख्यावच्छिन्नसङ्ख्येयविषयप्रश्न एव डतिः, इति भाष्ये स्पष्टत्वादिति भावः । अथ षट्संज्ञाकार्यं वक्ष्यन् षट्संज्ञोपयोगिनीं सङ्ख्यासंज्ञामाह—बहुगण । बहुश्च, गणश्च, वतुश्च, डतिश्च इति समाहारद्वन्द्वः । एतत् सङ्ख्यासंज्ञं स्यादित्यर्थः । फलितमाह—एते इति । बह्वादय इत्यर्थः । बहुगणशब्दाविह त्रित्वादिपरार्धान्तसङ्ख्याव्यापकधर्मविशेषवाचिनौ गृह्येते, न तु वैपुल्यसङ्घवाचिनौ, सङ्ख्यायतेऽनयेति अन्वर्थसंज्ञाविज्ञानात् । वतुडती प्रत्ययौ । संज्ञाविधावपि इह तदन्तग्रहणम्, केवलयोः प्रयोगानर्हत्वात् । वतुरिह 'यत्तदेतेभ्यः परिमाणे वतुप्' इति तद्धितप्रत्ययो गृह्यते । न तु 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिरपि, उकारानुबन्धात् । डतिरपि 'किमः सङ्ख्यापरिमाणे' 'डति च' इति विहितः तद्धित एव गृह्यते, वतुना साहचर्यात् । न तु भातेर्डवतुरिति विहितः कृदपि । ननु 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इत्यादिसङ्ख्याप्रदेशेषु बह्वादीनामेव चतुर्णां ग्रहणं स्यात् । न तु लोकप्रसिद्धसङ्ख्यावाचकानामपि, 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः' इति न्यायात् । ततश्च 'पञ्चकृत्व' इत्यादि न स्यादिति चेन्न—'सङ्ख्याया अतिशदन्तायाः कन्' इत्यत्र तिशदन्तपर्युदासबलेन सङ्ख्याप्रदेशेषु कृत्रिमाकृत्रिमन्यायाप्रवृत्तिज्ञापनात् । नहि विंशतित्रिंशदादिशब्दानां कृत्रिमा सङ्ख्यासंज्ञाऽस्ति । न चैवं सति बहुगणग्रहणवैयर्थ्यं शङ्क्यम्, तयोर्नियतविषयपरिच्छेदकत्वाभावेन लोकसिद्धसङ्ख्यात्वाभावात् । अत एव भाष्ये 'एतत्सूत्रमतिदेशार्थं यदयमसङ्ख्यां सङ्ख्येत्याह' इत्युक्तं सङ्गच्छत इत्यास्तां तावत् । डति च । डतीत्यविभक्तिको निर्देशः । प्रत्ययत्वात्तदन्तग्रहणम् । पूर्वसूत्रात् सङ्ख्येत्यनुवर्तते । 'ष्णान्ता षट्' इत्यतः षडिति च । तदाह—डत्यन्तेति । सङ्ख्येति किम् ? पतिः ।

अथ षट्संज्ञाकार्यं लुकं वक्ष्यन्नाह—प्रत्ययस्य लुक् । 'अदर्शनं लोपः' इत्यतोऽदर्शनमित्यनुवर्तते । प्रत्ययस्यादर्शनं लुक्श्लुलुप्संज्ञकं स्यादित्यर्थः प्रतीयते । एवं सति एकस्यैव प्रत्ययादर्शनस्य तिस्रोऽपि संज्ञाः स्युः । ततश्च हन्तीत्यत्र शब्लुकि 'श्लौ' इति द्वित्वं स्यात्, जुहोतीत्यत्र श्लौ सति 'उतो वृद्धिर्लुकि हलि' इति वृद्धिः स्यात् । अतो नैवमर्थः । किं तु लुक्श्लुलुप इत्यावर्तते । ततश्च लुक् श्लु लुप् इत्युच्चार्य विहितं प्रत्ययादर्शनं यथासङ्ख्यपरिभाषया क्रमात् लुगादिसंज्ञं स्यादिति लभ्यते । अतो नोक्तसंकर इत्यभिप्रेत्य आह—लुक्श्लुलुप्शब्दैरित्यादिना । फले लुक्, जुहोत्या-

स्यात् । ( २६१ ) षड्भ्यो लुक् ७।१।२२॥ षड्भ्यः परयोर्जश्शसोर्लुक् स्यात् । ( २६२ ) प्रत्ययलोपे प्रत्ययलक्षणम् १।१।६२॥ प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् । इति 'जसि च' ( सू २४१ ) इति गुणे प्राप्ते । (२६३) न लुमताङ्गस्य १।१।६३॥ लुक् श्लु लुप् एते लुमन्तः । लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । कति । कति । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनाम् । कतिषु । अस्मद्युष्मद्षट्संज्ञकास्त्रिषु सरूपाः । त्रिशब्दो नित्यं बहुवचनान्तः ।

---

दिभ्यः श्लुः, जनपदे लुप् इत्यादिविधिप्रदेशेषु 'अस्य सूत्रस्य शाटकं वय' इतिवद्भाविसंज्ञाविज्ञानात् नान्योन्याश्रयः । तदेवं कतिशब्दस्य षट्संज्ञायाम् । षड्भ्यो लुक् । जश्शसोरित्यनुवर्तते । तदाह—षड्भ्यः परयोरित्यादिना । जसि लुप्तेऽपि 'जसि च' इति गुणमाशङ्कितुमाह—प्रत्ययलोपे प्रत्ययलक्षणम् । प्रत्ययः लक्षणं निमित्तं यस्य तत् प्रत्ययलक्षणम् । प्रत्ययस्य लोपे सति प्रत्ययनिमित्तकं कार्यं स्यादित्यर्थः । फलितमाह—प्रत्यये लुप्तेऽपीत्यादिना । स्थानिवद्भावादेव सिद्धे अल्विध्यर्थमिदं सूत्रम् । यत्र प्रत्ययस्यासाधारणं रूपं प्रयोजकं तदेव कार्यं प्रत्ययलोपे सति भवतीति नियमार्थं चेति भाष्यादिषु स्पष्टम् । इति जसि चेतोति । अनेन सूत्रेण लुप्तं प्रत्ययमाश्रित्य 'जसि च' इति गुणे प्राप्ते इत्यर्थः । न लुमताङ्गस्य । प्रत्ययलोपे प्रत्ययलक्षणमित्यनुवर्तते । लु इत्येकदेशोऽस्यास्तीति लुमान् । लुक्शब्दः श्लुशब्दः लुप्शब्दश्च । तेन शब्देन प्रत्ययलोपे विहिते सति प्रत्ययनिमित्तकमङ्गकार्यं न स्यादित्यर्थः । तदाह—लुक्श्लु-इत्यादिना । अङ्गस्य इत्यनुक्तौ पञ्च सप्त इत्यादौ 'सुप्तिङन्तम्' इति पदसंज्ञा न स्यात्, जश्शसोर्लुका लुप्तत्वात् । ततश्च 'न लोपः प्रातिपदिकान्तस्य' इति नलोपो न स्यात् । अतोऽङ्गस्येत्युक्तम् । एवं च जसि लुका लुप्ते प्रत्ययलक्षणाभावात् 'जसि च' इति गुणो न भवति इत्यभिप्रेत्योदाहरति—कतीति । प्रसङ्गादाह—अस्मदिति । त्रिष्विति । पुंस्त्रीनपुंसकेष्वित्यर्थः । सरूपा इति । समानानि रूपाणि येषामिति विग्रहः । लिङ्गविशेषबोधकटाबाद्यभावादिति भावः । न चैवं सति 'अलिङ्गे युष्मदस्मदी' इति 'साम आकम्' इति सूत्रस्थभाष्यविरोध इति वाच्यम्, पदान्तरसंनिधानं विना लिङ्गविशेषो युष्मदस्मच्छब्दाभ्यां न प्रतीयत इति हि तदर्थः । अत एव 'न षट्स्वस्रादिभ्यः' इति पञ्चनादिषट्संज्ञकेभ्यः टाब्ङीब्निषेधः सङ्गच्छते । अन्यथा स्त्रीत्वाभावादेव तदभावे सिद्धे किं तेन । अत एव च 'ङे प्रथमयोः' इति सूत्रे भाष्ये युष्मानित्यत्र 'तस्माच्छसो नः पुंसि' इत्युपन्यासः सङ्गच्छते । अत एव च 'नेतराच्छन्दसि' इति सूत्रे शिशीनुमादिभिर्युष्मदस्मदाद्यादेशानां विप्रतिषेधपरं वार्तिकं तद्भाष्यं च सङ्गच्छत इति दिक् ।

त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः । त्रिभ्यः । ( २६४ ) त्रेस्त्रयः ७।१।५३॥ त्रिशब्दस्य त्रयादेशः स्यादामि । त्रयाणाम् । परमत्रयाणाम् । गौणत्वे तु नेति केचित् । प्रियत्रीणाम् । वस्तुतस्तु प्रियत्रयाणाम् । त्रिषु । द्विशब्दो नित्यं द्विवचनान्तः । (२६५) त्यदादीनामः ७।२।१०२॥ एषामकारोऽन्तादेशः स्याद्विभक्तौ । 'द्विपर्यन्तानामेवेष्टिः' ( वा ४४६८ ) द्वौ । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः । 'द्विपर्यन्तानाम्' इति किम् । भवान् । भवन्तौ । भवन्तः । संज्ञायामुपस-

---

त्रिशब्दे विशेषमाह । त्रिशब्द इति । त्रि आम् इति स्थिते नुटि दीर्घे णत्वे त्रीणामिति प्राप्ते । त्रेस्त्रयः । 'आमि सर्वनाम्नः' इत्यतः आमीत्यनुवर्तते । तदाह—त्रिशब्दस्येत्यादिना । अनेकाल्त्वात् सर्वादेशः । नुट् दीर्घश्च । तदाह—त्रयाणामिति । 'त्रेरयङ्' इति तु नोक्तम्, इयङ् अनङ् इत्यादिवत् ङकारात्पूर्वस्य अकारस्य उच्चारणार्थत्वशङ्काप्रसङ्गात् । अङ्गाधिकारस्थत्वात् 'पदाङ्गाधिकारे' इति परिभाषया त्रेरिति तदन्तग्रहणमित्यभिप्रेत्योदाहरति—परमत्रयाणामिति । परमाश्च ते त्रयश्चेति विग्रहः । प्रियाः त्रयो यस्य इति प्रियत्रिशब्दो बहुव्रीहिः । तस्यान्यपदार्थप्रधानत्वादेकद्विबहुवचनानि सन्ति । अतो हरिवत्तस्य रूपाणि । तत्र त्रयादेशमाशङ्क्य आह—गौणत्वे त्विति । त्रिशब्दस्य उपसर्जनत्वे 'त्रेस्त्रयः' इति न भवतीति केचिदाहुरित्यर्थः । 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति न्यायाद् इति भावः । वस्तुतस्त्विति । प्रियत्रयाणामित्येव रूपं वस्तुत्वेन ज्ञेयमित्यर्थः । प्रामाणिकमिति यावत् । गौणमुख्यन्यायस्त्वत्र न प्रवर्तते, तस्य पदकार्य एव प्रवृत्तेः । अत एव उपसर्जनानां सर्वनामत्वप्रतिषेध आरब्धो वार्तिककृता । अत एव च प्रियतिस्रेत्यादौ तिस्रादयः भाष्ये उदाहृताः सङ्गच्छन्त इत्यन्यत्र विस्तरः ।

अथ द्विशब्दे विशेषमाह—द्विशब्द इति । तस्य द्वित्वनियतत्वादिति भावः । द्वि औ इति स्थिते । त्यदादीनामः । 'अष्टन आ विभक्तौ' इत्यतो विभक्तावित्यनुवर्तते । एषामिति । त्यदादीनामित्यर्थः । त्यद् आदिर्येषामिति विग्रहः । अन्तादेश इत्यलोऽन्त्यपरिभाषालभ्यः । विभक्तौ किम् ? तत् फलम् । 'स्वमोर्नपुंसकात्' इति लुकि अत्वं न । द्विपर्यन्तानामिति । सर्वादिगणे ये त्यदादयः पठिताः तेषामिह द्विपर्यन्तानामेव ग्रहणे भाष्यकारस्य इच्छेत्यर्थः । द्विशब्दस्य द्विवचनेषु परतोऽत्वे कृते रामशब्दवद्रूपाणीत्याह—द्वावित्यादि । द्विपर्यन्तानामिति किमिति । युष्मदस्मदोरात्वयत्वलोपैर्बाधात् किमः कादेशविधानाच्च तेषां त्यदादिष्वन्तर्भावेऽपि न दोष इति प्रश्नः । भवान् । भवन्ताविति । भवत् स् इति स्थिते 'उगिदचाम्' इति नुमि हल्ङ्यादिलोपे संयोगान्तलोपे 'अत्वसन्तस्य च' इति दीर्घे भवानिति रूपम् । द्विप-

र्जनत्वे च नात्वम् । सर्वाद्यन्तर्गणकार्यत्वात् । द्विर्नाम कश्चित् । द्विः । द्वी । द्वयः । द्वावतिक्रान्तोऽतिद्विः । हरिवत् । प्राधान्ये तु परमद्वावित्यादि । औडुलोमिः । औडुलोमी । बहुवचने तु उडुलोमाः । 'लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः' (वा २५६०)। बाह्वादीञोऽपवादः । औडुलोमिम् । औडुलोमी । उडुलोमान् । इति इदन्ताः ॥ 'वातप्रमीः' (उ ४४१) इत्युणादिसूत्रेण माङ ईप्रत्ययः । स च कित् । वातं प्रमिमीते इति वातप्रमीः । 'दीर्घाज्जसि च' (सू २३९)। वातप्रम्यौ । वात-

---

र्यन्तानामित्यभावे तु भवत् स् इति स्थिते तकारस्य अत्वे कृते 'अतो गुणे' इति पररूपे 'उगिदचाम्' इति नुमि 'सर्वनामस्थाने' इति दीर्घे सुलोपे नलोपे भवा इति स्यात् । तथा भवत् औ इति स्थिते पूर्ववत्तकारस्य अत्वे पररूपे नुमि दीर्घे च भवानाविति स्यादिति भावः । अथ यदुक्तं 'संज्ञोपसर्जनीभूतानां सर्वादिगणकार्यमन्तर्गणकार्यं च न भवति' इति तत् स्मारयति—संज्ञायामित्यादिना । द्विर्नामेति । नामेत्यव्ययं प्रसिद्धौ । द्विरिति प्रसिद्धः कश्चित् इत्यर्थः । अत्र च संज्ञाभूतस्य द्विशब्दस्य एकद्विबहुवचनानि सन्ति, एकद्वित्र्यादिष्वपि द्विसंज्ञकत्वसम्भवादित्यभिप्रेत्य आह—द्विः द्वौ द्वय इति । अतिद्विरिति । 'अत्यादयः' इति समासः । परमद्वाविति । कर्मधारयोऽयम् । 'संज्ञोपसर्जनत्वाभावादिह अत्वं भवत्येव । आङ्गत्वेन पदाङ्गाधिकारपरिभाषया तदन्तग्रहणादिति भावः ।

उडूनि नक्षत्राणीव लोमानि यस्य सः उडुलोमाः । तस्यापत्यमौडुलोमिः 'बाह्वादिभ्यश्च' इति इञ् । 'नस्तद्धिते' इति टिलोपः । आदिवृद्धिः । अस्य एकवचनद्विवचनयोः सर्वत्र हरिवद्रूपम् । तदाह—औडुलोमिः । औडुलोमी इति । बहुवचने तु उडुलोमा इति । ननु तथा रूपं कथम्, बाह्वादिगणस्थत्वेन इञः प्रसङ्गादित्यत आह—लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः । लोमन्शब्दात् बहुष्वपत्येषु विवक्षितेषु अकारः प्रत्ययो वक्तव्य इत्यर्थः । बाह्वादीञ इति । बाह्वादिगणाद्विहितस्य इञोऽपवाद इत्यर्थः । उडुलोमन् अ इति स्थिते 'नस्तद्धिते' इति टिलोपः । ञित्वाभावात् कित्वाभावाच्च नादिवृद्धिः । उडुलोमशब्दः अकारान्तः । तस्य सर्वत्र बहुवचनेषु रामवद्रूपमिति भावः । इति इदन्तप्रकरणम् ।

अथेदानीमीकारान्ता निरूप्यन्ते । तत्र वातप्रमीशब्दो द्विधा । 'माङ् माने' इति धातोरीप्रत्ययान्तः क्विबन्तश्च । तत्र प्रथमं व्युत्पादयति—वातप्रमीरित्यादिना । किदित्यनन्तरं निपात्यत इति शेषः । वातमिति । वातमित्युपपदे कर्तरि माङ्धातोरीप्रत्यये कित्वात् 'आतो लोप इटि च' इत्याल्लोपे 'उपपदमतिङ्' इति समासे तस्मात् सुबुत्पत्तौ वातप्रमीरिति प्रथमैकवचनम् । अङ्यन्तत्वान्न सुलोपः । एतदर्थमेव हल्ङ्यादिसूत्रे

प्रम्यः । हे वातप्रमीः । 'अमि पूर्वः' ( सू १९४ ) । वातप्रमीम् । वातप्रम्यौ । वातप्रमीन् । वातप्रम्या । वातप्रमीभ्याम् । वातप्रम्ये । वातप्रमीभ्याम् । वातप्रम्यः । वातप्रमीभ्याम् । वातप्रम्यः । वातप्रम्योः । वातप्रम्याम् । दीर्घत्वान्न नुट् । ङौ तु सवर्णदीर्घः । वातप्रमी । वातप्रम्योः । वातप्रमीषु । एवं ययीपप्यादयः । यान्त्यनेनेति ययीर्मार्गः । पाति लोकमिति पपीः सूर्यः । 'यापोः किद् द्वे च' ( उ ४२९ ) इति ईप्रत्ययः । क्विबन्तवातप्रमीशब्दस्य त्वमि शसि ङौ च विशेषः । वातप्रम्यम् । वातप्रम्यः । वातप्रम्यि । 'एरनेकाचः—' ( सू २७२ ) इति वक्ष्यमाणो यण् । प्रधी-

---

सत्यपि दीर्घग्रहणे ङीब्ग्रहणमिति भावः। दीर्घादिति । वातप्रमी औ इति स्थिते 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घे निषिद्धे 'इको यणचि' इति यणि वातप्रम्याविति रूपमित्यर्थः । हे वातप्रमीरिति । दीर्घान्तत्वात् 'ह्रस्वस्य गुणः' इति न । अमीति । वातप्रमी अम् इति स्थिते 'अमि पूर्वः' इति पूर्वरूपे वातप्रमीमिति रूपमित्यर्थः । 'एरनेकाचः' इति यण्तु न, ईप्रत्ययान्तस्य धातुत्वाभावात् । वातप्रमीनिति । पूर्वसवर्णदीर्घे 'तस्माच्छसः' इति नत्वम् । वातप्रम्येति । अघित्वात् 'आङो नाऽस्त्रियाम्' इति नाभावस्याभावे यण् । वातप्रम्ये इति । अघित्वात् ङेङसिङस्सु 'घेर्ङिति' इति गुणो न । वातप्रम्यामिति । आमि यणादेशे रूपम् । दीर्घत्वान्न नुट्, 'ह्रस्वनद्यापः' इति । ह्रस्वग्रहणादिति भावः । ङौ त्विति । वातप्रमी इ इति स्थिते परत्वाद्यणादेशं बाधित्वा सवर्णदीर्घे वातप्रमी इति रूपम् । अघित्वादिदुदन्तत्वाभावाच्च 'अच्च घेः' इति, 'औत्' इति च न भवति । वस्तुतस्तु 'ईदूतौ च सप्तम्यर्थे' इति सूत्रे 'सप्तम्यन्तमीदूदन्तं लोके नास्ति । अतः 'सोमो गौरी अधिश्रितः' 'मामकी तनू' इति वेद एव तदुदाहरणम् इति भाष्यविरोधाद्वातप्रमी इति सप्तम्यन्तस्य लोके प्रयोगो नेत्यनुमीयत इति शब्देन्दुशेखरे स्पष्टम् । यापोरिति । 'यापोः किद् द्वे च' इति औणादिकसूत्रम् । याधातोः, पाधातोश्च ईप्रत्ययः स्यात्, स कित् । प्रकृतिभूतयोर्द्वित्वं चेत्यर्थः । कित्त्वात् 'आतो लोप इटि च' इत्याल्लोपः । अभ्यासह्रस्वः । क्विबन्तवातेति । 'माङ् माने' इत्यस्मात् कर्तरि क्विपि 'घुमास्था' इति ईत्वे वातप्रमीशब्द इति केचित् । तन्न, 'ईत्त्वमवकारादौ' इति वार्तिकविरोधात् । मीञ् हिंसायाम् इति मीधातोः क्विपि तु वातप्रमीशब्दो निर्बाधः, वक्ष्यमाणो यणिति । अमि पूर्वरूपं, शसि पूर्वसवर्णदीर्घं, ङौ सवर्णदीर्घं च बाधित्वा परत्वात् 'एरनेकाचः' इति यण्, ईकारान्तधातुत्वादिति भावः । प्रधीवदिति । प्रकृष्टं ध्यायतीति प्रधीः । 'ध्यायतेः सम्प्रसारणं च' इति क्विपि यकारस्य सम्प्रसारणमिकारः । 'सम्प्रसारणाच्च' इति पूर्वरूपम् । 'हलः' इति दीर्घः । अस्य च ईकारान्तधा–

वत्। बह्व्यः श्रेयस्यो यस्य सः बहुश्रेयसी। दीर्घङ्यन्तत्वात् 'हल्ङ्याप्—' ( सू २५२ ) इति सुलोपः। ( २६६ ) यू स्त्र्याख्यौ नदी १।४।३॥ ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः। 'प्रथमलिङ्गग्रहणं च' ( वा १०३६ )। पूर्वं स्त्र्याख्यस्योपत्वात् अलि शसि ङौ च 'एरनेकाचः' इति यणादेशः।

बह्व्य इति। 'बह्वादिभ्यश्च' इति ङीप्। श्रेयस्य इति। अतिप्रशस्ता इत्यर्थः। 'द्विवचनविभज्योपपदे' इति ईयसुन्। 'प्रशस्यस्य श्रः' इति श्रः। 'उगितश्च' इति ङीप्। बहुश्रेयसीति। 'स्त्रियाः पुंवत्' इति पुंवत्त्वम्। 'गोस्त्रियोः' इति ह्रस्वस्तु न 'ईयसो बहुव्रीहेर्नेति वाच्यम्' इति तन्निषेधात्। बहुश्रेयसी स् इति स्थिते प्रक्रियां दर्शयति—दीर्घङ्यन्तत्वादिति। ननु श्रेयसीशब्द एव ङ्यन्तः। प्रत्ययग्रहणे यस्मात् स विहितस्तदादेरेव ग्रहणात्। न च 'स्त्रीप्रत्यये न तदादिनियमः' इति निषेधान्नेह तदादिनियम इति वाच्यम्, अनुपसर्जन एव स्त्रीप्रत्यये हि 'न तदादिनियमः' इति प्रतिषेधः। इह तूपसर्जनत्वात्तदादिनियमोऽस्त्येवेति चेत्' अस्तु श्रेयसीशब्दस्यैव ङ्यन्तत्वम्, न तु बहुश्रेयसीशब्दस्य। तथापि हल्ङ्यादिलोपोऽत्र निर्बाधः। सोः ङ्यन्तात् श्रेयसीशब्दात्परत्वस्य अनपायात्। नहि हल्ङ्याब्भ्य इति विहितविशेषणम्, प्रमाणाभावात्। या सा का इत्यादावव्याप्तेश्च तत्र सोष्टावन्ताद्विहितत्वाभावात् यत्तत्किमिति हलन्तेभ्यस्सुबुत्पत्तौ त्यदाद्यत्वे ( किमः कत्वे च ) सत्येव टापः प्रवृत्तेः। न च तत्र हलन्ताद्विहितत्वेन निर्वाहः शङ्क्यः, यः सः कः इत्यादावतिव्याप्तेः, कर्ता सखा इत्यादावव्याप्तेश्चेत्यास्तां तावत्। 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधे यणि बहुश्रेयस्यौ। बहुश्रेयस्यः। हे बहुश्रेयसी स् इति स्थिते नदीकार्यं वक्ष्यन् नदीसंज्ञामाह—यू स्त्र्याख्यौ नदी। ईश्च ऊश्च यू। पूर्वसवर्णदीर्घः। 'दीर्घाजसि च' इति निषेधाभावश्छान्दसः। व्याख्यानाद्दीर्घयोरेव ग्रहणम्। स्त्रियमाचक्षाते स्त्र्याख्यौ। शब्दावित्यर्थाल्लभ्यते। यू इति तद्विशेषणम्। तदन्तविधिः। स्त्रियामित्येव सिद्धे आख्याग्रहणं नित्यस्त्रीलिङ्गलाभार्थम्। द्वित्वे नदीत्येकवचनं छान्दसम्। तदाह—ईदूदन्तावित्यादिना। यू किम् मात्रे। 'आण्नद्याः' इति न भवति। स्त्रीलिङ्गाविति किम्? वातप्रम्ये। नित्येति किम्? ग्रामण्ये। ननु प्रकृते बहुश्रेयसीशब्दस्य पुंल्लिङ्गत्वात् कथं नदीसंज्ञेत्यत आह—प्रथमलिङ्गग्रहणं चेति। वार्त्तिकमेतत्। प्रथमस्य समासादिवृत्तिप्रवृत्तेः पूर्वं प्रवृत्तस्य स्त्रीलिङ्गस्य 'यू स्त्र्याख्यौ' इत्यत्र ग्रहणं कर्तव्यमित्यर्थः। नन्वेवं सति समासादिवृत्त्यभावे गौर्यादिशब्दानां नदीत्वं स्यादित्याशङ्क्य अपिशब्दमध्याहृत्य व्याचष्टे—पूर्वमित्यादिना। समासादिवृत्तिप्रवृत्तेः पूर्वं स्त्रीलिङ्गस्य सतः वृत्तिदशायामुपसर्जनतया स्त्रीलिङ्गत्वाभावेऽपि नदीत्वं वक्तव्यमिति वा-

सर्जनत्वेऽपि इदानीं नदीत्वं वक्तव्यमित्यर्थः। (२६७) अम्बार्थनद्योर्ह्रस्वः ७।३।१०७॥ अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात् सम्बुद्धौ। हे बहुश्रेयसि। शसि बहुश्रेयसीन्। (२६८) आण्नद्याः ७।३।११२॥ नद्यन्तात्परेषां ङितामाडागमः स्यात्। (२६९) आटश्च ६।१।९०॥ आटोऽचि परे वृद्धिरेकादेशः स्यात्। बहुश्रेयस्यै। बहुश्रेयस्याः। बहुश्रेयस्याः। नद्यन्तात्परत्वान्नुट्। बहुश्रेयसीनाम्। (२७०) ङेराम्नद्याम्नीभ्यः ७।३।११६॥ नद्यन्तादावन्तान्नीशब्दाच्च ङेराम्

---

र्तिकार्थ इति भावः। अम्बार्थनद्योर्ह्रस्वः। अम्बार्थानामिति। अम्बापर्यायाणामित्यर्थः। नद्यन्तानामिति। अङ्गाधिकारस्थत्वात्तदन्तविधिः। तुल्यन्यायत्वादम्बार्थानामित्यत्रापि तदन्तविधिर्बोध्यः। सम्बुद्धाविति। 'सम्बुद्धौ च' इत्यतस्तदनुवृत्तेरिति भावः। अम्बागौर्यादिशब्देषु ह्रस्वत्वं तु व्यपदेशिवद्भावेन तदन्तत्वात् ज्ञेयम्। हे बहुश्रेयसि इति। ह्रस्वे सति 'एङ्ह्रस्वात्' इति सम्बुद्धिलोपः। ह्रस्वे गुणस्तु न, प्रक्रियालाघवाय 'अम्बार्थनद्योर्ह्रस्वः' इत्यनुक्त्वा 'अम्बार्थनद्योर्गुणः' इति वाच्ये ह्रस्वविधिसामर्थ्यादिति स्पष्टं भाष्ये। बहुश्रेयस्यौ। बहुश्रेयस्यः। 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधे यण्। 'अमि पूर्वः' बहुश्रेयसीम्। बहुश्रेयस्यौ। बहुश्रेयसीन् इति। पूर्वसवर्णदीर्घे सति 'तस्माच्छसः' इति नत्वमिति भावः। बहुश्रेयस्या। अघित्वाद्घाभावो न, किन्तु यणादेशः। बहुश्रेयसीभ्याम्। बहुश्रेयसीभिः। बहुश्रेयसी ए इति स्थिते घित्वाभावान्न तत्कार्यम्।

यणि बहुश्रेयस्ये इति प्राप्ते। आण्नद्याः। अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते। नद्या इति पञ्चम्यन्तेन विशेष्यते। तदन्तविधिः। घेर्ङितीति इत्यतः ङितीत्यनुवृत्तं षष्ठ्या विपरिणम्यते। तदाह—नद्यन्तादित्यादिना। टित्वादाद्यवयवः। बहुश्रेयसी आ ए इति स्थिते। आटश्च। 'इको यणचि' इत्यतः अचीति 'वृद्धिरेचि' इत्यतः वृद्धिरिति चानुवर्तते। 'एकः पूर्वपरयोः' इति चाधिकृतम्। तदाह—आटोऽचीत्यादिना। बहुश्रेयस्यै इति। बहुश्रेयसी आ ए इति स्थिते 'आटश्च' इति वृद्धौ यणादेशे च रूपमिति भावः। यद्यपि 'वृद्धिरेचि' इत्येव सिद्धम्। तथापि ऐक्षत इत्याद्यर्थम् 'आटश्च' इति सूत्रम्, इहापि न्याय्यत्वादुपन्यस्तम्। बहुश्रेयस्या इति। ङसिङसोर्बहुश्रेयसी आ अस् इति स्थिते 'आटश्च' इति वृद्धौ आकारे यणि रूपमिति भावः। अत्रापि सवर्णदीर्घेण सिद्धम्। न्याय्यत्वात् 'आटश्च' इति वृद्धिः। नद्यन्तात्परत्वादिति। श्रेयसीशब्दस्य ईकारान्तनित्यस्त्रीलिङ्गतया नदीत्वेन बहुश्रेयसीशब्दस्य नद्यन्तत्वादिति भावः। बहुश्रेयसी इ इति स्थिते 'अच्च घेः' इति 'इदुद्भ्याम्' इति च न भवति अघित्वात्। सवर्णदीर्घे प्राप्ते। ङेराम्नद्याम्नी

स्यात्। इह परत्वादाटा नुड् बाध्यते। बहुश्रेयस्याम्। शेषमीप्रत्ययान्तवातप्रमीवत्। अङ्यन्तत्वान्न सुलोपः। अतिलक्ष्मीः। शेषं बहुश्रेयसीवत्। कुमारीमिच्छन् कुमारीवाचरन् वा ब्राह्मणः कुमारः। क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप्। 'हल्ङ्याप्—' ( सू २५२ ) इति सुलोपः। **(२७१) अचि श्नुधातुभ्रुवां**

य्वः। आङ्गत्वात् प्रत्ययग्रहणपरिभाषया च तदन्तविधिम् अभिप्रेत्य आह—नद्यन्तादित्यादिना। ङेरिति सप्तम्येकवचनं, व्याख्यानात्। नन्वामि कृते 'ह्रस्वनद्यापः' इति नुटि 'यदागमा' इति न्यायेन नामोऽप्याम्ग्रहणेन ग्रहणात् 'आण्नद्याः' इति आडागमः स्यादित्याशङ्क्य आह—इह परत्वादिति। न च कृतेऽप्याडागमे नुट् किं न स्यादिति वाच्यम्, 'विप्रतिषेधेन यद्बाधितं तद्बाधितमेव' इति न्यायादिति भावः। शेषमीप्रत्ययान्तेति। वातप्रमीशब्दस्यापि इवर्णान्तधातुत्वाभावेन अमि शसि ङौ च 'एरनेकाचः' इति यणः प्राप्त्यभावादिति भावः। 'लक्षेर्मुट् च' इति लक्षधातोरीप्रत्यये तस्य मुटि च लक्ष्मीशब्दः। लक्ष्मीमतिक्रान्त इति विग्रहे 'अत्यादयः क्रान्ताद्यर्थे' इति समासः। अस्त्रीप्रत्ययान्तत्वान्नोपसर्जनह्रस्वः। अङ्यन्तत्वादिति। औणादिकप्रत्ययान्तत्वादिति भावः। शेषं बहुश्रेयसीवदिति। 'प्रथमलिङ्गग्रहणं च' इति नदीत्वादिति भावः।

अथ धातुत्वमापन्ने कुमारीशब्दे पुंलिङ्गे श्रेयसीशब्दाद्वैलक्षण्यं दर्शयितुमाह—कुमारीमिच्छन्नित्यादिना। क्यजन्तादिति। कुमारीमात्मनः इच्छतीत्यर्थे 'सुप आत्मनः क्यच्' इति क्यच्। कचावितौ। 'सनाद्यन्ताः' इति क्यजन्तस्य धातुत्वात् तदवयवसुपः अमः 'सुपो धातुप्रातिपदिकयोः' इति लुक्। ततः 'क्विप् च' इति कर्तरि क्विप्। कपावितौ। इकार उच्चारणार्थः। अतो लोपः, 'लोपो व्योः' इति यलोपः। 'वेरपृक्तस्य' इति वलोपः। कुमारी इति रूपम्। आचारक्विबन्तादिति। कुमारीवाचरतीत्यर्थे 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' इति क्विप्। कपावितौ। 'वेरपृक्तस्य' इति वलोपः। 'सनाद्यन्ताः' इति धातुत्वात् कर्तरि क्विप्। तस्य च पूर्ववत् कृत्स्नलोपः। कुमारीति रूपम्। न च क्विबर्थं प्रति कुमारीशब्दस्य उपसर्जनत्वात् 'गोस्त्रियोः' इति ह्रस्वः शङ्क्यः, 'गोस्त्रियोः' इत्यत्र शास्त्रीयोपसर्जनस्यैव ग्रहणात् कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणात्। हल्ङ्याबिति सुलोप इति। न च क्यजन्ते कथं सोर्लोपः पूर्वस्माद्विधावल्लोपस्य स्थानिवद्भावादिति वाच्यम्, 'क्वौ लुप्तं न स्थानिवत्' इति निषेधादिति भावः। कुमारी औ इति स्थिते 'इको यणचि' इति यणपवादमियङमाशङ्कितुमाह—अचि श्नु। इश्च उश्च यू तयोः य्वोः इवर्णोवर्णयोरित्यर्थः। श्नुश्च धातुश्च भ्रूश्चेति द्वन्द्वः। प्रत्ययग्रहणपरिभाषया श्नुप्रत्ययान्तं विवक्षितम्। य्वोरिति धातोरेव विशेषणम्। तदन्तविधिः। श्नुभ्रुवोस्तु नित्यमुवर्णान्तत्वान्न तद्विशेष-

**श्नुधातुभ्रुवां य्वोरियङुवङौ ६।४।७७॥** श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तस्य धातोः 'भ्रू' इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे। 'ङिच्च' ( सू ४३ ) इत्यन्तादेशः। आन्तरतम्यादेरियङ्। ओरुवङ्। इतीयङि प्राप्ते। **(२७२) एरनेकाचोऽसंयोगपूर्वस्य ६।४।८२॥** धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे। इति यण्। कुमार्यौ।

---

णम्। इवर्णान्तत्वं तु असम्भवान्न तद्विशेषणम्। 'सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्' इति न्यायात्। अङ्गस्येत्यधिकृतम्। ततश्च प्रत्यये परत इति लभ्यते। अचीति तद्विशेषणम्। तदादिविधिः। तदाह—श्नुप्रत्ययान्तस्येत्यादिना। य्वोः किम्? चक्रतुः। अचीति किम्? आप्नुयात्। इयङ् उवङ् इत्यनयोरनेकाल्त्वात् सर्वादेशत्वसाशङ्क्य आह—ङिच्चेत्यन्तादेश इति। न च 'श्नुधातुभ्रुवाम् इवर्णोवर्णयोः' इत्येवं व्याख्यायतां ङित्वं च न क्रियतामिति वाच्यम्, एवं सति 'क्षिपति' इत्यादावतिव्याप्तेः। न च अजादिप्रत्यये परत इत्यनेन तन्निरासः शङ्क्यः, अङ्गाक्षिप्तप्रत्ययपरकत्वस्याङ्गविशेषणताया एवोचितत्वादित्यलम्। आन्तरतम्यादिति। तालुस्थानकस्य इवर्णस्य तादृश एव इयङ्। ओष्ठस्थानकस्य उवर्णस्य तादृश एवोवङित्यर्थः। इतीयङि प्राप्ते इति। कुमारी औ इत्यादाविति शेषः।

एरनेकाचः। 'इणो यण्' इत्यतः यणित्यनुवर्तते। एरिति षष्ठ्यन्तम्। इवर्णस्येत्यर्थः। पूर्वसूत्रे 'श्नुधातुभ्रुवाम्' इति द्वन्द्वनिर्देशेऽपि धातोरिति पृथक्कृत्य षष्ठ्यन्तमनुवर्तते। न तु श्नुभ्रुवावपि तत्र इवर्णाभावात्। धातोरित्यनुवृत्तं चावर्तते। एकमवयवषष्ठ्यन्तम्। अन्यत् स्थानषष्ठ्यन्तम्। एरिति च धातोरिति षष्ठ्यन्तस्य विशेषणम्। तदन्तविधिः। इवर्णान्तधातोरित्यर्थः। अवयवषष्ठ्यन्तकृतधातोरित्येतत् असंयोगपूर्वस्येत्यत्र संयोगांशे अन्वेति। धात्ववयवसंयोगः पूर्वो यस्मात् स धात्ववयवसंयोगपूर्वः तद्भिन्नः असंयोगपूर्वः तस्येति। इवर्णविशेषणम्। अङ्गस्येत्यधिकृतं स्थानषष्ठ्यन्तधातुना विशेष्यते। तदन्तविधिः। अनेकः अच् यस्य तस्य अनेकाच इति अङ्गान्वयि। 'अचि श्नुधातुभ्रुवाम्' इत्यतोऽचीत्यनुवर्तते। तच्चाङ्गाक्षिप्तस्य प्रत्ययस्य विशेषणम्। तदादिविधिः। तदाह—धात्ववयवेत्यादिना। हरिं हरीन् इत्यादौ यणिनवृत्त्यर्थं धातोरित्यङ्गविशेषणम्। अन्यथा प्रध्यमित्यादाविव पूर्वरूपादीन् बाधित्वा यण् स्यात्। धात्ववयवेति संयोगविशेषणस्य तु प्रयोजनम् उन्नीशब्दनिरूपणावसरे मूल एव स्फुटीभविष्यति। अनेकाचोऽसंयोगादित्येव सुवचम्। य्वोरित्यनुवर्तते। धात्ववयवसंयोगात् परौ न भवतः यौ इवर्णोवर्णौ तदन्तस्येत्यर्थलाभः। 'ओः सुपि' इति तु नियमार्थः। उवर्णस्य सुप्येव यणिति। ततश्च 'लुलुवतुः' इत्यादौ स्वतिप्रसङ्गाभाव इत्यलम्। इति यणिति। कुमार्यौ, कुमार्यः, इत्यत्र 'एरनेका-

कुमार्यः । हे कुमारि । अमि शसि च कुमार्यम्, कुमार्यः । कुमार्यै । कुमार्याः । कुमारीणाम् । कुमार्याम् । कुमार्योः । प्रधीः । प्रध्यौ । प्रध्यः । प्रध्यम् । प्रध्यः । उन्नयतीत्युन्नीः । धातुना संयोगस्य विशेषणादिह स्यादेव यण् । उन्न्यः । हे उन्नीः । उन्न्याम् । ङेराम् उन्न्याम् । एवं ग्रामणीः । 'अनेकाचः' किम् । नीः । नियौ । नियः । अमि शसि च परत्वादियङ्, नियम् । नियः ।

---

चः' इति इयङपवादो यणित्यर्थः । नन्वन्तर्वर्तिसुपा असा क्यजन्तस्य कुमारीशब्दस्य पदत्वात् 'इकोऽसवर्णे' इति प्रकृतिभावः स्यात् । अल्लोपस्य स्थानिवद्भावेऽपि तमाश्रित्यैव स दुर्वार इति चेन्मैवम्—'नः क्ये' इति क्यचि नान्तस्यैव पदत्वनियमात् । अमि शसि चेति । अमि पूर्वरूपं शसि पूर्वसवर्णदीर्घं च बाधित्वा इयङि प्राप्ते तदपवादे 'एरनेकाचः' इति यणि अमि कुमार्यम् । शसि कुमार्यः इति रूपम् । 'तस्माच्छसः' इति नत्वं तु न, कृतपूर्वसवर्णदीर्घात् परत्वाभावात् । तथा च बहुश्रेयसीशब्दापेक्षया अम्शसोरेव रूपे विशेष इति भावः ।

प्रधीरिति । प्रध्यायतीति प्रधीः । 'ध्यायतेः सम्प्रसारणं च' इति क्विप् । यकारस्य सम्प्रसारणमिकारः । 'सम्प्रसारणाच्च' इति पूर्वरूपम् । 'हलः' इति दीर्घः । कृदन्तत्वेन प्रातिपदिकत्वात् सुबुत्पत्तिः । अङ्यन्तत्वान्न सुलोपः । अजादौ सर्वत्र 'एरनेकाचः' इति यणेव अस्त्रीत्वान्नदीकार्यं न । हे प्रधीः–प्रध्यौ–प्रध्यः । प्रध्यं–प्रध्यः । प्रध्या । प्रध्ये । प्रध्योः । प्रध्यि । प्रकृष्टा धीर्यस्य स इति विग्रहे तु धीशब्दस्य नित्यस्त्रीत्वात् 'प्रथमलिङ्गग्रहणं च' इति नदीत्वान्नदीकार्यम् । अङ्यन्तत्वान्न सुलोपः । प्रधीः । शेषमुदाहृतक्विबन्तकुमारीशब्दवत् । हे प्रधि–प्रध्यौ–प्रध्यः । प्रध्यम्–प्रध्यौ–प्रध्यः । प्रध्या । प्रध्यै । प्रध्याः । प्रधीनाम् । प्रध्याम् । उन्नीरिति । 'सत्सूद्विष' इत्यादिना उत्पूर्वान्नीधातोः क्विप् । सुबुत्पत्तिः । अङ्यन्तत्वान्न सुलोपः । अजादौ तु प्रत्यये परे 'एरनेकाचः' इति यण् । नन्वत्र इवर्णस्य संयोगपूर्वकत्वात् कथमत्र यणित्यत आह—धातुनेति । धात्ववयवसंयोगपूर्वस्यैव यण् पर्युदस्यते । न चात्र संयोगो धात्ववयव इति भावः । हे उन्नीरिति । अस्त्रीत्वादनदीत्वात् 'अम्बार्थ' इत्यादिना नदीकार्यं नेति भावः । उन्न्यमिति । पूर्वरूपापवादो यणिति भावः । शसादौ उन्न्यः । उन्न्या । उन्न्ये । उन्न्यः । उन्न्योः । ङेरामिति । नदीत्वाभावेऽपि 'ङेराम्' इति सूत्रे नीशब्दस्य पृथग्ग्रहणादाम् आङ्गत्वेन नीशब्दान्तादपि भवतीति भावः । एवं ग्रामणीरिति । ग्रामं नयति नियच्छतीति ग्रामणीः । 'अग्रग्रामाभ्यां नयतेर्णो वाच्यः' इति णत्वम् । अनेकाचः किमिति । 'एरनेकाचः' इत्यत्रेति शेषः । नीरिति । नीधातोः केवलात् पूर्ववत् क्विप् । अनेकाच्त्वाभावान्न यण् । किन्तु 'अचि श्नुधातु'

ङेराम् नियाम्। 'असंयोगपूर्वस्य' किम्। सुश्रियौ। यवक्रियौ। 'गतिकारकेतरपूर्वपदस्य यण् नेष्यते' ( वा ५०३४ )। शुद्धधियौ। परमधियौ। कथं तर्हि दुधियः' 'वृश्चिकभियः' इत्यादि। उच्यते। 'दुःस्थिता धीर्येषाम्' इति विग्रहे 'दुर्' इत्यस्य धीशब्दं प्रति गतित्वमेव नास्ति। यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः। वृश्चिकशब्दस्य बुद्धिकृतमपादानत्वं नेह विवक्षितम्। वृश्चिकसम्बन्धिनी भीर्वृश्चि-

---

इति इयङ्। एतावदेव उन्नीशब्दादस्य वैलक्षण्यमिति भावः। सुश्रियाविति। 'श्रिञ् सेवायाम्'। क्विब्वचि' इत्यादिना क्विप् प्रकृतेर्दीर्घश्च। सु श्रयतीति शोभना श्रीरस्येति वा सुश्रीः। ततः अजादिप्रत्यये यण् न भवति। इवर्णस्य धात्ववयवसंयोगपूर्वकत्वादिति। भावः। यवक्रियाविति। यवान् क्रीणातीति यवक्रीः। क्रीन्धातोः क्विपि रूपम्। अत्रापि धात्ववयवसंयोगपूर्वकत्वान्न यणिति भावः। 'एरनेकाचः' इति सूत्रे 'गतिकारकपूर्वस्यैवेष्यते' इति वार्तिकं पठितम्। तत्तात्पर्यतः सङ्गृह्णाति—गतिकारकेतरेति। यथाश्रुते तु उदाहृतक्विबन्तकुमारीशब्दे यण् न स्यात्। शुद्धधियाविति। शुद्धा धीर्यस्येति विग्रहः। अत्र शुद्धशब्दस्य गतिकारकेतरत्वात् तत्पूर्वकस्य न यणिति भावः। शुद्धं ब्रह्म ध्यायतीति विग्रहे तु स्यादेव यण्—शुद्धध्यौ इत्यादि।

कथं तर्हीति। यदि गतिकारकेतरपूर्वस्यैव यण् पर्युदस्यते गतिकारकपूर्वस्य तु अवश्यं यण् तदा दुर्धियः वृश्चिकभियः इत्यादि कथमित्यन्वयः। आदिना दुर्धियौ वृश्चिकभियौ इत्यादिसङ्ग्रहः। दुस्स्थिता धीर्येषामिति विग्रहः। 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः' इति बहुव्रीहिः। पूर्वपदे उत्तरखण्डस्य लोपश्च। वृश्चिकात् भीरिति विग्रहः। अत्र दुरो गतित्वात् वृश्चिकस्यापादानत्वाच्च गतिकारकपूर्वत्वात् पर्युदासाभावे सति इयङपवादोऽत्र यण् दुर्वार इत्याक्षेपः। उच्यते इति। परिहार इति शेषः। गतित्वमेव नास्तीति। 'उपसर्गाः क्रियायोगे, 'गतिश्च' इति प्रादीनां क्रियान्वये गत्युपसर्गसंज्ञे विहिते। धीशब्दश्च बुद्धिगुणवाची, न तु क्रियावाची। अतो न तं प्रति दुरो गतित्वमिति गतिपूर्वकत्वाभावात् नात्र यण्। किन्तु इयङेवेत्यर्थः। ननु लुप्तस्य स्थिताशब्दस्य क्रियाप्रवृत्तिनिमित्तकत्वात् तं प्रति दुरो गतित्वमस्त्येवेत्यत आह—यत्क्रियेति। यया क्रियया युक्ताः प्रादयः तं प्रत्येव तद्वाचकशब्दं प्रत्येव गत्युपसर्गसंज्ञका इत्यर्थः। न चैवमप्यत्र स्थिताशब्दं लुप्तं प्रति प्रवृत्तं दुरो गतित्वमादाय दुर्धीशब्दस्य गतिपूर्वकत्वमस्त्येवेति वाच्यम्। यत्क्रियायुक्ताः प्रादयः, तत्क्रियावाचकं प्रत्येव गत्युपसर्गत्वम्। तथाविधक्रियावाचकस्यैव च गत्युपसर्गकार्यमित्यर्थस्य विवक्षितत्वात्। 'यत्क्रियायुक्ताः' इति च प्रत्यासत्तिन्यायलभ्यम्। वृश्चिकेति। वृश्चिकशब्दस्यापादानत्वं नेह विवक्षितमित्यन्वयः। कुत इत्यत आह—बुद्धिकृतमिति। आरोपितमित्यर्थः। अपादा-

कभीरित्युत्तरपदलोपो वा । (२७३) न भूसुधियोः ६।४।८५॥ एतयोर्यण् न स्यादचि सुपि । सुधियौ । सुधियः इत्यादि । सखायमिच्छति सखीयति । ततः क्विप् । अल्लोपयलोपौ । अल्लोपस्य स्थानिवत्त्वाद्यणि प्राप्ते क्वौ लुप्तं न स्थानि-

नत्वं हि विश्लेषावधित्वम् । न ह्यत्र वृक्षात् पर्णं पततीत्यत्र पर्णविश्लेषे वृक्षस्येव भयविश्लेषे वृश्चिकस्य अवधित्वमस्ति, वृक्षे पर्णवत् भयस्य वृश्चिके संश्लेषाभावात् विश्लेषस्य संश्लेषपूर्वकत्वात् । उक्तं च भाष्ये—'विवक्षातः कारकाणि भवन्ति' इति । प्रकृते च वृश्चिके अपादानत्वारोपस्य वक्त्रधीनत्वात् इह च तदनारोपात् सम्बन्धमात्रविवक्षया षष्ठीमाश्रित्य वृश्चिकस्य भीरिति षष्ठीसमासे वृश्चिकभीशब्दस्य व्युत्पत्तिराश्रीयते । ततश्च कारकेतरपूर्वकत्वात् नात्र यणिति भावः । न च वृश्चिकाद्भीरित्यादौ बुद्धिकृतमेवापादानत्वमादाय पञ्चम्युपपत्तेः 'भीत्रार्थानाम्' इति व्यर्थमिति वाच्यम् तस्य सूत्रस्य भाष्ये प्रत्याख्यातत्वेन इष्टापत्तेरित्यलम् । परिहारान्तरमाह—वृश्चिकसम्बन्धिनीति । उत्तरपदेति । वृश्चिकसम्बन्धिनीति पूर्वपदे उत्तरखण्डस्य सम्बन्धिनीशब्दस्य लोपः । शाकपार्थिवादित्वादित्यर्थः ।

सुष्ठु ध्यायतीति सु शोभना धीर्यस्येति वा विग्रहे सुधीशब्दः । अत्र अजादौ परे 'एरनेकाचः' इति प्राप्ते । न भूसुधियोः । 'इणो यण्' इत्यतः यणिति 'ओः सुपि' इत्यतः सुपीति 'इको यणचि' इत्यतः अचीति चानुवर्तते । तदाह—एतयोरित्यादिना । एतयोरिति सूत्रोक्तभूसुधियोः परामर्शः । अचीति । अजादावित्यर्थः । यणि प्रतिषिद्धे इयङमभिप्रेत्य आह—सुधियाविति । आदिना अजादिसर्वसङ्ग्रहः । प्रधीवद्रूपाणि । इयङेव विशेषः । अचीति वस्तुस्थितिः । अनजादौ यणः प्रसक्त्यभावात् । सुपीति किम् । सुधीभिरुपास्यः सुध्युपास्यः । वस्तुतस्तु सुपीति नानुवर्तनीयम् । 'एरनेकाचः' इति यणो ह्यत्र न प्रसक्तिः, तस्य अजादिप्रत्यये विधानात् उपास्यशब्दस्य प्रत्ययत्वाभावात् । 'इको यणचि' इति तु भवत्येव 'अनन्तरस्य' इति न्यायेन 'एरनेकाचः' 'ओः सुपि', इति च विहितयण एव प्रतिषेधात् । सुधिया उपास्यः सुध्युपास्यः इत्यत्र तु अन्तर्वर्तिनीं विभक्तिमाश्रित्य 'एरनेकाचः' इति यणो 'न भूसुधियोः' इति प्रतिषेधेऽपि उपास्य इत्यचमाश्रित्य 'इको यणचि' इति यण् भवत्येव, 'अनन्तरस्य' इति न्यायेन तस्यात्र प्रतिषेधाभावादित्यलम् । सखीयतीति । 'सुप आत्मनः' इति सखिशब्दात् क्यचि कृते 'अकृत्सार्वधातुकयोः' इति दीर्घे सखीयतीति रूपम् । ततः क्विबिति । तस्मात् सखीयशब्दात् 'सनाद्यन्ताः' इति धातुसंज्ञकात् 'क्विप्च' इति सूत्रेण क्विबित्यर्थः । अल्लोपयलोपाविति । 'अतो लोपः' इति यकारादकारस्य लोपः, 'लोपो व्योः' इति यलोप इत्यर्थः । यलोपे कर्तव्ये अल्लोपस्तु न स्थानिवत्, 'न पदान्त' इति यलोपे स्थानिवत्त्वनिषेधात् । स्थानिवत्त्वादिति । 'अचः परस्मिन्' इत्य-

वत्' ( वा ४३१ ) एकदेशविकृतस्यानन्यतयाऽनङ्णित्वे । सखा । सखायौ । सखायः । हे सखीः । अमि पूर्वरूपात्परत्वाद्यणि प्राप्ते ततोऽपि परत्वात् 'सख्युरसम्बुद्धौ' ( सू २५३ ) इति प्रवर्तते । सखायम् । सखायौ । शसि यण् सख्यः । सह खेन वर्तत इति सखः । तमिच्छतीति सखीः । सुखमिच्छतीति सुखीः । सुतमिच्छतीति सुतीः । सख्यौ । सुख्यौ । सुत्यौ । 'ख्यत्यात्—' ( सू २५५ ) इति दीर्घस्यापि ग्रहणादुकारः । सख्युः । सुख्युः । सुत्युः । लूनमिच्छतीति लूनीः । क्षाम-

---

नेनेति शेषः । यणि प्राप्ते इति । खकारादीकारस्य 'इको यणचि' इत्यनेनेति शेषः । न चान्तर्वर्तिसुपा पदान्तत्वात् 'न पदान्त' इति निषेधः शङ्क्यः, 'नः क्ये' इति क्यचि नान्तस्यैव पदत्वात् । क्वौ लुप्तमिति । न पदान्तसूत्रे 'क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसङ्ख्यानम्' इति वार्तिके क्विलुगित्यंशस्यायमनुवादः । तत्र लुगिति लोपो विवक्षित इति तत्रैव भाष्ये स्पष्टम् । लुप्तमिति भावे क्तः । क्विप्रत्ययपरको लोपो न स्थानिवदित्यर्थः । ततश्च खकारादीकारस्याच्परकत्वाभावात् न यणिति भावः । यद्यपि 'न पदान्त' इति सूत्रे क्वौ लुप्तं न स्थानिवदिति निराकृत्य, क्वौ विधिं प्रति न स्थानिवदित्येव स्वीकृतम् , तथापि गोमत्यतेः क्विपि गोमानिति भाष्यात् क्वौ लुप्तं न स्थानिवदित्यपि क्वचिदस्तीति शब्देन्दुशेखरे स्थितम् । ततश्च सखायमिच्छतीत्यर्थे सखी इति ईदन्तं रूपं स्थितम् । ततः सुबुत्पत्तिः ।

अनङ्णित्वे इति । 'अनङ् सौ' 'सख्युरसम्बुद्धौ' इत्युभाभ्यामिति शेषः । इदन्तसखिशब्दस्य विधीयमाने अनङ्णित्वे कथं सखीशब्दस्य ईदन्तस्य भवेतामित्यत आह—एकदेशेति । हे सखीरिति । अङ्यन्तत्वान्न सुलोपः । स्त्रीत्वाभावान्नदीत्वाभावात् नदीकार्यं न भवति । यणि प्राप्ते इति । 'एरनेकाचः' इत्यनेनेति शेषः । शसि यणिति । पूर्वसवर्णदीर्घापवादो यण् । कृतपूर्वसवर्णदीर्घत्वाभावान्नत्वं नेति भावः । सख्या । सख्ये । सख्युः । सख्योः । सख्यौ । सह खेनेति । खमाकाशं खकारो वा । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'वोपसर्जनस्य' इति सभावः । तमिच्छतीति । सखमात्मन इच्छति इत्यर्थे 'सुप आत्मनः' इति क्यच् । 'क्यचि च' इतीत्वं, 'सनाद्यन्ताः' इति धातुत्वात् क्विपि अल्लोपयलोपयोः सखीशब्दः । एवं सुखीशब्दः, सुतीशब्दश्च । सखीरिति । अङ्यन्तत्वान्न सुलोपः । सख्यावित्यादि । अजादौ 'एरनेकाचः' इति यणिति भावः । सख्यम् । सख्यः । सख्या । सख्ये । दीर्घस्यापीति । एतदर्थमेव तत्र कृतयणा निर्देश इति भावः । सख्याम् । सख्यि । सुखीसुतीशब्दयोरप्येवम् । लूनीरिति । लूञ् छेदने क्तः । 'ल्वादिभ्यः' इति नत्वम् । क्यचि ईत्वम् । अङ्यन्तत्वान्न सुलोपः । 'क्षै क्षये' क्तः । 'आदेच उपदेशेऽशिति' इत्यात्त्वम् । 'क्षायो मः' इति

मिच्छतीति क्षामीः। प्रस्तीममिच्छतीति प्रस्तीमीः। एषां ङसिङसोर्यण्। नत्वमत्वयोरसिद्धत्वात् 'ख्यत्यात्—' (सू २५५) इत्युत्वम्। लून्युः। क्षाम्युः। प्रस्तीम्युः। शुष्कीयतेः क्विप्। शुष्कीः। पक्कीः। इयङ्। शुष्कियौ। शुष्कियः। ङसिङसोः शुष्कियः इत्यादि। इति ईदन्ताः॥ शम्भुर्हरिवत्। एवं विष्णुवायुभान्वादयः। (२७४) तृज्वत्क्रोष्टुः ७।१।९५॥ क्रोष्टुस्तृजन्तेन तुल्यं वर्तते, असम्बुद्धौ सर्वनामस्थाने परे। क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः। (२७५) ऋतो ङिसर्वनामस्थानयोः ७।३।११०॥ ङौ सर्वनामस्थाने च परे

---

मत्वम्। क्यजादि पूर्ववत्। प्रस्तीमीरिति। 'स्त्यै ष्ट्यै शब्दसङ्घातयोः' क्तः। 'आदेच' इत्यात्वम्। 'प्रस्त्योऽन्यतरस्याम्' इति मः। 'स्त्यः प्रपूर्वस्य' इति सम्प्रसारणम्। 'सम्प्रसारणाच्च' इति पूर्वरूपम्। 'हलः' इति दीर्घः। क्यजादि पूर्ववत्। सखी सुतीत्यादिवद्रूपाणि। ङसिङसोर्यणिति। 'एरनेकाचः' इत्यनेनेति शेषः। असिद्धत्वादित्यनन्तरं स्यात् परत्वादिति शेषः। शुष्कीयतेरिति। 'इक्श्तिपौ धातुनिर्देशे' इति श्तिपा निर्देशोऽयम्। शुष्धातोः क्तः शुष्कः। 'शुषः कः' इति कत्वम्। शुष्कमात्मन इच्छतीत्यर्थे क्यजन्तात् शुष्कीयधातोः क्विपि शुष्कीरिति रूपमित्यर्थः। अङ्यन्तत्वान्न सुलोपः। सखी सुतीत्यादिशब्दवत् शुष्कीशब्दः। शुष्कियावित्यादि। संयोगपूर्वत्वान्न यण्। किं तु इयङिति विशेष इति भावः। ङसिङसोः-शुष्कियः इति। न च कत्वस्यासिद्धत्वात् ख्यत्यात् परत्वादुत्वं शङ्क्यम्, इयङादेशे सति कृतयणादेशत्वाभावात् इति भावः। इति ईदन्तप्रकरणम्॥

अथ उदन्ता निरूप्यन्ते। शम्भुर्हरिवदिति। तत्र पूर्वसवर्णदीर्घ ऊकारः, गुणस्तु ओकारः, अव् इत्यादयो विशेषास्त्वान्तरतम्यात् सङ्गता इति भावः। 'क्रुश् आह्वाने, रोदने च' इति धातोः 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' इति तुन्प्रत्यये 'व्रश्च' इति शस्य षकारे ष्टुत्वेन टकारे च क्रोष्टुशब्दः। क्रुशधातोः कर्तरि तृचि तु क्रोष्टृशब्दः। द्वावपि श्रृगालवाचिनौ। तयोरविशेषेण सर्वत्र प्रयोगे प्राप्ते विशेषं दर्शयितुमाह—तृज्वत्क्रोष्टुः। प्रत्ययग्रहणपरिभाषया तृच् इति तृजन्तं गृह्यते। 'तेन तुल्यम्' इति तृतीयान्ताद्वतिः। 'इतोऽत् सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इति 'सख्युरसम्बुद्धौ' इत्यतोऽसम्बुद्धाविति चानुवर्तते। तदाह—क्रोष्टुस्तृजन्तेनेत्यादिना। 'कार्यरूपनिमित्तार्थशास्त्रतादात्म्यसंविदताः। व्यपदेशश्च सप्तैतानतिदेशान् प्रचक्षते।' इति अतिदेशाः सप्त। तत्र प्राधान्यादिह तृजन्तरूपमेव अतिदिश्यते। तच्च न कर्तृ भर्तृ इत्यादि तृजन्तरूपम्। किन्तु क्रोष्टृ इत्येव तृजन्तरूपम् अतिदिश्यते। क्रुश्धातोरुपस्थितत्वात् अर्थत आन्तर्याच्च इत्यभिप्रेत्य फलितमाह—क्रोष्टुशब्दस्य स्थाने इति। निमित्तादीनामुदाहरणानि तु तत्र तत्र प्रदर्शयिष्यामः। क्रोष्टृ स् इति स्थिते। ऋतो ङि। 'ह्रस्व-

ऋदन्ताङ्गस्य गुणः स्यात्। इति प्राप्ते। (२७६) ऋदुशनस्पुरुदंसोऽनेहसां च ७।१।९४॥ ऋदन्तानामुशनसादीनां चानङ् स्यादसंबुद्धौ सौ परे। (२७७) अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ६।४।११॥ अबादीनामुपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने परे। नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्। उणादिनिष्पन्नानां तृन्तृजन्तानां संज्ञाशब्दानां चेद्भवति तर्हि नप्त्रादीनामेव। तेन पितृभ्रातृप्रभृतीनां न। उद्गातृशब्दस्य तु भवत्येव। 'समर्थ-'

---

स्य गुणः' इत्यतो गुण इत्यनुवर्तते। अङ्गस्येत्यधिकृतम् ऋत इत्यनेन विशेष्यते। तदन्तविधिः। तदाह–ङौ सर्वेत्यादिना। ऋतुशनस्। 'सख्युरसम्बुद्धौ' इत्यतः असम्बुद्धाविति 'अनङ् सौ' इत्यतः अनङिति चानुवर्तते। अङ्गस्येत्यधिकृतम् ऋदादिभिर्विशेष्यते तदाह—ऋदन्तानामित्यादिना। उशनसादिष्वपि तदन्तविधिर्बोध्यः। अनङि ङकार इत्, नकारादकार उच्चारणार्थः। 'ङिच्च' इत्यन्तादेशः। क्रोष्टन् स् इति स्थिते। अप्तृन्। 'नोपधायाः' इत्यतः उपधाया इत्यनुवर्तते। 'सर्वनामस्थाने चासम्बुद्धौ' इति चकारवर्जमनुवर्तते। तदाह–अबादीनामिति। अत्र अष्टाध्याय्यां तावत् 'तृन्' इति सूत्रेण 'ण्वुल्तृचौ' इति सूत्रेण च कर्तरि तृन्तृचौ विहितौ। तथा उणादिषु 'तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ' 'बहुलमन्यत्रापि' इति सूत्राभ्यां तृन्तृचौ विधाय 'नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ' इति सूत्रेण नप्त्रादयो निपातिताः। ततश्च संज्ञाशब्दाः तृन्तृजन्ताः औणादिका इति स्थितिः। तत्र तृजन्तादेव सिद्धे नप्त्रादिग्रहणं व्यर्थमित्यत आह—नप्त्रादिग्रहणमिति।

नियमशरीरमाह—उणादीति। तेनेति। औणादिकेषु नप्त्रादिसप्तानामेव तृन्तृजन्तानां दीर्घ इति नियमेन तदितरेषां पितृभ्रात्रादीनां न दीर्घ इति भावः। न च प्रशास्तृशब्द औणादिको न भवतीति भ्रमितव्यम्, तस्यापि संज्ञाशब्दस्य शंसिक्षदादिगणप्रविष्टत्वेन औणादिकत्वात्। अत्र मूले व्युत्पत्तिपक्षे इत्युक्त्या अव्युत्पत्तिपक्षे नप्त्रादिसप्तानां तृन्तृजन्तत्वाभावादप्राप्तौ नप्त्रादिग्रहणमर्थवत्। तदितरपितृमात्रादिशब्दानां तु औणादिकानामव्युत्पन्नतया तृन्तृजन्तत्वाभावादेव न दीर्घ इति सूचितम्। नन्वेवं सति उद्गातृशब्दस्यापि संज्ञाशब्दस्य शंसिक्षदादित्वेन औणादिकत्वात् तस्य च नप्त्रादिसप्तस्वनन्तर्भावात् कथं दीर्घ इत्यत आह—उद्गातृशब्दस्येति। 'ण्वुल्तृचौ' इति सूत्रस्थभाष्ये तु अप्तृ इत्येवास्तु, तृन्तृचोर्ग्रहणं मास्त्विति प्रपञ्चितम्। तृन्निति भाष्ये तु छन्दसि 'ऋत्विक्षु चानुपसर्गस्य' इति वक्तव्यम्। होता। पोता। अनुपसर्गस्य किम्। प्रशास्ता। प्रतिहर्ता। औणादिकतृजन्त एवायम्। नयतेस्तृन् वक्तव्यः षुक्च। नेष्टा। त्विषेर्देवतायां तृन् वक्तव्यः। अकारश्चोपधायाः

(सू ६४७) सूत्रे 'उद्गातारः' इति भाष्यप्रयोगात्। क्रोष्टा क्रोष्टारौ क्रोष्टारः। क्रोष्टारम्। क्रोष्टारौ क्रोष्टून्। (२७८) विभाषा तृतीयादिष्वचि ७।१।९७॥ अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा। क्रोष्ट्रे। (२७९) ऋत उत् ६।१।१११॥ ऋदन्तान्ङसिङसोरति परे उकार एकादेशः स्यात्। रपरत्वम्। (२८०) रात्सस्य ८।२।२४॥ रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य। इति

---

अनिट्त्वं च। त्वष्टा 'छन्दसि युक्ते तृन् वक्तव्यः'। क्षत्ता। इत्येवं होतृपोतृनेष्टृत्वष्टृक्षत्तृशब्दाः तृन्नन्ता व्युत्पादिताः। तन्मते तु तेषां पञ्चानामिह ग्रहणं प्रपञ्चार्थम्। नप्तृ-प्रशास्तृग्रहणमेव उक्तनियमार्थमित्यन्यत्र विस्तरः।

क्रोष्टेति। क्रोष्टृन् स् इति स्थिते एकदेशविकृतस्यानन्यतया तृजन्तत्वाद्दीर्घः। हल्ङ्यादिना सुलोपः। नलोपः। यद्यपि 'सर्वनामस्थाने च' इत्येवात्र दीर्घः सिध्यति, तथापि परत्वादप्तृन्नित्येव दीर्घो न्याय्यः। क्रोष्टाराविति। क्रोष्टु औ इति स्थिते तृज्वद्भावे 'ऋतो ङि' इति गुणे अकारे रपरत्वे एकदेशविकृतस्यानन्यतया तृजन्तत्वाद्दीर्घे रूपम्। एवं क्रोष्टारः। क्रोष्टारम्, क्रोष्टारौ। हे क्रोष्टो। असम्बुद्धावित्यनुवृत्तेर्न तृज्वद्भावः। शसि शम्भुवद्रूपम्। क्रोष्टूनिति। सर्वनामस्थाने इत्यनुवृत्तेः न तृज्वद्भावः। क्रोष्टु आ इति स्थिते। विभाषा तृतीयादिष्वचि। तृज्वत्क्रोष्टुरित्यनुवर्तते। अचीति तृतीयादिविभक्तिविशेषणम्। तदादिविधिः। तदाह। अजादिष्विति। क्रोष्ट्रेति। तृज्वद्भावे क्रोष्टृ आ इति स्थिते ऋकारस्य यण् रेफः। एवं क्रोष्ट्रे इति। तृज्वद्भावाभावपक्षे क्रोष्टुना, क्रोष्टवे शम्भुवत्। ङसिङसोस्तृज्वत्त्वे क्रोष्टृ अस् इति स्थिते। ऋत उत्। 'एङः पदान्तादति—ङसिङसोश्च' इत्यतः अतीति ङसिङसोरिति चानुवर्तते। ङसिङसोरित्यवयवषष्ठी अतीत्यत्रान्वेति। अङ्गस्येत्यधिकृतम्, ऋत इत्यनेन विशेष्यते। तदन्तविधिः। तदाह—ऋदन्तादित्यादिना। रपरत्वमिति। ऋकारस्य अकारस्य च स्थाने प्राप्नुवत उकारस्य ऋकारस्थानिकत्वानपायादिति भावः। उदिति तपरकरणं द्विमात्रनिवृत्त्यर्थम्। न च 'भाव्यमानोऽण् सवर्णान् न गृह्णाति' इत्येव तन्निवृत्तिः सिध्यतीति वाच्यम्। तस्यानित्यत्वादिह द्विमात्रप्राप्तौ तन्निवृत्त्यर्थत्वात्। तदनित्यत्वं तु अनेनैव तपरकरणेन ज्ञाप्यते। ततश्च 'यवलपरे यवला वा' इति मकारस्य अनुनासिका एव भवन्तीति 'च्छ्वोः' इति सूत्रे कैयटः। यत्तु तपरत्वं 'ढ्लोपे' इति दीर्घनिवृत्त्यर्थमिति, तन्न। 'उरण् रपरः इति सूत्रे 'ऊ रपरः' इति भाष्यप्रयोगविरोधात् 'सुपत्रवाहिता वाणा ज्वलिता इव पन्नगाः। नैर्ऋतोरस्यभाव्यन्त सवितूरश्मयो यथा॥' इति रामायणप्रयोगविरोधाच्चेत्यलम्। क्रोष्टुर् स् इति स्थिते—रात्सस्य। संयोगान्तस्य लोप इत्येव सिद्धे नियमार्थमिदमित्याह—सस्यैवेति। तेन

रेफस्य विसर्गः। क्रोष्टुः। आमि परत्वात् तृज्वद्भावे प्राप्ते 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' ( वा ४३७४ )। क्रोष्टूनाम्। क्रोष्टरि। क्रोष्ट्रोः। पक्षे हलादौ च शम्भुवत्। इत्युदन्ताः॥ हूहूः हूह्वौ हूह्वः। हूहूम् हूह्वौ हूहून् इत्यादि। अतिचमूशब्दे तु नदीकार्यं विशेषः। हे अतिचमु। अतिचम्वै। अतिचम्वाः। अतिचम्वाः। अतिचमूनाम्। अतिचम्वाम्। खलपूः। (२८१) ओः सुपि ६।४।८३॥ धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ सुपि। 'गतिकारकेतरपूर्वपदस्य यण् नेष्यते' (वा ५०३४)। खलप्वौ।

---

ऊर्क् इत्यादौ न संयोगान्तलोपः। रेफस्य विसर्ग इति। खरवसानयोरिति विसर्ग इत्यर्थः। परत्वादिति। परत्वान्नुटं बाधित्वा तृज्वत्त्वे कृते ततो नुटि नामि इति दीर्घे णत्वे कृते क्रोष्टृणामिति स्यादित्यर्थः। न च नुट् नित्य इति वाच्यम्, तृज्वत्त्वे कृते सन्निपातपरिभाषया नुटो दुर्लभत्वात्। नुमचिरेति। अचिरेत्यनुकरणम्। 'अचिर इति' विहितो रेफो विवक्षितः। प्रकृतिवदनुकरणं भवतीति त्वनित्यम्। ततश्च अचिरेत्यस्य समासप्रवेशेऽपि न लुक्। क्रोष्टूनामिति। तृज्वत्त्वं बाधित्वा नुटि कृते नामि इति दीर्घे रूपम्। क्रोष्टरीति। तृज्वत्त्वे क्रोष्टृ इति स्थिते 'ऋतो ङि' इति गुणे रपरत्वे रूपम्। क्रोष्ट्रोरिति। तृज्वत्त्वे ऋकारस्य यण् रेफः। पक्षे इति। तृतीयादिष्वजादिषु तृज्वत्त्वाभावपक्षे इत्यर्थः। ननु तृज्वत्क्रोष्टुः, स्त्रियां च, विभाषा तृतीयादिष्वचि इति त्रिसूत्री व्यर्था। शृगालवाचिनोः क्रोष्टृक्रोष्टुशब्दयोः स्वतन्त्रयोः सत्त्वादिति चेत्, शृणु—सर्वनामस्थाने स्त्रियां च ऋदन्तस्यैव क्रोष्टृशब्दस्य प्रयोगः। तृतीयादिष्वजादिषु तु उभयस्य शसि हलादिषु च उदन्तस्यैवेति नियमार्था त्रिसूत्रीति। इति उदन्ताः।

अथ ऊदन्ता निरूप्यन्ते। हूहूरिति। गन्धर्वविशेषवाचि अव्युत्पन्नं प्रातिपदिकमेतत्। हूह्वौ हूह्वः इत्यादि। दीर्घाज्जसि च इति पूर्वसवर्णदीर्घनिषेधः। इको यणचि इति यणि रूपम्। हे हूहूः। हूहूम् हूह्वौ हूहून्। हूह्वा। हूह्वे। हूह्वः। हूह्वोः। हूह्वाम्। हूह्वि। अतिचमूशब्दे त्विति। चमूमतिक्रान्तः अतिचमूः। अत्यादयः क्रान्ताद्यर्थे इति समासः। स्त्रीप्रत्ययान्तत्वाभावात् 'गोस्त्रियोः' इति ह्रस्वो न भवति। नदीकार्यमिति। 'प्रथमलिङ्गग्रहणं च' इति वचनादिति भावः। खलपूरिति। खलं पुनातीति क्विप्। खलपू औ खलपू अस् इति स्थिते 'अचि श्नुधातु' इति उवङि प्राप्ते। ओः सुपि। 'एरनेकाचः' इति सूत्रं एरितिवर्जमनुवर्तते। 'अचि श्नुधातु' इत्यतः अचीत्यनुवृत्तम्। तेन सुपीति विशेष्यते। तदादिविधिः। 'इणो यण्' इत्यतः यणित्यनुवर्तते। तदाह—धात्ववयवेत्यादिना। गतिकारकेति। इदमपि वार्तिकम् अत्रानुवर्तत इति भावः। खलप्वौ खलप्व इति।

खलप्वः, इत्यादि। एवं सुल्वादयः। 'अनेकाचः' किम्। लूः लुवौ लुवः। 'धात्ववयव—' इति किम्। उल्लूः उल्ल्वौ उल्ल्वः। 'असंयोगपूर्वस्य' किम्। कटप्रूः कटप्रुवौ कटप्रुवः। 'गति—' इत्यादि किम्। परमलुवौ। 'सुपि' किम्। लुलुवतुः। स्वभूः। 'न भूसुधियोः' (सू २७३)। स्वभुवौ स्वभुवः। एवं स्वयम्भूः। (२८२) वर्षाभ्वश्च ६।४।८४॥ अस्योवर्णस्य यण् स्यादचि सुपि। वर्षाभ्वौ वर्षाभ्वः। दृभतीति दृम्भूः। 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः' (उ ९२) इत्युणादिसूत्रेण निपातितः। दृम्भ्वौ दृम्भ्वः। दृम्भूम् दृम्भ्वौ दृम्भून्। शेषं हूहू-

कारकपूर्वकत्वादिह यणिति भावः। हे खलपूः। खलप्वम् खलप्वौ खलप्वः। खलप्वा। खलप्वे। खलप्वः खलप्वः। खलप्वोः। खलप्वि। इह अजादौ 'एरनेकाचः' इति यणः असम्भवात् उवङि प्राप्ते अनेन सूत्रेण यणिति भावः। उवङोऽपवादो यणिति फलितम्। इयङुवङौ 'एरनेकाचः' इति 'ओः सुपि' इति यण् च सर्वत्र पूर्वरूपसवर्णदीर्घापवादाः। एवं सुल्वादय इति। सुष्ठु लुनातीति सुलूः। गतिपूर्वकत्वादिहापि यण्। आदिना केदारलूरित्यादिसंग्रहः। कटप्रूरिति। 'प्रु गतौ' 'क्विब्वचि' इत्यादिना क्विप् उकारस्य दीर्घश्च। परमलुवाविति। परमश्चासौ लूश्चेति विग्रहः। गतिकारकेतरपूर्वकत्वान्न यण्। लुलुवतुरिति। अतुसि लुलू इत्यस्य अनेकाच्त्वेऽपि सुप्परकत्वाभावान्न यणिति भावः। स्वभूरिति। स्वस्मात् भवतीति क्विप्। कारकपूर्वकत्वाद्यणि प्राप्ते आह—न भूसुधियोरिति। वर्षासु भवति वर्षाभूः। वर्षर्तावुत्पन्न इत्यर्थः। वर्षाशब्दो नित्यस्त्रीलिङ्गबहुवचनान्तः। 'अप्सुमनस्समासिकतावर्षाणां बहुत्वं च' इति लिङ्गानुशासने स्त्र्यधिकारे सूत्रकृतोक्तेः। 'वर्षाभूर्दर्दुरे पुमान्' इति यादवः। 'न भूसुधियोः' इति निषेधे प्राप्ते। वर्षाभ्वश्च। ओः सुपि इत्यनुवर्तते। 'अचि श्नुधातु' इत्यतः अचीति 'इणो यण्' इत्यतः यणिति चानुवर्तते। तदाह—अस्येति। वर्षाभूशब्दस्येत्यर्थः। दृभतीति। 'दृभी ग्रन्थे' तुदादिः। शविकरणस्य 'सार्वधातुकमपित्' इति ङित्वान्न गुणः। निपातित इति। कूप्रत्ययो नुम् चेह निपात्यते इत्यर्थः। 'नश्चापदान्तस्य' इत्यनुस्वारः, 'अनुस्वारस्य ययि' इति तस्य परसवर्णो मकारः। अत्र च ऊकारो न धात्ववयवः। अतः उवङ्, 'ओः सुपि' इति यण् च न। किन्तु 'इको यणचि' इत्येव यण्। स च 'अमि पूर्वः' इत्यनेन बाध्यत इत्याशयेनाह—दृम्भूमिति। शसि दीर्घाज्जसि च इति निषेधाप्रवृत्त्या पूर्वसवर्णदीर्घेण 'इको यणचि' इति यण् बाध्यत इत्यभिप्रेत्याह—दृम्भूनिति। दृम्भ्वा। दृम्भ्वे। दृम्भ्वः। दृम्भ्वः दृम्भ्वोः दृम्भ्वाम्। इह तु 'दन्कर' इति यण् न भवति। भूशब्दस्यार्थवत एव तत्र ग्रहणात्। इह च भूशब्दस्य अनर्थकत्वात्। दन्निति नान्तमव्ययं हिंसायां वर्तते। तस्मिन्नु-

वत्। 'दन्' इति नान्ते हिंसार्थेऽव्यये भुवः क्विप्। दन्भूः। 'दन्करपुनः पूर्वस्य भुवो यण् वक्तव्यः' ( वा ४११८ )। दन्भ्वम्। दन्भ्वः इत्यादि खलपूवत्। करभूः। करभ्वम्। करभ्वः। दीर्घपाठे तु कर एव कारः। स्वार्थिकः प्रज्ञाद्यण्। कारभ्वम्। कारभ्वः। पुनर्भूर्यौगिकः पुंसि। पुनर्भ्वौ इत्यादि। दम्भूकाराभूशब्दौ स्वयंभूवत्॥ इत्यूदन्ताः॥ धाता। हे धातः। धातारौ। धातारः। ऋवर्णान्नस्य णत्वं

---

पपदे भूधातोः क्विबित्यर्थः। दन् हिंसायाम्, भवते प्राप्नोतीति विग्रहः। दन्भूरिति। तरुविशेषः। सर्पविशेष इत्यन्ये। स्वाभाविक एवात्र नकारः। तस्य पदान्तत्वात् 'नश्चापदान्तस्य' इति नानुस्वारः। अत एव न परसवर्णः। 'न भूसुधियोः' इति निषेधे प्राप्ते—दन्करपुनः पूर्वस्य भुवो यण् वक्तव्यः। दन्भ्वमिति। यणा पूर्वरूपं बाध्यत इति भावः। दन्भ्व इति। शसि यणा पूर्वसवर्णदीर्घो बाध्यत इति भावः। करात् करे वा भवतीति करभूः। दन्भूवदित्यभिप्रेत्याह—करभ्वम् करभ्व इति। 'दन्कर' इत्युदाहृतवार्तिके दीर्घमध्यकारशब्दपाठ इति मतान्तरम्। तत्राह—दीर्घेति। स्वार्थिक इति। स्वस्याः प्रकृतेरर्थः स्वार्थः, तत्र भवः स्वार्थिकः। अध्यात्मादित्वाट्ठञ्। प्रज्ञाद्यणिति। 'प्रज्ञादिभ्योऽण्' इति प्रज्ञादिभ्यः स्वार्थे अण्विधानादिति भावः। दीर्घपाठे करपूर्वस्य उवङेव। ह्रस्वपाठे करपूर्वस्य यणेवेति विवेकः। पुनर्भवतीति पुनर्भूः। ननु 'पुनर्भूर्दिधिषूरूढा' इति कोशात् पुनर्भूशब्दस्य स्त्रीलिङ्गत्वात् स्त्रीलिङ्गाधिकार एव तन्निरूपणं युक्तमित्यत आह—पुनर्भूर्यौगिकः पुंसीति। पुनः भवतीति क्रियानिमित्तस्य पुनर्भूशब्दस्य पुँल्लिङ्गत्वमप्यस्तीत्यर्थः। दृम्भू इति। दृशो भवतीति दृम्भूः। कारायां भवतीति काराभूः। कारा बन्धनालयः। स्वयम्भूवदिति। तत्र 'न भूसुधियोः' इति यणः प्रतिषेधात्। प्रतिप्रसवाभावाच्चेति भावः॥ इत्यूदन्ताः।

अथ ऋदन्ता निरूप्यन्ते। धातेति। डुधाञ् धारणपोषणयोः' तत्र तृन् तृज्वा स्यात्। क्रोष्टुशब्दवदनङ्दीर्घसुलोपनलोपाः। हे धातरिति। 'ऋदुशनस्' इत्यत्रासम्बुद्धावित्यनुवृत्तेर्नानङ्। 'ऋतो ङि' इति गुणः अकारः, रपरत्वं, हल्ङ्यादिलोपः विसर्गः। 'अप्तृन्' इति दीर्घस्तु न। असम्बुद्धावित्यनुवृत्तेः। धातारावित। ङिसर्वनामस्थानयोः 'ऋतो ङि' इति गुणः अकारः रपरत्वम्, 'अप्तृन्' इति दीर्घश्च। धातारः। धातारम् धातारौ। शसि पूर्वसवर्णदीर्घः ॠकारः, नत्वम्। धातॄन्। टा यण्। धात्रा। ङे यण्। धात्रे। ङसिङसोः 'ऋत उत्' रपरत्वम्, सलोपः, विसर्गः। धातुः। धातुः। धात्रोः। धात्रोः। आमि 'ह्रस्वनद्यापः' इति नुट्। 'नामि' इति दीर्घः। नकारस्य रेफषकाराभ्यां परत्वाभावादप्राप्ते णत्वे। ऋवर्णान्नस्य णत्वं वाच्यम्। ऋवर्णात् परस्येत्यर्थः। इदं तु वार्तिकं णत्वविधायकसूत्राणां सर्वेषां शेषभूतम्। ङौ 'ऋतो ङि' इति

वाच्यम्' ( वा ४९६९ ) धातृणामित्यादि। एवं नप्त्रादयः। उद्गातारौ। पिता। व्युत्पत्तिपक्षे नप्त्रादिग्रहणस्य नियमार्थत्वान्न दीर्घः। पितरौ, पितरः। पितरम्, पितरौ। शेषं धातृवत्। एवं जामातृभ्रात्रादयः। ना नरौ नरः। हे नः। (२८३) नृ च ६।४।६॥ 'नृ' इत्येतस्य नामि वा दीर्घः स्यात्। नृणाम्—नृणाम्।

गुणः अकारः, रपरत्वम्। धातरि। धातृषु। न च धातृशब्दस्य हिरण्यगर्भसंज्ञाशब्दत्वाद् औणादिकशंसिक्षदादितृन्तृजन्तत्वादिह कथम् 'अप्तृन्' इति दीर्घः, औणादिकतृन्तृजन्तेषु नप्त्रादिसहानामेव दीर्घ इति नियमादिति वाच्यम्। धाञ्धातोः शंसिक्षदादित्वकल्पनायां प्रमाणाभावेन धातृशब्दस्य औणादिकत्वाभावादिति भावः। एवं नप्त्रादय इति। नप्तृनेष्टृत्वष्टृक्षत्तृहोतृप्रशास्तृशब्दाः धातृशब्दवदित्यर्थः। उद्गातृशब्दस्य औणादिकतृन्तृजन्तस्य नप्त्रादिष्वनन्तर्भावेऽपि समर्थसूत्रे उद्गातार इति भाष्यप्रयोगादेव दीर्घ इत्युक्तं प्राक्। तदेतत् स्मारयति—उद्गाताराविति।

पितेति। धातृवदनङादि। सर्वनामस्थाने तु 'ऋतो ङि' इति गुणः अकारः, रपरत्वम्। 'अप्तृन्' इति दीर्घस्तु नेत्याह—व्युत्पत्तीति। पातीति पिता। तृच्प्रत्ययः, इट् आकारलोपश्चेति व्युत्पत्तिर्बोध्या। अव्युत्पत्तिपक्षे तु अप्तृन्तृजादिष्वनन्तर्भावात् दीर्घशङ्कैव नास्तीति भावः। पितरौ पितरः। पितरम् पितरौ पितॄन् इत्यादि धातृवत्। एवं जामातृभ्रात्रादय इति॥ उणादिषु 'नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ,इति सूत्रे पितृजामातृभ्रातृशब्दाः व्युत्पादिताः। तत्र पितृशब्दस्य व्युत्पत्तिरुक्ता। भ्राजेस्तृनि तृचि वा जलोपः। भ्राता। जायां मातीति जामाता। तृन्प्रत्ययः। तृज्वा यालोपश्च। अनयोरप्यौणादिकयोर्नप्त्रादिष्वनन्तर्भावात् न दीर्घ इत्यर्थः। आदिना मन्तृ हन्तृ इत्यनयोः ग्रहणम्, तयोरुणादिषु 'तृन्तृचौ शंसिक्षदादिभ्यः' इति प्रकरणे बहुलमन्यत्रापि इत्यत्र उदाहृतत्वात्। नेति। नृशब्दो मनुष्यवाची। तस्मात् सुः। 'ऋदुशनस्' इत्यनङ्। 'अप्तृन्' इति सूत्रे अनन्तर्भावात् 'सर्वनामस्थाने च' इति नान्तत्वप्रयुक्तो दीर्घः। हल्ङ्यादिलोपः। नलोपः। ना इति रूपम्। नरौ नर इति। 'ऋतो ङि' इति गुणो रपरः। अप्तृन्नाद्यनन्तर्भावात् नान्तत्वाभावाच्च न दीर्घः। हे नः इति। 'ऋतो ङि' इति गुणो रपरः हल्ङ्यादिलोपो विसर्गश्च। नरम् नरौ। शसि पूर्वसवर्णदीर्घ ऋकारः, नत्वम्, नॄन्। टादावचि यणि रेफः। त्रा। त्रे। ङसिङसोः ऋत उत्, रपरः सलोपः विसर्गश्च। नुः। नुः त्रोः। आमि नुट् 'नामि' इति नित्यं दीर्घे प्राप्ते। नृ च। नृ इति लुप्तषष्ठीकम्। 'नामि' इति सूत्रमनुवर्तते। 'ढ्रलोपे' इत्यतो दीर्घ इत्यनुवर्तते। 'छन्दस्युभयथा' इत्यतः उभयथेत्यनुवर्तते। तदाह—नृ इत्येतस्येत्यादिना। नृणाम् नृणाम् इति। 'ऋवर्णान्नस्य' इति णत्वम्। ङौ 'ऋतो ङि' इति गुणः रपरत्वम्। नरि त्रोः नृषु। इत्यृदन्ताः।

इत्यृदन्ताः ॥ 'कॄ' 'तॄ' अनयोरनुकरणे 'प्रकृतिवदनुकरणम्' (प ३७) इति वैकल्पिकातिदेशादित्त्वे रपरत्वे कीः किरौ किरः। तीः तिरौ तिरः, इत्यादि गीर्वत्। इत्त्वाभावपक्षे तु 'ऋदुशनस्—' ( सू २७६ ) इति 'ऋतो ङि—' ( सू २७५ ) इति च तपरकरणादनङ्गुणौ न। कॄः क्रौ क्रः। क्रॄम्। क्रौ कॄन्। क्रा। क्रे इत्यादि ॥ इत्यॄदन्ताः ॥ 'गम्लृ' 'शक्लृ' अनयोरनुकरणे अनङ्। गमा। शका। गुणविषये

अथ ॠदन्ता निरूप्यन्ते—कॄ इत्यादिना। कॄतॄ इत्यनयोरनुकरणे इत्त्वे रपरत्वे इत्यन्वयः। 'कॄ विक्षेपे' 'तॄ प्लवनतरणयोः'। कॄ तॄ इत्याभ्यां शब्दाभ्याम् अनुकरणे क्रियमाणे अनुकरणभूताभ्यां ताभ्यां धातुपाठपठितौ कॄ तॄ इत्येतौ विवक्षितौ। अत एवानुकरणस्य अनुकार्यमर्थः। अनुकार्यं च अनुकरणाद्भिन्नमिति 'मतौ छः' इति सूत्रभाष्ये स्थितम्। आनुपूर्वीव्यत्ययेऽपि वाचकसादृश्यात् अर्थोपस्थापकत्वमिति अत्र कैयटे, 'प्राग्दीव्यतोऽण्' इत्यत्र भाष्ये च स्पष्टमेतत्। ततश्च अनुकार्याभ्यां कॄ तॄ इत्याभ्याम् अनुकरणभूतयोः कॄ तॄ इत्यनयोरर्थवत्त्वेन प्रातिपदिकत्वात् सुबुत्पत्तिः। ननु अनुकरणभूतयोरनुकार्यशब्दस्वरूपवाचकत्वात् क्रियावाचकत्वाभावेन धातुत्वाभावात् 'ॠत इद्धातोः' इति कथमित्त्वम्। न च 'प्रकृतिवदनुकरणम्' इति वचनाद् अनुकरणभूतयोः धातुत्वमिति वाच्यम्, एवं सति अधातुरिति धातुपर्युदासात् प्रातिपदिकत्वानुपपत्तेरित्यत आह—प्रकृतिवदनुकरणमिति। वैकल्पिकातिदेशादिति। 'यत्तदेतेभ्यः परिमाणे वतुप्' इत्यत्र त्यदाद्यत्वनिर्देशात् 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषाकरणात् 'ओः यङि' 'क्षियो दीर्घात्' इत्यादौ धात्वनुकरणे विभक्तिनिर्देशाच्च प्रकृतिवदनुकरणमिति पाक्षिकम्। ततश्चात्रातिदेशभावमादाय धातुत्वात् 'ॠत इद्धातोः' इतीत्त्वम्। अतिदेशाभावमादाय धातुत्वाभावात् प्रातिपदिकत्वात् सुबुत्पत्तिश्च न विरुध्यत इति भावः। कीरिति। कॄधातुरित्यर्थः। ॠकारस्य इत्त्वे रपरत्वे 'र्वोरुपधायाः' इति दीर्घः। सोर्हल्ङ्यादिलोपः, विसर्गश्च। किराविति। अपदान्तत्वात् 'र्वोः' इति न दीर्घः। तीरिति। तॄधातुरित्यर्थः। गीर्वदिति। गीःशब्दवद्रूपाणीत्यर्थः। किरम् किरौ किरः। किरा कीर्भ्याम् कीर्भिः। किरे। किरः। किरोः। कीर्षु। भ्यामादौ 'स्वादिष्वसर्वनामस्थाने' इति पदत्वात् दीर्घः। इत्त्वाभावेति। प्रकृतिवदनुकरणमित्यस्यानित्यत्वात् अनुकरणस्य धातुत्वाभावात् 'ॠत इद्धातोः' इति इत्त्वाभावे सतीत्यर्थः। अनङ्गुणौ नेति। 'ऋत् उत्' इत्युत्त्वमपि तपरकरणान्नेति द्रष्टव्यम्। अत एव 'ओः यङि' इत्यादिनिर्देशाः सङ्गच्छन्ते। कॄरिति। कॄधातुरित्यर्थः। क्रौ। क्रः इत्यादौ यण्। इत्यादीति। क्रः। क्रः क्रोः क्राम् क्रि। इत्यॄदन्ताः ॥

अथ लृदन्ता निरूप्यन्ते। गम्लृ शक्लृ इति। 'गम्लृ गतौ' 'शक्लृ शक्तौ' अजन्तौ धातू। अनङिति। ऋदुशनस् इत्यनेनेति शेषः। ऋलृवर्णयोः सावर्ण्यादिति भावः।

तु लपरत्वम्। गमलौ गमलः। गमलम् गमलौ गमॄन्। गम्ला। गम्ले। ङसिङसोस्तु 'ऋत उत्' (सू २७९) इत्युत्वे लपरत्वे 'संयोगान्तस्य लोपः' (सू ५४)। गमुल्। शकुल् इत्यादि। इति लृदन्ताः॥ इना सह वर्तते इति सेः। सयौ सयः।

---

गुणविषये त्विति। ङौ सर्वनामस्थाने च 'ऋतो ङि' इति गुणः अकारः, लपर इत्यर्थः। 'उरण् रपरः' इत्यत्र रप्रत्याहारग्रहणादिति भावः। गमॄनिति लृवर्णस्य दीर्घाभावात् ऋवर्ण एव। पूर्वसवर्णदीर्घे नत्वमिति भावः। ङसिङसोस्त्विति। गम्लृ अस् इति स्थिते ऋत उत्, लपरः। गमुल् स् इति स्थिते 'संयोगान्तस्य लोपः' गमुल् इति रूपम्॥ इत्यादीति। गम्लृभ्याम्। गम्लृभिः। गम्लृभ्यः। गम्लृभ्यः। आमि तु गमॄणाम्। गमलि गम्लोः गम्लृषु। वस्तुतस्तु 'उरण् रपरः' इत्यत्र अजिति वक्तव्ये अण्ग्रहणसामर्थ्यात् अण् पूर्वेणैवेत्युक्तं भाष्ये। यदि लृकारस्य यण् लकारः स्यात् तर्हि लपरत्वार्थं परेणाण्ग्रहणस्यावश्यकत्वात् तदसङ्गतिः स्पष्टैव। तस्मादेवञ्जातीयकानां प्रयोगो न भाष्यसम्मत इत्याहुः। इति लृदन्ताः।

अथ एदन्ता निरूप्यन्ते। इनेति। अः विष्णुः तस्यापत्यम् इः। अत इञ्। 'यस्येति च' इत्यकारलोपः। इना सहेत्यर्थे 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः। 'वोपसर्जनस्य' इति सत्वम्। 'आद्गुणः' से इति रूपम्। ततः सुः, रुत्वविसर्गौ। सेः। एवं स्मृतेः। स्मृतः इः कामो येनेति विग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहिः। न च एकादेशस्य पूर्वान्तत्वात् से इत्यस्य अव्ययत्वात् 'अव्ययादाप्सुपः' इति लुक् शङ्क्यः, अव्ययमिति महासंज्ञया लिङ्गाद्यनन्वितार्थकस्यैव अव्ययत्वात्। अजादौ अयादेशं मत्वाह—सयौ सय इति। 'एङ्ह्रस्वात्' इति सम्बुद्धिलोपः, हे से। नन्वेवं सति हे हरे इत्यत्र सम्बुद्धिलोपो न स्यात्। सम्बुद्धिं परनिमित्तमाश्रित्य प्रवृत्तस्य गुणस्य सम्बुद्धिविघातकं सुलोपं प्रति सन्निपातपरिभाषया निमित्तत्वायोगात्। न चैवं सत्येङ्ग्रहणवैयर्थ्यं शङ्क्यम्, हे से इत्यत्र चरितार्थत्वादिति चेत्, शृणु—हे हरे इत्यत्र सम्बुद्धिरूपस्य स्वोपजीव्यगुणविघातत्वमेव नास्ति। सत्यपि तल्लोपे प्रत्ययलक्षणमाश्रित्य सम्बुद्धिसत्वात्, तेन च गुणस्य निर्बाधत्वात्। केचित्तु गुणात् सम्बुद्धे इत्यनुक्त्वा 'एङ्ह्रस्वात्' इत्युक्तेः सन्निपातपरिभाषां बाधित्वापि सम्बुद्धिलोपः प्रवर्तत इत्याहुः। न च जसि सयः इति कथम् अन्तर्वर्तिविभक्त्या से इत्यस्य पदत्वेनायादेशं बाधित्वा 'एङः पदान्तात्' इति पूर्वरूपापत्तेरिति वाच्यम् 'उत्तरपदत्वे चापदादिविधौ' इति प्रतिषेधात्। उत्तरपदस्य तद्घटितस्य वा पदत्वे कर्तव्ये अन्तर्वर्तिविभक्तेः प्रत्ययलक्षणं नास्तीति हि तदर्थः। सेनासेवकादिशब्दगतस्य से इत्यस्य अनुकरणं वा अस्तु। तत्र जसि अयादेशस्य निर्बाधत्वात्। इत्येदन्ताः॥

स्मृतेः । स्मृतयौ स्मृतयः ॥ इत्येदन्ताः ॥ ( २८४ ) गोतो णित् ७।१।९०॥ गोशब्दात्परं सर्वनामस्थानं णिद्वत्स्यात् । गौः । गावौ । गावः । ( २८५ ) औतोऽम्शसोः ६।१।९३॥ 'आ ओतः' इति छेदः । ओकारादम्शसोरचि परे आकार एकादेशः स्यात् । शसा साहचर्यात्सुबेव अम् गृह्यते । नेह । अचिनवम् । असुनवम् । गाम् गावौ गाः । गवा । गवे । गोः इत्यादि । ओतो णिदिति वाच्यम् ।

---

अथ ओदन्ता निरूप्यन्ते । गोस् इति स्थिते । गोतो णित् । गोत इति तपरकरणम् । 'इतोऽत् सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इत्यनुवृत्तं प्रथमया विपरिणम्यते । तदाह—गोशब्दादित्यादिना । णिद्वत्स्यादिति । णिति परे यत् कार्यं तत्कार्यकारीत्यर्थः । गौरिति । णिद्वत्त्वे 'अचो ञ्णिति' इति वृद्धिः औकारः । रुत्वविसर्गाविति भावः । गावौ गाव इति । णिद्वत्त्वे वृद्धिः आवादेशश्चेति भावः । हे गौः । वृद्धौ एङः परत्वाभावात् न सम्बुद्धिलोपः । अमि गो अम् इति स्थिते णिद्वत्वात् वृद्धौ प्राप्तायाम् । औतोऽम्शसोः । छेद इति । आ ओत् इति च्छेदः, व्याख्यानादिति भावः । ओत इति तपरकरणम् । ओकारादित्यर्थः । अम् च शस् च अम्शसौ, तयोरिति विग्रहः । अवयवषष्ठ्यन्तमेतत् । 'इको यणचि' इत्यतः अचीत्यनुवर्तते । 'एकः पूर्वपरयोः' इत्यधिकृतम् । तदाह—ओकारादित्यादिना । शस् इह सुबेव गृह्यते । न तु बह्वल्पार्थादिति तद्धितः शस्, अचीत्यनुवृत्तेः तद्धितस्य च शसः अजादित्वासम्भवात् 'लशक्वतद्धिते' इत्यत्र तद्धितपर्युदासात् । ननु 'चिञ् चयने' लङ्, अडागमः, उत्तमपुरुषो मिप् । तस्थस्थमिपाम् इति तस्य अमादेशः । श्नुर्विकरणः । 'सार्वधातुकार्धधातुकयोः' इति गुणः ओकारः । अचिनो अम् इति स्थिते अवादेशे अचिनवमिति रूपम् । तत्र अचिनो अम् इति स्थिते अवादेशं बाधित्वा 'औतोऽम्शसोः' इत्यात्वे 'अचिनाम्' इति स्यादित्यत आह—शसेति । गामिति । परापि 'अचो ञ्णिति' इति वृद्धिरिह न भवति आत्वस्य निरवकाशतया तदपवादत्वादिति भाष्यम् । न हि वृद्धिविषयादन्यत्र आत्वस्य प्रवृत्तिरस्तीति तदाशयः । न च द्योशब्दादमि आत्वं सावकाशं 'गोतो णित्' इति णित्वस्य तत्राभावे वृद्धेरप्रसक्तेरिति वाच्यम् । अस्मादेव भाष्यात् 'ओतो णित्' इति णित्वस्य वक्ष्यमाणत्वेन तस्यापि वृद्धिविषयत्वादिति भावः । गा इति । असर्वनामस्थानत्वान्न णिद्वत्त्वम् । नापि वृद्धिः । 'औतोऽम्शसोः' इत्यात्वमिति भावः । टादावचि अवादेशं मत्वाह—गवा गवे इति । गोरिति । 'ङसिङसोश्च' इति पूर्वरूपमिति भावः । इत्यादीति । गवोः गवाम् । गवि इत्यादिशब्दार्थः । द्योशब्दः ओकारान्तः स्त्रीलिङ्गः । 'सुरलोको द्योदिवौ द्वे स्त्रियाम्' इत्यमरः । सु शोभना द्यौः यस्येति बहुव्रीहौ पुँल्लिङ्गः । सुद्यो स् इत्यादिसर्वनामस्थाने गोतो णित् इत्यप्राप्ते । ओतो णिदिति

विहितविशेषणं च। तेन सुद्यौः सुद्यावौ सुद्यावः। सुद्यामित्यादि। 'ओकारान्ताद्विहितं सर्वनामस्थानम्' इति व्याख्यानान्नेह। हे भानो। हे भानवः। उः-शम्भुः स्मृतो येन सः-स्मृतौः स्मृतावौ स्मृतावः। स्मृताम् स्मृतावौ स्मृताः, इत्यादि। इत्योदन्ताः॥ (२८६) रायो हलि ७।२।८५॥ रैशब्दस्य आकारोऽन्तादेशः स्याद्धलि विभक्तौ। राः। अच्यायादेशः। रायौ रायः। राबम् रायौ रायः।

---

वाच्यम्। गोत इति गकारमपनीय 'ओतो णित्' इति वाच्यमित्यर्थः। तत्र प्रमाणमनुपदमेवोक्तम्। न त्विदं वार्तिकम्। तत्र ओत इति तपरकरणम्। ओकारात् सर्वनामस्थानं णिदिति लभ्यते। विहितेति। ओकाराद्विहितं सर्वनामस्थानमित्येवमोत इत्येतद्विहितविशेषणमाश्रयणीयमित्यर्थः। तेनेति। 'गोतः' इति गकारमपनीय 'ओत' इति वचनेनेत्यर्थः।सुद्यामित्यादीति। गोशब्दवद्रूपाणीति भावः। हे भानौ इति। ओकारात् परं सर्वनामस्थानं णिदिति व्याख्याने तु भानुशब्दात् सम्बुद्धौ 'ह्रस्वस्य गुणः' इति गुणे ओकारे सति सोः ओकारात् परत्वात् णिद्वत्त्वे वृद्धौ औकारे एङः परत्वाभावात् सुलोपाभावे रुत्वविसर्गयोः हे भानौः, इति स्यात्। अतो विहितविशेषणमित्यर्थः। ननु 'एङ्ह्रस्वात् सम्बुद्धेः' इत्यत्र एङ्ग्रहणसामर्थ्यादेव हे भानोः इत्यत्र णित्त्वं तत्प्रयुक्तवृद्धिश्च न भवति। अन्यथा 'एद्ध्रस्वात्' इत्येव ब्रूयात्। अतो विहितविशेषणमनर्थकमित्यस्वारस्यादाह—हे भानव इति। तत्र 'जसि च' इति गुणे भानो अस् इति स्थिते। ओतः परत्वाण्णिद्वत्त्वे वृद्धौ आवादेशे भानावः इति स्यात्। अतो विहितविशेषणमिति भावः। वस्तुतस्तु लक्षणप्रतिपदोक्तपरिभाषया हे भानो हे भानवः इत्यत्र णिद्वत्वाभावोपपत्तेः विहितविशेषणत्वाश्रयणं व्यर्थमेव। उः शम्भुरिति। उः इत्यस्य विवरणं शम्भुरिति। उः स्मृतो येनेति विग्रहे बहुव्रीहिः। 'निष्ठा' इति स्मृतशब्दस्य पूर्वनिपातः। आद्गुणः। स्मृतो, इति रूपम्। ततः सुबुत्पत्तौ गोशब्दवद्रूपाणि। वस्तुतस्तु 'गोतो णित्' इति सूत्रशेषतया 'द्योश्च वृद्धिर्वक्तव्या' इत्येव वार्तिकं भाष्ये दृश्यते। 'औतोऽम्शसोः' इत्यत्र ओतो णिदिति तु न दृश्यते। अतोऽन्यदोकारान्तं प्रातिपदिकं नास्तीत्याहुः। इत्योदन्ताः।

अथैदन्ता निरूप्यन्ते। रैशब्दो धनवाची। 'अर्थरैविभवा अपि' इत्यमरः। तस्य हलादिविभक्तिषु विशेषं दर्शयति—रायो हलि। राय इति रैशब्दस्य षष्ठ्यन्तम्। 'अष्टन आ विभक्तौ' इत्यतः आ इति विभक्ताविति चानुवर्तते। हलीत्यनेन विभक्ताविति विशेष्यते। तदादिविधिः। तदाह—रैशब्दस्येत्यादिना। हल्ग्रहणादचि आत्वं न, किं तु आयादेश एवेत्यत आह—अचीति। राः। आत्वे रुत्वविसर्गौ। अचि

राया राभ्यामित्यादि। इत्यैदन्ताः। ग्लौः, ग्लावौ ग्लावः। ग्लावम्। ग्लावौ ग्लावः इत्यादि। 'औतोऽम्शसोः' ( सू २८५ ) इतीह न प्रवर्तते। 'ऐ औच्' ( म सू ४ ) इति सूत्रेण ओदौतोः सावर्ण्याभावज्ञापनात्। इत्यौदन्ताः॥

इत्यजन्तपुँल्लिङ्गप्रकरणम्।

## अथाजन्तस्त्रीलिङ्गप्रकरणम्॥ ९॥

रमा। (२८७) औङ आपः ७।१।१८॥ आबन्तादङ्गात्परस्यौङः शी

---

आयादेशमुदाहरति—रायौ राय इति। इत्यादीति। राभिः। राये राभ्याम् राभ्यः। रायः राभ्याम् राभ्यः। रायः रायोः रायाम्। रायि रायोः रासु। रैशब्दः छान्दस इति भाष्यम्। क्यजन्त एव छान्दस इति पक्षान्तरम्॥ इत्यैदन्ताः॥

अथ औदन्ता निरूप्यन्ते। ग्लौशब्दश्चन्द्रवाची। 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः। तस्य हलादौ न कश्चिद्विकारः। अचि तु आवादेश इति मत्वाह—'ग्लौः ग्लावौः ग्लाव इति। ग्लावम् ग्लावौ ग्लावः। ग्लावा ग्लौभ्याम् ग्लौभिः। ग्लावे ग्लौभ्याम् ग्लौभ्यः। ग्लावः ग्लौभ्याम् ग्लौभ्यः। ग्लावः ग्लावोः ग्लावाम्। ग्लावि ग्लावोः ग्लौषु। ननु 'औतोऽम्शसोः' इत्यत्र ओद्ग्रहणेन सावर्ण्यादौकारस्यापि ग्रहणात् अम्शसोर्ग्लौशब्दस्य आत्वं कुतो न स्यादित्यत आह—औतोऽम्शसोरितीह न प्रवर्तत इति। ऐऔजित्यादिग्रन्थस्तु संज्ञाप्रकरणे व्याख्यातः। एवं जनानवतीति जनौः। क्विप्। ज्वरत्वरेत्यूठ्। एत्येधतीति वृद्धिः। जनावौ। जनावः इत्यादि। इत्यौदन्ताः॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां अजन्तपुँल्लिङ्गनिरूपणं समाप्तम्॥

---

अथ अजन्तस्त्रीलिङ्गा निरूप्यन्ते। रमेति। रमत इति रमा। 'रमु क्रीडायाम्' इति पचाद्यचि 'अजाद्यतष्टाप्' प्रत्ययान्तत्वादप्रातिपदिकत्वेऽपि 'ङ्याप्प्रातिपदिकात्' इति ङ्यापोः पृथग्ग्रहणात्, लिङ्गविशिष्टपरिभाषया वा स्वादयः। 'हल्ङ्याप्' इति सुलोपः। अथ रमा औ इति स्थिते। औङ आपः। आप इति पञ्चमी। प्रत्ययग्रहणपरिभाषया आबन्तं विवक्षितम्। अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते। औङः इति षष्ठी। 'जसः शी' इत्यतः शीत्यनुवर्तते। तदाह—आबन्तादित्यादिना। औङ्श-

स्यात्। औङ् इत्यौकारविभक्तेः सञ्ज्ञा। रमे। रमाः। (२८८) सम्बुद्धौ च ७।३।१०६॥ आप एकारः स्यात्सम्बुद्धौ। 'एङ्ह्रस्वात्—' (सू १९२) इति सम्बुद्धिलोपः। हे रमे, हे रमे, हे रमाः। रमाम् रमे रमाः। स्त्रीत्वान्नत्वाभावः। (२८९) आङि चापः ७।३।१०५॥ आङि ओसि च परे आबन्तस्याङ्गस्यैकारः स्यात्। रमया रमाभ्याम् रमाभिः। (२९०) याडापः ७।३।११३॥ आपः परस्य ङिद्वचनस्य याडागमः स्यात्। 'वृद्धिरेचि, (सू ७२) रमायै। सवर्णदीर्घः। रमायाः। रमायाः रमयोः रमाणाम्। रमायाम् रमयोः रमासु। एवं

ब्दस्याप्रसिद्धार्थत्वादाह—औङितीति। संज्ञेति। प्राचां शास्त्रे स्थितेति शेषः। रमे इति। रमा औ इति स्थिते शीभावे तस्य स्थानिवत्त्वेन प्रत्ययत्वात् 'लशक्वतद्धिते' इति शस्येत्संज्ञायां लोपे 'आद्गुणः' इति एकारः। 'यस्येति च' इति लोपस्तु न, अभत्वात्। जसि सवर्णदीर्घं मत्वाह—रमा इति। पूर्वसवर्णदीर्घस्तु न भवति, 'दीर्घाज्जसि च' इति निषेधात्। हे रमा स् इति स्थिते। सम्बुद्धौ। 'बहुवचने झल्येत्' इत्यतः एदिति 'आङि चापः' इत्यतः आप इति चानुवर्तते। तदाह—आप इत्यादिना। आबन्तस्येत्यर्थः। 'अलोऽन्त्यस्य'। हे रमे स् इति स्थिते प्रक्रियां दर्शयति—एङ्ह्रस्वादिति। हल्ङ्यादिलोपस्तु न, परत्वात् प्रतिपदोक्तत्वाच्च, एत्वे कृते हल्ङ्यादिलोपस्याप्राप्तेः 'एङ्ह्रस्वात्' इति लोपस्यैव परत्वेन न्याय्यत्वाच्चेति भावः। रमामिति। 'अमि पूर्वः' इति पूर्वरूपम्। औङः शीभावे आद्गुणं मत्वाह—रमे इति। स्त्रीत्वादिति। शसि रमा अस् इति स्थिते पूर्वसवर्णदीर्घे सति कृतपूर्वसवर्णदीर्घात् परत्वेऽपि 'तस्माच्छसः' इति नत्वे स्त्रीलिङ्गत्वान्न भवतीत्यर्थः। रमा आ इति स्थिते—आङि चापः। ओसि च इत्यनुवर्तते आप इति षष्ठी। अङ्गस्येत्यधिकृतम्। तदन्तविधिः। 'बहुवचने झल्येत्' इत्यत एदित्यनुवर्तते। तदाह—आङि ओसि चेत्यादिना। आङिति टासंज्ञा प्राचामित्युक्तम्। अलोऽन्त्यस्य एत्वे अयादेश इत्याह-रमयेति। रमाभिरिति। 'अतो भिसः' इति तपरकरणादैस् न। रमा ए इति स्थिते। याडापः। आप इति पञ्चमी। 'घेर्ङिति' इत्यतो ङितीत्यनुवृत्तं षष्ठ्या विपरिणम्यते। तदाह—आपः परस्येत्यादिना। टित्त्वादाद्यवयवः। वृद्धिरेचीति। या ए इति स्थिते आकारस्य एकारस्य च स्थाने ऐकार एकादेश इति भावः। सवर्णेति। ङसिङसोः रमा अस् इति स्थिते यडागमे 'अकः सवर्णे दीर्घः' इति सवर्णदीर्घ इति भावः। यडित्येव सुवचम्। 'अतो गुणे' इति पररूपं तु न, अकारोच्चारणसामर्थ्यात्। रमयोरिति। 'आङि चापः' इत्येत्वे अयादेश इति भावः। रमाणामिति। 'ह्रस्वनद्यापः' इत्यत्राब्ग्रहणान्नुटि पर्जन्यवल्लक्षणप्रवृत्त्या 'नामि' इति दीर्घे 'अट्कुप्वाङ्' इति णत्वमिति भावः। रमायामिति। रमा इ इति स्थिते 'ङेराम्नद्याम्नीभ्यः' इत्यामादेशे याडा-

दुर्गादयः। ( २६१ ) सर्वनाम्नः स्याड्ढ्रस्वश्च ७।३।११४॥ आबन्तात्सर्वनाम्नः परस्य ङितः स्याट् स्यादापश्च ह्रस्वः। याटोऽपवादः। सर्वस्यै। सर्वस्याः। सर्वस्याः। एकादेशस्य पूर्वान्तत्वेन ग्रहणात् 'आमि सर्वनाम्नः—' ( सू २१७ ) इति सुट्। सर्वासाम्। सर्वस्याम् सर्वयोः सर्वासु। एवं विश्वादयोऽप्याबन्ताः। ( २६२ ) विभाषा दिक्समासे बहुव्रीहौ १।१।२८॥ अत्र सर्वनामता वा स्यात्। उत्तरपूर्वस्यै–उत्तरपूर्वायै। 'दिङ्नामान्यन्तराले' ( सू ८४५ ) इति प्रति-

---

गमे सवर्णदीर्घ इति भावः। 'न विभक्तौ' इति मस्य नेत्वम्। सर्वशब्दाट्टापि सर्वाशब्दः। सोऽपि प्रायेण रमावत्। ङित्सु 'याडापः' इति प्राप्ते। सर्वनाम्नः स्याड्ढ्रस्वश्च। 'याडापः' इत्यत आप इति पञ्चम्यन्तमनुवृत्तम्। तेन सर्वनाम्न इत्येतद्विशेष्यते। तदन्तविधिः। 'घेर्ङिति' इत्यतो ङितीत्यनुवृत्तं षष्ठ्या विपरिणम्यते। ततश्च आबन्तात्सर्वनाम्नः परस्य ङितः स्याट् स्यादित्यर्थः। टित्वादाद्यवयवः। ह्रस्वश्चेति वाक्यान्तरम्। आप इत्यनुवृत्तमावर्तते। षष्ठ्यन्ततया च विपरिणम्यते तच्च ह्रस्व- इत्यत्रान्वेति। आपः स्थाने ह्रस्वो भवतीति तदर्थः। तदाह—आबन्तादिति। याटोऽपवाद इति। येन नाप्राप्तिन्यायादिति भावः। सर्वस्यै इति। सर्वा ए इति स्थिते स्याट्। वकारादाकारस्य ह्रस्वः, वृद्धिरिति भावः। सर्वस्याः इति। ङसिङसोः सर्वा अस् इति स्थिते स्याट्, आपो ह्रस्वः, सवर्णदीर्घ इति भावः। ननु आबन्तस्य सर्वाशब्दस्य सर्वादिगणे पाठाभावात् कथं सर्वनामत्वमित्यत आह—एकादेशस्येति। वकारादाकारस्य आपश्च योऽयमेकादेशः सवर्णदीर्घः तस्येत्यर्थः। ननु एकादेशनिष्पन्नस्य आकारस्य पूर्वान्तत्वे आप्त्वव्याघातात् आबन्तत्वं व्याहतम्। न च परादिवत्त्वेन आबन्तत्वमपीति वाच्यम्, उभयत आश्रयणे नान्तादिवत् इति निषेधादिति चेत्, सत्यम् लिङ्गविशिष्टपरिभाषया आबन्तस्य सर्वनामत्वम्। आबन्तत्वं तु परादिवद्भावेनेत्याहुः। सर्वस्यामिति। ङौ सर्वा इ इति स्थिते 'ङेराम्' इत्याम् सुटं बाधित्वा परत्वात् स्याट् ह्रस्वश्च। सकृद्गतिन्यायान्न पुनः सुट्। एवमिति। सर्वादिगणपठितविश्वादयः आबन्तत्वं प्राप्ताः सर्वाशब्दवदित्यर्थः।

उत्तरस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालम् उत्तरपूर्वा। 'दिङ्नामान्यन्तराले' इति बहुव्रीहिविशेषोऽयम्। तत्र विशेषं दर्शयितुमाह—विभाषा दिक्समासे। 'सर्वादीनि' इत्यतः सर्वनामग्रहणमनुवर्तते। तदाह—अत्रेति। दिक्समासे इत्यर्थः। 'न बहुव्रीहौ' इत्यलौकिकविग्रहवाक्ये नित्यनिषेधे प्राप्ते विकल्पार्थमिति केचित्। गौणत्वादप्राप्ते विभाषेयमित्यन्ये। सर्वनामत्वपक्षे उदाहरति–उत्तरपूर्वस्यै इति। स्याड्ढ्रस्वौ। उत्तरपूर्वायै इति। सर्वनामत्वाभावपक्षे याट्। उत्तरपूर्वस्याः–उत्तरपूर्वायाः।

पदोक्तस्य दिक्समासस्य ग्रहणान्नेह। योत्तरा सा पूर्वा यस्याः उन्मुग्धायास्तस्यै उत्तरपूर्वायै। बहुव्रीहिग्रहणं स्पष्टार्थम्। अन्तरस्यै शालायै। बाह्यायै इत्यर्थः।। 'अपुरि' इत्युक्तेर्नेह। अन्तरायै नगर्यै। ( २६३ ) विभाषा द्वितीयातृतीयाभ्याम् ७।३।११५॥ आभ्यां ङितः स्याट् स्यादापश्च ह्रस्वः। इदं सूत्रं त्यक्तुं शक्यम्। तीयस्य ङित्सूपसङ्ख्यानात्। द्वितीयस्यै—द्वितीयायै। द्वितीयस्याः—द्वितीयायाः। द्वितीयस्याः—द्वितीयायाः। द्वितीयस्याम्—द्वितीयायाम्। शेषं रमावत्। एवं तृतीया। 'अम्बार्थनद्योर्ह्रस्वः' ( सू. २६७ )। हे अम्ब। हे अक्क। हे अल्ल।

---

उत्तरपूर्वासाम्–उत्तरपूर्वाणाम्। उत्तरपूर्वस्याम्–उत्तरपूर्वायाम्। 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति मात्रग्रहणात् सम्प्रति असर्वनामत्वेऽपि पूर्वपदस्य पुंवत्त्वम्। ननु उत्तरा दिगिति मत्वा मोहवशात् पूर्वा दिक् यस्याः सा उत्तरपूर्वा 'अनेकमन्यपदार्थे' इति बहुव्रीहिः। अत्रापि दिक्शब्दघटितसमासत्वात् सर्वनामताविकल्पे उत्तरपूर्वस्यै–उत्तरपूर्वायै इति रूपद्वयं स्यात्। स्याडागमस्तु नेष्यते। तत्राह—दिङ्नामानीति। 'दिङ्नामान्यन्तराले' इति बहुव्रीहिः प्रतिपदोक्तो दिक्समासः, दिक्शब्दमुच्चार्य विहितत्वात्। न तु 'अनेकमन्यपदार्थे' इति बहुव्रीहिरपि। ततश्च लक्षणप्रतिपदोक्तपरिभाषया न तस्य ग्रहणमित्यर्थः। योत्तरेति। उत्तराशब्दस्य पूर्वाशब्दस्य च सामानाधिकरण्यं द्योतयितुं यत्तच्छब्दौ। सामानाधिकरण्याभावे 'अनेकमन्यपदार्थे' इति बहुव्रीहेरसम्भवात्, 'बहुव्रीहिः समानाधिकरणानां वक्तव्यः' इति वचनात्। उन्मुग्धाया इति। तेन पूर्वोत्तरयोर्विरोधात् कथं सामानाधिकरण्यमिति शङ्का निरस्ता। ननु 'विभाषा दिक्समासे' इत्येवास्तु, बहुव्रीहिग्रहणं न कर्तव्यम्। प्रतिपदोक्तत्वेन 'दिङ्नामानि' इति बहुव्रीहेरेव ग्रहणसिद्धेरित्यत आह—बहुव्रीहिग्रहणं स्पष्टार्थमिति। बाह्यायै इत्यर्थ इति। 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च॥' इति कोशात्। अर्थान्तरपरत्वे तु सर्वनामत्वाभावात् न स्यादिति भावः। अपुरीत्युक्तेरिति। 'अन्तरं बहिर्योग' इति गणसूत्र इति शेषः। विभाषा। 'घेर्ङिति' इत्यतो ङितीत्यनुवृत्तं षष्ठ्या विपरिणम्यते। 'याडापः' इत्यतो आप इति, 'सर्वनाम्नः स्याट्' इत्यतः स्याडिति ह्रस्व इति चानुवर्तते। तदाह—आभ्यामित्यादिना। इदमिति। 'विभाषा द्वितीयातृतीयाभ्याम्' इति सूत्रं न कर्तव्यमित्यर्थः। कुत इत्यत आह—तीयस्येति। विभाषाप्रकरणे तीयप्रत्ययान्तस्य ङित्सु सर्वनामत्वोपसङ्ख्यानादित्यर्थः। न च तीयस्य ङित्सूपसङ्ख्यानमेव त्यजतामिति वाच्यम्, पुन्नपुंसकार्थं तस्यावश्यकत्वात्। अम्बार्थेति। व्याख्यातमिदं पुंसीदन्ताधिकारे। तत्र नदीविषये उदाहृतम्। अम्बार्थानुदाहरति—हे अम्बेत्यादि। शेषं

'असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न' ( वा ४५९२ )। हे अम्बाडे। हे अम्बाले। हे अम्बिके। जरा। जरसौ। शीभावात्परत्वाज्जरस्। आमि नुटः परत्वात् जरस्। जरसामित्यादि। पक्षे हलादौ च रमावत्। इह पूर्वविप्रतिषेधेन शीभावं

---

रमावत्। अत्र भाष्ये 'डलकवतीनां प्रतिषेधो वक्तव्यः'। हे अम्बाडे। हे अम्बाले। हे अम्बिके। तदिदं वार्तिकं न कर्तव्यमित्युक्त्वा द्व्यच्कस्यैवाम्बार्थस्य ह्रस्व इति स्थितम्। यथाश्रुतवार्तिके तु हे अक्ष इत्यत्राव्याप्तिः स्यादिति तदाशयः। तदत्र फलितमाह—असंयुक्ता इति। व्यच्कानामम्बार्थानां ह्रस्वः। इत्यस्याङ्गत्वात्तदन्तविधिः। अतः जगदम्ब इत्यत्र द्व्यच्काम्बान्तत्वात् भवति ह्रस्वः।

जरेति। 'जॄष् वयोहानौ'। 'षिद्भिदादिभ्यः' इत्यङ्। 'ऋदृशोऽङि' इति गुणः, रपरत्वम्। अदन्तत्वात् टाप्, सुः, हल्ङ्यादिना सुलोप इति भावः। जरसाविति। 'जराया जरसन्यतरस्याम्' इति अजादौ जरसादेश इति भावः। ननु शीभावे कृते सति आबन्तसन्निपातमुपजीव्य प्रवृत्तस्य तस्य सन्निपातपरिभाषया आबन्तत्वविघातकजरसादेशनिमित्तत्वासम्भवेन जरसादेशभावे आद्गुणे जरे इत्येव स्यादित्यत आह—शीभावादिति। जरसि कृते तु आबभावान्न शीभाव इति भावः। जरसः। जरसम् जरसौ जरसः। टा जरसा। न चात्र जर आ इति स्थते जरसादेशं बाधित्वा परत्वात् 'आङि चापः' इत्येत्वे अयादेशे जरयेत्येव युक्तमिति वाच्यम्, एकदेशविकृतन्यायेन कृतेऽप्येत्वे प्रवृत्तस्य जरसादेशस्य नित्यतया तस्यैव प्रवृत्तेः, परान्नित्यस्य बलवत्त्वात्। कृते तु जरसि आबभावादेत्वं न। ङे जरसे। न चात्र जरा ए इति स्थिते जरसादेशं बाधित्वा परत्वात् याटि वृद्धौ जरायै इत्येव युक्तमिति वाच्यम्, अन्तरङ्गत्वेन जरसादेशस्यैव प्रवृत्तेः परादन्तरङ्गस्य बलवत्त्वात्, आपः परस्य ङितः सुपो विहितस्य याटो बह्वाश्रयत्वेन बहिरङ्गत्वात्। ङसिङसोः-जरसः। अत्रापि पूर्ववद्याट् न। जरसोः। एत्वं बाधित्वा नित्यत्वात् जरस्। आमि जरसाम्। नन्वामि नुटि कृते अजादिविभक्त्यभावात् कथं जरसादेश इत्यत आह—आमि नुट इति। ङौ जरसि। परमपि ङेरामं याटं च नित्यत्वादन्तरङ्गत्वाच्च क्रमेण बाधित्वा जरस्। पक्षे हलादौ च रमावदिति। जरसादेशाभावपक्षे हलादावपि रमावदित्यर्थः।

मतान्तरं दूषयितुमनुवदति—इह पूर्वेत्यादिना। इह जराशब्दे जरा औ इति स्थिते शीभावमाश्रित्य जरसी इति केचिदाहुरित्यन्वयः। आश्रित्येत्यनन्तरं जरसादेशे कृते इति शेषः। ननु शीभावं बाधित्वा परत्वात् जरसादेश एव युक्त इत्यत आह—पूर्वविप्रतिषेधेनेति। विप्रतिषेधे परमित्यत्र परशब्दस्य इष्टवाचितामाश्रित्य क्वचित् पूर्वस्य प्रवृत्त्याश्रयणेनेत्यर्थः। ननु आबन्तसन्निपातमुपजीव्य प्रवृत्तस्य शीभावस्य सन्निपातपरिभाषया आबन्तसन्निपातविघातकजरसादेशनिमित्तत्वं न सम्भ-

कृत्वा सन्निपातपरिभाषायाः अनित्यतां चाश्रित्य 'जरसी' इति केचिदाहुः। तन्निर्मूलम्। यद्यपि जरसादेशस्य स्थानिवद्भावेनावन्ततामाश्रित्य 'औङ आपः' (सू २८७) 'आङि चापः' (सू २८९) 'याडापः' (सू २९०) 'ह्रस्वनद्यापः—' (सू २०८) 'ङेराम्—' (सू २७०) इति च पञ्चापि विधयः प्राप्ताः। एवं नस्निश्पृत्सु। तथाप्यनल्विधावित्युक्तेर्न भवन्ति। 'आ आप' इति प्रश्लिष्याकार-

वतीत्यत आह—सन्निपातपरिभाषाया अनित्यतां चेति। तन्निर्मूलमिति। पूर्वविप्रतिषेधाश्रयणस्य भाष्यापरिगणितेष्वप्रवृत्तेः सन्निपातपरिभाषायाः सर्वत्रानित्यत्वाश्रयणे प्रमाणाभावाच्चेति भावः।

स्यादेतत्। जरसौ, जरसामित्यत्र 'औङ आपः' 'ह्रस्वनद्यापो नुट्' इत्यपेक्षया परत्वादस्तु जरसादेशः। अस्तु च ङेङसिङस्सु जरसे जरसः इत्यत्र याटमन्तरङ्गत्वात् बाधित्वा जरसादेशः। अस्तु च ङौ जरसि इत्यत्र नित्यत्वादामं अन्तरङ्गत्वाद्याटं च बाधित्वा जरसादेशः। तथापि तस्य जरसादेशस्य स्थानिवत्त्वेन आबन्तात् तदाश्रित्य एत्वशीभावयाड्नुडागमाः कुतो न स्युः। किञ्च अनेनैव न्यायेन नासिकाशब्दस्य निशाशब्दस्य पृतनाशब्दस्य च एत्वशीभावयाड्नुडागमात् बाधित्वा 'पद्दन्नो' इत्यादिना नस् निश् पृत् इत्यादेशेषु क्रमेण कृतेषु तेषां स्थानिवद्भावेन आवन्तत्वमाश्रित्य एत्वशीभावयाड्नुडागमाः प्रसज्येरन्निति शङ्कते—यद्यपीत्यादिना। परिहरति—तथापीति। स्थानीभूतावन्ताश्रयविधयः एते एत्वादिविधयः। अतस्तेषु कर्तव्येषु जरसाद्यादेशानां स्थानिवत्त्वं न सम्भवति, अनल्विधाविति तन्निषेधात्। ततश्च जरसाद्यादेशानामावन्तत्वालाभात् एत्वादिविधयो न भवन्तीत्यर्थः। ननु अल्त्वव्याप्याकारत्वादिधर्मपुरस्कारेण स्थान्यलमाश्रित्य प्रवर्तमानो विधिरल्विधिः, न तु यथाकथञ्चित् अलाश्रयविधिरपि। रामायेत्यत्र 'सुपि च' इति दीर्घाभावप्रसङ्गात्। तत्र हि दीर्घो यञादिसुपि परतो विधीयते। यादेशस्य च सुप्त्वं स्थानिवत्त्वलभ्यम्। यादेशस्य च एकारः अल् स्थानी। ततश्च दीर्घस्य स्वनिमित्तभूतसुप्त्वांशे तदाश्रयत्वादनल्विधाविति निषेधात् दीर्घे कर्तव्ये यादेशस्य स्थानिवत्त्वाभावेन सुप्त्वाभावात् तस्मिन् परतो दीर्घो न स्यात्। अल्त्वव्याप्याकारत्वादिधर्मपुरस्कारेण स्थान्यलमाश्रित्य प्रवर्तमानो विधिरल्विधिरित्याश्रयणे तु न दोषः। दीर्घो हि यादेशस्थानिभूतस्य एकारमेकारत्वेन नाश्रयति। किन्तु सुप्त्वेनैव। सुप्त्वं चाल्त्वव्याप्यं न भवति, भ्यामादावपि सत्त्वात्। ततश्च दीर्घस्यानल्विधित्वात् तस्मिन् कर्तव्ये यादेशस्य स्थानिवत्त्वेन सुप्त्वसम्भवात् दीर्घो निर्बाधः। प्रकृते च एत्वादिविधयः जरसादेशस्थानीभूताबन्तत्वपुरस्कारेण सम्भवत्प्रवृत्तिकाः। आप्त्वं च समुदायस्य धर्मः, नत्वाकारमात्रस्य। ततश्च एत्वादिविधीनामनल्विधित्वात्तेषु कर्तव्येषु जरसादेशस्य स्थानिवत्त्वे-

रूपस्यैवापः सर्वत्र ग्रहणात्। एवं 'हल्ङ्याप्—' ( सू २५२ ) इति सूत्रेऽपि 'आ आप्' 'ङी ई' इति प्रश्लेषात्, 'अतिखट्वः' 'निष्कौशाम्बिः' इत्यादिसिद्धेर्दीर्घग्रहणं प्रत्याख्येयम् । न चैवमपि 'अतिखट्वाय' इत्यत्र स्वाश्रयमाकारत्वं स्थानिव-

---

नावन्तत्वं दुर्वारमित्याशङ्क्याह—आ आवित्यादिना। 'आङि चापः' इत्यादिषु सवर्णदीर्घेण आ आप् इति प्रश्लिष्य आकाररूपावन्ताश्रयणेन एत्वादयो विधीयन्ते। ततश्च ते आकारत्वरूपेणाप्यापमाश्रयन्तीति तेषामल्विधित्वात् तेषु कर्तव्येषु जरसादेशस्य स्थानिवत्त्वादावन्तत्वं न सम्भवति। ततश्च एत्वादिविधयोऽत्र न भवन्तीत्यर्थः। प्रसङ्गादाह—एवमिति। यथा 'आङि चापः' इत्यादिषु आ आविति प्रश्लेषः। एवं हल्ङ्याब्भ्यः इत्यत्र ङी ई, आ आविति सवर्णदीर्घेण प्रश्लेषात् दीर्घग्रहणं प्रत्याख्येयमित्यन्वयः। ननु तत्र दीर्घग्रहणाभावे 'अतिखट्वः, निष्कौशाम्बिरि'त्यत्रापि सुलोपः स्यात्। तथाहि खट्वाशब्दष्टावन्तः खट्वामतिक्रान्तः अतिखट्वः। 'अत्यादयः क्रान्ताद्यर्थे' इति समासः। कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी। 'तेन निर्वृत्तम्' इत्यण्। 'टिड्ढाणञ्' इति ङीप्। निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः। 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः। उभयत्रापि 'गोस्त्रियोः' इति आपो ङीपश्च ह्रस्वः, ततः सुबुत्पत्तिरिति स्थितिः। अत्र स्थानिवत्त्वेनाकाररूपावन्तत्वस्य ईकाररूपङ्यन्तत्वस्य चानपायात् सोर्हल्ङ्यादिलोपे प्राप्ते तन्निवृत्त्यर्थं दीर्घग्रहणमावश्यकमेवेत्यत आह—अतिखट्वः, निष्कौशाम्बिरित्यादिसिद्धेरिति। अयमाशयः—ङी ई, आ आविति प्रश्लेषे सति आत्वरूपेण ईत्वरूपेण च ङ्यापावाश्रित्य सुलोपप्रवृत्तिर्वक्तव्या। ईत्वात्वयोश्च अल्त्वव्याप्यधर्मत्वात् तत्पुरस्कारेण प्रवर्तमानलोपविधेरल्विधित्वान्न स्थानिवत्त्वेन ङ्यावन्तत्वमस्तीति न सुलोप इति। एवञ्च दीर्घग्रहणप्रयोजनस्य प्रश्लेषेणैव सिद्धत्वात् हल्ङ्यादिसूत्रे दीर्घग्रहणं न कर्तव्यमित्यन्यत्र विस्तरः।

स्यादेतत्। 'याडापः' इत्यत्र आ आविति प्रश्लेषे सत्यपि 'अतिखट्वायेत्यत्र याड् दुर्वारः। खट्वामतिक्रान्तः अतिखट्वः। 'अत्यादयः' इति समासे 'गोस्त्रियोः' इति ह्रस्वत्वे रूपम्। ततो ङेर्यादेशे 'सुपि च' इति दीर्घे अतिखट्वायेति रूपम्। तत्र 'याडापः' इति याट् स्यात्। दीर्घे सति स्थानिवत्त्वेनाकाररूपाप्त्वस्य सत्त्वात्। न चाकारत्वस्य अल्त्वव्याप्यधर्मत्वात्। तत्पुरस्कारेण प्रवर्तमानयाड्विधेरल्विधित्वात् न दीर्घस्य स्थानिवत्त्वेनाकारत्वावच्छिन्नाप्त्वमिति वाच्यम्, याड्विधिर्हि आकाररूपावाश्रयः। तत्र आकाररूपत्वं दीर्घस्य स्वत एव सिद्धमिति न तत् स्थानिवत्त्वलभ्यम्। किन्तु आप्त्वमेव स्थानिवत्त्वलभ्यम्। आप्त्वं च समुदायधर्म एव। न त्वल्त्वव्याप्यधर्मः। तेन रूपेण स्थान्यलाश्रयत्वेऽपि अल्विधित्वाभावाद्याड्विधौ स्थानिवत्त्वं दुर्वारमिति शङ्कामुद्भाव्य परिहरति—न चेति। एवमपीति। 'या-

द्भावेनाप्त्वं चाश्रित्य याट् स्यादिति वाच्यम्। आबन्तं यदङ्गं ततः परस्य याड्विधानात्। उपसर्जनस्त्रीप्रत्यये तदादिनियमात्। 'पद्दन्नो—' (सू २२८) इति नासिकाया नस्। नसः। नसा। नोभ्यामित्यादि। पक्षे सुटि च रमावत्। निशाया निश्। निशः। निशा। (२९४) व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां

---

डापः' इत्यत्र आकारप्रश्लेषे सत्यपीत्यर्थः। स्वाश्रयमिति। स्वः आकारः आश्रयो यस्याकारत्वस्य तत्स्वाश्रयम्। स्वतस्सिद्धमिति यावत्। एवमपीत्यारभ्य याट् स्यादित्यन्तः सन्दर्भः शङ्कापरः। इति च न वाच्यमित्यन्वयः। कुत इत्यत आह— आबन्तं यदङ्गमिति। 'याडापः' इत्यत्र हि आब्ग्रहणेन प्रत्ययग्रहणपरिभाषया आबन्तं गृह्यते। अङ्गस्येति तद्विशेषणं भवति। ततश्चाबन्तादङ्गात् परस्य ङितो याड्विधीयते। यस्मात् शब्दात् यः प्रत्ययो विहितः तादृशप्रकृतिभूतशब्दरूपाद्यवयवकस्य तत्प्रत्ययरूपान्तावयवकस्य समुदायस्य ग्रहणमिति परिभाषार्थः। प्रत्ययग्रहणे प्रकृतिप्रत्ययसमुदायस्य ग्रहणमिति पर्यवसन्नार्थः। प्रकृते चातिखट्वायेत्यत्र खट्वशब्दाददन्तात् टाब्विधानात् खट्वा इत्येव टाबन्तम्, तत्तु ङितं विभक्तिं प्रति नाङ्गम्, अतिखट्वशब्दादेव ङितो विधानात्। यत्त्वङ्गमतिखट्वे'ति न तट्टाबन्तम्। अतः स्थानिवत्त्वेन आप्त्वे सत्यपि न याडिति भावः। ननु 'ष्यङः सम्प्रसारणम्' इत्यत्र भाष्ये स्त्रीप्रत्यये वाचनिकस्तदादिनियमप्रतिषेधः पठितः। तत् कथमत्र तत्प्राप्तिरित्यत आह—उपसर्जनेति। तत्र भाष्ये 'स्त्रीप्रत्यये चानुपसर्जने न' इति उपसर्जनादन्यत्रैव तदादिनियमनिषेधस्य उक्ततया प्रकृते स्त्रीप्रत्यये उपसर्जने तदादिनियमस्य निर्बाधत्वादिति भावः। नन्वेवमप्याब्ग्रहणेन प्रत्ययग्रहणपरिभाषया तदन्ते गृहीते तेनाङ्गस्य विशेषणात् आबन्तान्तं यदङ्गमित्यर्थात् अतिखट्वायेत्यत्र स दोषस्तदवस्थ इति वाच्यम्, अङ्गस्य विशेषणत्वाश्रयणात्। अत एव 'ङ्याब्ग्रहणे अदीर्घ आदेशो न स्थानिवदि'ति वार्तिककारमतं ह्रस्वे फलाभावेन स्थानिवद्भावाप्रसक्त्या कथं तत्स्थानिके दीर्घे तल्लाभ इति भाष्यकारेण दूषितम्।

अथ नासिकाशब्दे विशेषमाह—पद्दन्निति। शसि नसः। टा नसा। नोभ्यामित्यादीति। नस् भ्यामित्यत्र 'स्वादिषु' इति पदत्वे 'ससजुषो रुः' इति रुत्वे 'हशि च' इत्युत्वे गुणे नोभ्याम् नोभिः इत्यादि रूपमित्यर्थः। नस्सु। पक्षे इति। शसादौ नसादेशाभावपक्षे इत्यर्थः। अथ निशाशब्दे विशेषं दर्शयति। निशाया निशिति। शसादौ 'पद्दन्नो' इत्यनेनेति शेषः। निश् भ्यामिति स्थिते। व्रश्चभ्रस्ज। व्रश्चादयः सप्त धातवः। छशौ वर्णौ, ताभ्यां शब्दरूपविशेष्यमादाय तदन्तविधिः। झलो झलि इत्यतो झलीत्यनुवर्तते। पदस्येत्यधिकृतम्। 'स्कोः संयोगाद्योरन्ते च' इत्यतः अन्ते

षः ८।२।३६॥ व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्याज्झलि पदान्ते च। षस्य जश्त्वेन डः। निड्भ्याम्। निड्भिः। सुपि 'डः सि धुट्' (सू १२१) इति पक्षे धुट्। चर्त्वम्। तस्यासिद्धत्वात् 'चयो द्वितीयाः—' (वा ५०२३) इति टतयोष्ठथौ न। 'न पदान्ताट्टोः—' (सू० ११४) इति ष्टुत्वं न। निट्त्सु-निट्सु।

(२९५) षढोः कः सि ८।२।४१॥ षस्य ढस्य च कः स्यात्सकारे परे। इति तु न भवति। जश्त्वं प्रत्यसिद्धत्वात्। केचित्तु व्रश्चादिसूत्रे 'दादेर्धातोः—' (सू ३२५) इति सूत्रात् 'धातोः' इत्यनुवर्तयन्ति। तन्मते जश्त्वेन जकारे निज्भ्याम्। निज्भिः। 'चोः कुः' (सू २७८) इति कुत्वं तु न भवति। जश्त्वस्यासिद्धत्वात्। जश्त्वम्। श्चुत्वम्। चर्त्वम्। निच्शु। निच्छु। 'मांसपृतना-

---

इत्यनुवर्तते। तदाह—व्रश्चादीनामिति। अन्तादेश इत्यलोऽन्त्यसूत्रलभ्यम्। षस्य जश्त्वेन ड इति। प्रकृतसूत्रेण शस्य षत्वे तस्य षकारस्य 'स्वादिषु' इति पदत्वात् 'झलाञ्जशोऽन्ते' इति जश्त्वेन स्थानसाम्याड्डकारे निड्भ्यामित्यादि रूपमित्यर्थः। सुपीति। निश् सु इति स्थिते 'व्रश्च' इति षत्वे तस्य जश्त्वेन डकारे 'डस्सि धुट्' इति कदाचित् धुडागमः। चर्त्वमिति। डधयोः इति शेषः। स्थानसाम्यात् डस्य टः, धस्य तः। तस्येति। चर्त्वस्येत्यर्थः। ठथौ नेति। धुडभावपक्षे टस्य ठो न। धुट्पक्षे तस्य थो नेत्यर्थः। 'नादिन्याक्रोशे' इति सूत्रस्थभाष्ये 'चयो द्वितीयाः' इत्यस्य पाठदर्शनात्। तदपेक्षया चर्त्वस्य परत्वम्। अथ तकारस्य ष्टुत्वेन टकारमाशङ्क्य आह—न पदान्तादिति। स्वादिषु इति पदत्वं बोध्यम्। निट्त्सु इति। धुट्पक्षे रूपम्। तदभावपक्षे तुनि ट्सु।

तत्र धुडभावपक्षे निश् सु इति स्थिते 'व्रश्च' इति षत्वे तस्य षकारस्य जश्त्वात् प्राक् ककारमाशङ्कितुमाह—षढोः कः सि। षश्च ढश्चेति द्वन्द्वः। सि इति सप्तमी तदाह—षस्येत्यादिना। इति तु न भवतीति। षकारस्य ककारो न भवतीत्यर्थः। जश्त्वं प्रत्यसिद्धत्वादिति। 'झलाञ्जशोऽन्ते' इत्यपेक्षया 'षढोः कः सि' इत्यस्य परत्वादिति भावः। शसादिषु निशादेशाभावपक्षे सुटि च रमावत्। व्रश्चादिसूत्रे मतान्तरमाह—केचित्त्विति। 'एकाचो बशः' इत्युत्तरसूत्रे धातोरित्यस्यानुवृत्त्या मध्येऽपि तदनुवृत्तेरौचित्यादिति भावः। अनुवृत्तं च धातोरित्येतत् छशयोरेव विशेषणम्, व्रश्चादिषु धातुत्वाव्यभिचारात्। जश्त्वेनेति। निश् भ्यामित्यादौ निश् इत्यस्य धातुत्वाभावात् षत्वाभावे 'झलाञ्जशोऽन्ते' इति जश्त्वेन शकारस्य स्थानसाम्यात् जकार इत्यर्थः। निज् भ्यामित्यत्र कुत्वमाशङ्क्याह—कुत्वं तु नेति। जश्त्वस्यासिद्धत्वादिति। कुत्वं प्रतीति शेषः। निच्शु इति। निश् सु इति स्थिते, शस्य जश्त्वेन जः

सानूनां मांसूपृत्स्नवो वाच्याः शसादौ वा' ( वा ३४९६ ) । पृतः । पृता । पृद्भ्याम् । पक्षे सुटि च रमावत् । गोपा विश्वपावत् । इत्यादन्ताः ॥ मतिशब्दः प्रायेण हरिवत् । स्त्रीत्वान्नत्वाभावः । मतीः । नत्वं न । मत्या । (२९९) ङिति ह्रस्वश्च १।४।६॥ इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ चेवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे । 'आण्नद्याः' ( सू २९८ ) ।

---

सस्य श्चुत्वेन शः, जस्य चर्त्वेन चः, शस्य छत्वविकल्पः । मांसपृतना । मांस, पृतना, सानु इत्येतेषां मांस्, पृत्, स्नु, इत्यादेशा वाच्या इत्यर्थः । 'पद्दन्नो' इति सूत्रे वार्तिकमेतत् । अत एवाह—शसादौ वेति । पद्दन्निति सूत्रस्य शसादौ विकल्पेन प्रवृत्तेरिति भावः । मांससानुशब्दयोरस्त्रीलिङ्गत्वात् पृतनाशब्दस्यैव शसादौ पृदादेशमुदाहरति—पृत इति । पक्षे इति । पृदादेशाभावपक्षे इत्यर्थः । गोपा विश्वपावदिति । आबन्तत्वाभावात् न सुलोप इत्यर्थः । इत्यादन्ताः ॥

अथ इदन्ता निरूप्यन्ते । मतिशब्दः प्रायेण हरिवदिति । प्रायशब्दो बहुलपर्यायः । 'प्रायो भूम्नि' इत्यमरः । इह तु ईषदूनत्वे वर्तते । प्रकृत्यादित्वात्तृतीया । मतिशब्द ईषदूनहरिशब्दवत् प्रत्येतव्य इत्यर्थः । शसि विशेषमाह—स्त्रीत्वान्नत्वाभाव इति । 'तस्माच्छसो नः पुंसि' इति नत्वस्य पुंस्त्वे विधानादिति भावः । तृतीयैकवचने वित्वान्नाभावमाशङ्क्याह—नात्वं नेति । 'आङो नाऽस्त्रियाम्' इति नात्वविधौ अस्त्रियामिति पर्युदासादिति भावः । इदन्तत्वात् 'यू स्त्र्याख्यावि'ति नदीत्वे अप्राप्ते ङित्सु तद्विकल्पं दर्शयितुमाह—ङिति ह्रस्वश्च । अत्र चकाराद्वाक्यद्वयमिदम् । तथा हि—'यू स्त्र्याख्यौ नदी' इत्यनुवर्तते । ईश्च ऊश्च यू 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधाभावश्छान्दसः । स्त्रियमेवाचक्षाते स्त्र्याख्यौ नित्यस्त्रीलिङ्गाविति यावत् । 'नेयङुवङ्स्थानावस्त्री' इति सूत्रं नञ्वर्जमनुवर्तते । इयङुवङोः स्थानं स्थितिर्ययोस्ताविति विग्रहः । इयङुवङ्प्राप्तियोग्याावित्यर्थः । 'वामि' इत्यतो वेत्यनुवर्तते । ततश्च इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ नदीसंज्ञौ वा स्तो ङिति परे इति वाक्यमेकं सम्पद्यते । पुनरपि यू इत्यनुवर्तते । इश्च ऊश्च यू । ह्रस्व इति तत्र प्रत्येकमन्वेति । स्त्र्याख्याविति चानुवर्तते । स्त्रीलिङ्गावित्येतावदेव विवक्षितम् । न तु नित्यस्त्रीलिङ्गाविति, व्याख्यानात् 'वामि' इत्यतो वेति चानुवर्तते । ततश्च स्त्रीलिङ्गौ ह्रस्वौ चेवर्णोवर्णौ नदीसंज्ञौ वा स्तो ङिति परे इति वाक्यान्तरं सम्पद्यते । तदाह—इयङुवङ्स्थानावित्यादिना । द्वितीयवाक्येऽपि स्त्रीलिङ्गे नित्यत्वविशेषणे तु इष्वशन्यरणिप्रभृतीनामुभयलिङ्गानां पटुमृदुप्रभृतीनां त्रिलिङ्गानां च ङिति नदीत्वविकल्पो न स्यादिति बोध्यम् । तत्र ह्रस्वयोरप्राप्ते दीर्घयोस्तु 'नेयङुवङ्स्थानौ' इति निषेधादप्राप्ते

मत्यै—मतये । मत्याः-मतेः । मत्याः-मतेः । नदीत्वपक्षे 'औत्' ( सू २५६ ) इति ङेरौत्त्वे प्राप्ते—(२९७) इदुद्भ्याम् ७।३।११७॥ नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् स्यात् । पक्षे 'अच्च घेः' ( सू २४७ ) । मत्याम्-मतौ । एवं श्रुत्यादयः । (२९८) त्रिचतुरोः स्त्रियां तिसृचतसृ ७।२।९९॥ स्त्रीलिङ्गयोरेतयोरेतावादेशौ स्तो विभक्तौ परतः । (२९९) अचि र ऋतः ७।२।१००॥ तिसृ चतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि । गुणदीर्घोत्त्वानामपवादः । तिस्रः । तिस्रः । तिसृभिः । तिसृभ्यः । आमि 'नुमचिर—' ( वा ४३७४ ) इति नुट् । (३००) न तिसृचतसृ ६।४।४॥ तिसृ चतसृ एतयोर्नामि दीर्घो न स्यात् ।

नदीत्वे विभाषेयम् । नदीत्वपक्षे आह—आण्नद्या इति । मति ए इति स्थिते आटि वृद्धौ यणि च सिद्धं रूपमाह—मत्यै इति । मतये इति । नदीत्वाभावपक्षे 'शेषो घ्यसखि' इति घित्वात् घेर्ङितीति गुणे अयादेशे हरिशब्दवद्रूपम् । नदीत्वपक्षे ङसिङसोराटि वृद्धिराकारः, यण् मत्याः । नदीत्वाभावे मतेः । आमि नदीत्वाभावेऽपि ह्रस्वान्तत्वान्नुटि दीर्घः मतीनाम् । ङौ विशेषमाह—नदीत्वपक्षे इति । नदीत्वपक्षे घित्वाभावात् 'अच्च घेः' इति अत्त्वसन्नियोगशिष्टमौत्त्वं न भवति । किन्तु ङेरामिति प्राप्तं, तद् बाधित्वा औदिति केवलमौत्त्वे परत्वात् प्राप्ते सतीत्यर्थः । इदुद्भ्याम् । 'ङेराम्' इति सूत्रान्नदीग्रहणं ङेराम् इति चानुवर्तते । तदाह—नदीसंज्ञकाभ्यामित्यादिना । पक्षे इति । नदीत्वाभावपक्षे 'अच्च घेः' इत्यत्त्वसन्नियोगशिष्टमौत्त्वमित्यर्थः । मत्याम् , मताविति । नदीत्वे तदभावे च रूपम् । मत्यामित्यत्र सन्निपातपरिभाषाया अनित्यत्वाद्यण् । एवं श्रुत्यादय इति । आदिना स्मृत्यादिसङ्ग्रहः ।

त्रिचतुरोः । एतयोरेताविति । त्रिचतुरोः तिसृ चतसृ इत्येतावित्यर्थः । विभक्ताविति । 'अष्टन आ विभक्तौ' इत्यतस्तदनुवृत्तेरिति भावः । जश्शसोः तिसृ अस् इति स्थिते । अचि र ऋतः । पूर्वसूत्रात् तिसृचतसृ इत्यनुवर्तते । तच्चेह लुप्तषष्ठीकमाश्रीयते । तदाह—तिसृ इत्यादिना । ननु 'इको यणचि' इत्येव सिद्धमित्यत आह—गुणदीर्घोत्त्वानामपवाद इति । 'ऋतो ङि' इति गुणस्य 'प्रथमयोः' इति पूर्वसवर्णदीर्घस्य 'ऋत उत्' इत्युत्त्वस्य च रत्वमपवाद इत्यर्थः । । तिस्र इति । जश्शसोः रूपम् । तत्र जसि 'ऋतो ङि' इति गुणस्य रत्वमपवादः । शसि तु 'प्रथमयोः' इति पूर्वसवर्णदीर्घस्य रत्वमपवादः । आमीति । तिसृ आम् इति स्थिते नुटं बाधित्वा 'अचि र ऋतः' इति रत्वे तिस्राmिति प्राप्ते 'नुमचिरतृज्वद्भावगुणेभ्यो नुट् पूर्वविप्रतिषेधेन' इति रत्वं बाधित्वा नुडित्यर्थः । तिसृ नामिति स्थिते 'नामि' इति दीर्घे प्राप्ते—न तिसृचतसृ । तिसृचतसृ इति लुप्तषष्ठीकं पदम् । 'ढ्रलोपे' इत्यतो दीर्घ इत्यनुवर्तते । 'नामि' इति सूत्रं चानु-

तिसृणाम्। तिसृषु। 'स्त्रियाम्' इति त्रिचतुरोर्विशेषणान्नेह। प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः। मतिशब्दवत्। आमि तु 'प्रियत्रयाणाम्' इति विशेषः। 'प्रियास्तिस्रो यस्य सः' इति विग्रहे तु प्रियतिसा प्रियतिस्रौ प्रियतिस्रः। प्रियतिस्र-मित्यादि। प्रियास्तिस्रो यस्य तत्कुलं प्रियत्रि। स्वमोर्लुका लुप्तत्वेन प्रत्ययलक्षणा-भावान्न तिस्रादेशः। 'न लुमता—' (सू २६२) इति निषेधस्यानित्यत्वात्पक्षे प्रियतिसृ। 'रत्वात्पूर्वविप्रतिषेधेन नुम्' (वा ५०३६)। प्रियतिसृणी प्रियतिसृणि

---

वर्तते। तदाह—तिस्र इत्यादिना। तिसृणामिति। 'ऋवर्णान्नस्य' इति णत्वम्। ननु 'अचि र' इति रत्वम् 'ऋत उत्' इति उत्त्वस्य कथमपवादः स्यात् उत्त्वस्य ङसिङसोरेव प्राप्तेः त्रिचतुरशब्दयोश्च नित्यं बहुवचनान्तत्वेन ङसिङसोरभावादिति चेन्न। प्रिय-तिस्रः, इत्यादिबहुव्रीहौ तत्सत्त्वात्। तच्चानुपदमेव वक्ष्यते। ननु प्रियाः त्रयः त्रीणि वा यस्याः सा प्रियत्रिः, इति बहुव्रीहावपि तिस्रादेशः कुतो न स्यादित्यत आह—स्त्रियामित्यादि। प्रियत्रिशब्दो हि स्त्रीलिङ्गः, न तु त्रिशब्दः। स्त्रियामिति त्रिचतु-रोर्विशेषणम्, न तु तदन्तयोः, प्रमाणाभावात्। न चाङ्गत्वात्तदन्तलाभ इति वाच्यम् एवमपि त्रिचतुरोरेव प्रत्यक्षश्रुतत्वेन स्त्रियामित्यस्य तद्विशेषणतया एवोचितत्वा-दिति भावः। 'ङिति ह्रस्वश्च' इति नदीत्वविकल्पं मत्वाह—मतिशब्दवदिति। आमि त्विति। षष्ठीबहुवचने 'त्रेस्त्रयः' इति त्रयादेशस्य आङ्गत्वेन तदन्तेऽपि प्रवृत्तेरिति भावः। एवं च स्त्रियामित्यस्य त्रिचतुरन्ताङ्गविशेषणत्वे प्रियत्रिशब्दे पुंनपुंसक-लिङ्गत्रिशब्दगर्भबहुव्रीहौ अतिव्याप्तिः स्यादिति त्रिचतुरोरेव स्त्रियामिति विशेषण-मिति स्थितम्।

अथ स्त्रीलिङ्गत्रिशब्दगर्भबहुव्रीहौ अव्याप्तिनिरासार्थमपि स्त्रियामिति त्रिचतु-रोरेव विशेषणम्, न तु तदन्तयोरिति मत्वाह—प्रियास्तिस्र इत्यादि। प्रियतिसेति। समासे सति अन्तर्वर्तिविभक्तेर्लुका लुप्तत्वात् तिस्रादेशनिवृत्तौ प्रियत्रिशब्दात् सुः। अत्र प्रियत्रिशब्दस्य पुंलिङ्गत्वेऽपि त्रिशब्दस्य स्त्रीलिङ्गत्वात्तिस्रादेशः। 'ऋदुशनस्' इत्यनङ्। 'सर्वनामस्थाने च' इति दीर्घः। नलोपः। स्त्रियामित्यस्य त्रिचतुरन्ता-ङ्गविशेषणत्वे स्वत्राव्याप्तिः स्यादिति भावः। ननु त्रिचतुरन्ताङ्गविशेषणत्वेऽपि नात्राव्याप्तिः प्रियास्तिस्रो यस्येति विग्रहवाक्ये प्रवृत्तस्य तिस्रादेशस्य समासेऽ प्यप्रवृत्तिसम्भवात् इति चेन्नैवम्। लौकिकवाक्यं हि परिनिष्ठितत्वात् समासस्य न प्रकृतिः किन्तु अलौकिकमेव प्रक्रियावाक्यम्। ततश्च प्रिया अस् त्रि अस् इत्यलौकिक-प्रक्रियावाक्ये समासप्रवृत्तौ 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति परिभा-षया तिस्रादेशं बाधित्वा विभक्तिलुकि प्रियत्रिशब्दात् समासात् सुबुत्पत्तौ त्रिचतुरो-

तृतीयादिषु वक्ष्यमाणपुंवद्भावविकल्पात्पर्यायेण नुमूरभावौ । प्रियतिसृणा । प्रियतिस्रा इत्यादि । द्वेरत्वे सत्याप् । द्वे । द्वे । द्वाभ्याम् । द्वाभ्याम् । द्वा-

रित्यस्याङ्गत्वात् तदन्तविधावपि 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषया त्रिशब्दस्य तिस्रादेशः । स च स्त्रियामित्यस्य त्रिचतुरन्ताङ्गविशेषणत्वे सति न स्यात् प्रियत्रिशब्दस्याङ्गस्य पुँल्लिङ्गत्वात् । सति चात्र तिस्रादेशे 'नद्यृतश्च' इति कप् तु न । स हि समासान्तत्वात् समासवदलौकिकविग्रहवाक्ये प्रवृत्तिमर्हति । तदानीं च उत्तरपदस्य त्रिशब्दस्य ऋदन्तत्वाभावान्न कप् । अन्तर्वर्तिविभक्तेर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावाच्च जसूनिमित्तकतिस्रादेशस्याभावात् । न चाकृते समासान्ते कपि प्रियत्रिशब्दात् सुबुत्पत्तौ तिस्रादेशे सति कप् शङ्क्यः । अकृते कपि समासान्ते समासत्वस्यैवानिष्पत्त्या ततः सुबुत्पत्तेरसम्भवादित्यास्तां तावत् । प्रियतिस्राविति । गुणं बाधित्वा रत्वम् । प्रियतिस्र इति । जसि पूर्वसवर्णदीर्घं बाधित्वा रत्वम् । प्रियतिस्रमिति । अमि पूर्वरूपं गुणं च बाधित्वा रत्वम् । 'गुणदीर्घोत्वानामपवादः' इति पूर्वरूपस्याप्युपलक्षणम् । इत्यादीति । प्रियतिस्रौ । प्रियतिस्रः । प्रियतिस्रा प्रियतिस्रे । ङसिङसोः प्रियतिस्रः इत्येव । 'ऋत उत्' इत्युत्वं बाधित्वा रत्वम् । प्रियतिस्रोः । आमि त्रयादेशं बाधित्वा परत्वात्तिस्रादेशे सति रत्वं बाधित्वा 'नुमचिर' इति नुट् । प्रियतिसृणाम् । प्रियतिस्रि, 'ऋतो ङि' इति गुणापवादो रत्वम् । प्रियतिस्रोः । ननु प्रियास्तिस्रो यस्य तत् कुलं प्रियत्रि इति कथम् ? त्रिशब्दस्य स्त्रीलिङ्गत्वेन तिसृभावप्राप्तेः इत्यत आह—स्वमोर्लुकेति । 'स्वमोर्नपुंसकात्' इति स्वमोर्लुका लुप्तत्वेन 'न लुमता' इति प्रत्ययलक्षणाभावात् विभक्तिपरकत्वाभावान्न तिसृभाव इत्यर्थः । अनित्यत्वादिति । 'न लुमता' इत्यस्यानित्यत्वम् 'इकोऽचि विभक्तौ' इत्यज्ग्रहणात् इति नपुंसकाधिकारे वक्ष्यते । अजादिविभक्तौ 'नपुंसकस्य झलचः' इति नुमपेक्षया परत्वात् 'अचि र ऋतः' इति रत्वमाशङ्क्याह—रत्वादिति । ल्यब्लोपे पञ्चमी । पूर्वविप्रतिषेधेन रत्वं बाधित्वा नुमित्यर्थः । प्रियतिसृणी इति । रत्वं बाधित्वा नुमि णत्वम् । प्रियतिसृणी । इति । जश्शसोश्शिः । रत्वं बाधित्वा नुम् । शेः सर्वनामस्थानत्वान्नान्तलक्षणदीर्घः, णत्वम् । 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे प्रियतिसृणी, प्रियतिसॄणि इति भाष्योदाहरणात् पूर्वविप्रतिषेधमाश्रित्य नुमा रत्वबाध इति बोध्यम् । प्रियतिसृणेति । टायां पुंवत्त्वाभावपक्षे नुमि रूपम् । प्रियतिस्रेति । पुंवत्त्वे नुमभावात् रत्वम् । इत्यादीति । आदिना प्रियतिस्रे, प्रियतिसृणे इत्यादि बोध्यम् । द्वेरत्वे इति । द्विशब्दाद्विभक्तौ सत्यां त्यदाद्यत्वे 'अजाद्यतः' इति टाबित्यर्थः । द्वे इत्यादि । टापि सति सवर्णदीर्घे द्वाशब्दस्य रमावद्रूपाणीति भावः । इति इदन्ताः ॥

भ्याम् । द्वयोः । द्वयोः । ॥ इति इदन्ताः ॥ गौरी गौर्यौ गौर्यः । नदीकार्यम्, हे गौरि । गौर्यै इत्यादि । एवं वाणीनद्यादयः । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणादनङि णिद्वद्भावे च प्राप्ते 'विभक्तौ लिङ्गविशिष्टाग्रहणम्' (पं ७४)। सखी सख्यौ सख्यः इत्यादि गौरीवत्। अङ्यन्तत्वान्न सुलोपः। लक्ष्मीः। शेषं गौरीवत्। एवं तरीतन्त्र्यादयः। स्त्री। हे स्त्रि। (३०१) स्त्रियाः ६।४।७९॥ स्त्रीशब्दस्येयङ् स्यादजादौ प्रत्यये परे। स्त्रियौ स्त्रियः। (३०२) वाऽम्शसोः

---

अथ ईदन्ता निरूप्यन्ते। गौरीति। गौरीशब्दात् गौरादिलक्षणङीषि 'यस्येति च' इत्यकारलोपे गौरीशब्दः। तस्मात् सुः, हल्ङ्यादिलोप इति भावः। गौर्याविति। 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधे यणिति भावः। गौर्य इति। 'दीर्घाज्जसि च' 'इति पूर्वसवर्णदीर्घनिषेधे यणिति भावः। नदीकार्यमिति। 'अम्बार्थनद्योर्ह्रस्वः' 'आण्नद्याः' ह्रस्वनद्यापो नुट्' 'ङेराम्नद्याम्नीभ्यः' इति विहितमित्यर्थः। 'यू स्त्र्याख्यौ' इति नदीत्वम्। बहुश्रेयसीवत्। एवं वाणीनद्यादय इति। 'वण् शब्दे' वण्यते शब्द्यते इति वाणी। 'इञ् वपादिभ्यः' इति इञ्। 'कृदिकारादक्तिनः' इति ङीष्। 'नदट्' इति पचादौ पठितात् टित्वात् ङीप्। आदिना कर्त्री दण्डिनी इत्यादिसंग्रहः। 'सख्यशिश्वीति भाषायाम्' इति सखिशब्दात् ङीपि 'यस्येति च' इति इकारलोपे सखीशब्दः। तस्य 'अनङ् सौ' इत्यनङ्म्, 'सख्युरसम्बुद्धौ' इति णिद्वत्त्वं चाशङ्कते—प्रातिपदिकेति। 'विभक्तौ लिङ्गविशिष्टाग्रहणम्' 'युवोरनाकौ' इत्यत्र 'ङ्याप्प्रातिपदिकात्' इत्यत्र च भाष्ये इयं परिभाषा पठिता। विभक्तिनिमित्तके कार्ये कर्तव्ये प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य ग्रहणं नास्तीत्यर्थः। तथा च अनङ्, णिद्वत्त्वं च न भवतीति भावः। सखीति। ङ्यन्तत्वात् सुलोपः। सख्य इत्यादीति। गौरीवदेव रूपाणीत्यर्थः। 'लक्षेर्मुट् च' इति लक्षधातोरीप्रत्यये मुडागमे लक्ष्मीशब्दः। तस्य विशेषमाह—अङ्यन्तत्वादिति। 'कृदिकारादक्तिनः' इति ङीषि तु सुलोपो भवत्येव। शेषं गौरीवदिति। अम्बार्थेत्यादिकार्यमित्यर्थः। एवं तरीतन्त्र्यादय इति। 'अवितॄस्तृतन्त्रिभ्यः ईः' इति ईप्रत्यये तरीः स्तरीः तन्त्रीः इत्यादि। अत्राप्यङ्यन्तत्वान्न सुलोपः। 'कृदिकारात्' इति ङीषि तु सुलोपः। शेषं गौरीवत्। स्त्री इति। स्त्यै शब्दसङ्घातयोः। स्त्यायतः सङ्गते भवतः अस्यां शुक्रशोणिते इति स्त्री। स्त्यायतेः ड्रट्। डटावितौ। डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। लोपो व्योरिति यलोपः। टित्वात् ङीप्। हल्ङ्यादिलोप इति भावः। हे स्त्रि इति। अम्बार्थेति ह्रस्वः। स्त्री औ इति स्थिते, अधात्विकारत्वात् 'अचि श्नुधातु' इति इयङप्राप्ते। स्त्रियाः। अचि श्नुधात्वित्यतः अचीति इयङिति चानुवर्तते। तदाह—स्त्रीशब्दस्येत्यादिना। स्त्रियौ स्त्रिय इति। औजसोः रूपम्। अमि शसि च स्त्रियम् स्त्रियः

६।४।८०॥ अमि शसि च स्त्रिया इयङ् वा स्यात्। स्त्रियम्-स्त्रीम्। स्त्रियौ। स्त्रियः-स्त्रीः। स्त्रिया। स्त्रियै। स्त्रियाः। स्त्रियाः। स्त्रियोः। परत्वान्नुट्। स्त्रीणाम्। स्त्रियाम् स्त्रियोः स्त्रीषु। स्त्रियमतिक्रान्तोऽतिस्त्रिः। अतिस्त्रियौ।

गुणनाभावौत्त्वनुड्भिः परत्वात्पुंसि बाध्यते।
क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम्॥

'जसि च' (सू २४१)। अतिस्त्रयः। हे अतिस्त्रे हे अतिस्त्रियौ हे अतिस्त्रयः। 'वाऽम्शसोः'। अतिस्त्रीयम् अतिस्त्रिम् अतिस्त्रियौ अतिस्त्रियः-अतिस्त्रीन्। अति-

---

इति नित्यामयङि प्राप्ते। वाऽम्शसोः। वा अम्शसोः इति च्छेदः। स्त्रिया इति इयङिति चानुवर्तते। तदाह—अमि शसि चेत्यादिना। स्त्रियमिति। इयङि रूपम्। स्त्रीमिति। इयङभावे अमि पूर्वः। स्त्रियाविति। औटि रूपम्। स्त्रियः-स्त्रीः इति। शसि 'वाम्शसोः' इति इयङि तदभावे च रूपम्। स्त्रियेति। इयङ्। स्त्रियै इति। आण्नद्या इत्याट्, वृद्धिः, इयङ्। स्त्रियाः इति। ङसिङसोराट्, वृद्धिः, इयङ्। स्त्रियोरिति। ओसि इयङ्। परत्वान्नुडिति। आमि 'स्त्रियाः' इति इयङं बाधित्वा परत्वान्नुट्। स्त्रीणामिति। कृते नुटि अजादिविभक्त्यभावान्नेयङ्। स्त्रियामिति। ङेराम्। इयङ्।

अथ प्रसङ्गात् पुंसि नपुंसके च स्त्रीशब्दस्य विशेषं दर्शयति—स्त्रियमतिक्रान्तोऽतिस्त्रिरिति। 'अत्यादयः क्रान्ताद्यर्थे' इति समासः। गोस्त्रियोरिति ह्रस्वत्वम्। दीर्घङ्यन्तत्वाभावाद् ईकाररूपङ्यन्तत्वाभावाद्वा हल्ङ्यादिलोपो न भवति। अतिस्त्रियाविति। 'स्त्रियाः' इत्यस्याङ्गत्वात्तदन्तेऽपि एकदेशविकृतन्यायेन प्रवृत्तेरियङिति भावः। अथ जस्, टा, ङे, ङसि, ङस्, आम्, ङि इत्येतेषु अतिस्त्रीशब्दस्य इयङ् नेत्येतत् श्लोकेन सङ्गृह्णाति—गुणनाभावेत्यादिना। पुंसि गुणनाभावौत्त्वनुड्भिः, क्लीबे नुमा च परत्वात् स्त्रीशब्दस्य इयङ् बाध्यते, इत्यवधार्यतामित्यन्वयः। जसि चेति घेर्ङितीति च गुणः, 'आङो नाऽस्त्रियाम्' इति नात्वम्, 'अच्च घेः' इत्यौत्वम्, 'ह्रस्वनद्यापः' इति नुट् 'इकोऽचि विभक्तौ' इति नुम्, एतेषामियङपेक्षया परत्वादित्यर्थः। 'जसि च' इत्यनन्तरम् इति गुण इति शेषः। अतिस्त्रयः इति। इयङं बाधित्वा गुणे अयादेशे रूपम्। हे अतिस्त्रे इति। 'ह्रस्वस्य गुणः' इति गुणे 'एङ्ह्रस्वात्' इति सम्बुद्धिलोपः। वाम्शसोः इत्यनन्तरं इयङ्विकल्प इति शेषः। अतिस्त्रियमिति। अमि इयङ्पक्षे रूपम्। अतिस्त्रिमिति। इयङभावपक्षे 'अमि पूर्वः'। अतिस्त्रिय इति। 'वाम्शसोः' इति इयङ्। अतिस्त्रीनिति। इयङभावे पूर्वसवर्णदीर्घे 'तस्माच्छसः' इति नत्वम्। टा अतिस्त्रिणा। इयङं बाधित्वा परत्वात् 'आङो नाऽस्त्रियाम्' इति नात्वम्। भ्यामादिष्वविकृतम्। ङे अतिस्त्रये। इयङं बाधित्वा परत्वात् 'घेर्ङिति' इति गुणे अया-

स्त्रिणा । 'घेर्ङिति' ( सू २४५ ) अतिस्त्रये । अतिस्त्रेः । अतिस्त्रेः अतिस्त्रियोः अतिस्त्रीणाम् । 'अच्च घेः' ( सू २४७ ) अतिस्त्रौ । अतिस्त्रियोः ।

ओस्यौकारे च नित्यं स्यादम्शसोस्तु विभाषया ।
इयादेशोऽचि नान्यत्र स्त्रियाः पुंस्युपसर्जने ॥

क्लीबे तु नुम् । अतिस्त्रि अतिस्त्रिणी अतिस्त्रीणि । अतिस्त्रिणा । अतिस्त्रिणे । ङेप्रभृतावजादौ वक्ष्यमाणपुंवद्भावातपक्षे प्राग्वद्रूपम् । अतिस्त्रये-अतिस्त्रिणे । अतिस्त्रेः-अतिस्त्रिणः । अतिस्त्रेः-अतिस्त्रिणः । अतिस्त्रियोः-अतिस्त्रिणोः इत्यादि ।

---

देशः । ङसिङसोः अतिस्त्रेः । परत्वात् 'घेर्ङिति' इति गुणे 'ङसिङसोश्च' इति पूर्वरूपम् । अतिस्त्रियोः इयङ् । आमि इयङं बाधित्वा परत्वान्नुटि नामीति दीर्घे णत्वम्—अतिस्त्रीणाम् । इयङं बाधित्वा परत्वात् 'अच्च घेः' अतिस्त्रौ अतिस्त्रयोः अतिस्त्रिषु । अथ पुंसि पूर्वश्लोकसिद्धमेवार्थं बालबोधाय लघुतरोपायेन संगृह्णाति । ओस्यौकारे चेदित्यादिना । उपसर्जनत्वदशायां पुंसि विद्यमानस्य स्त्रीशब्दस्य अचि यः इत्यादेशः 'स्त्रियाः' इति सूत्रविहितः सः ओसि षष्ठीसप्तमीद्विवचने, औकारे च प्रथमाद्वितीयाद्विवचने च नित्यं स्यात् । अम्शसोस्तु विभाषया विकल्पेन स्यात् । उक्तचतुर्भ्योऽन्यत्र तु अचि सर्वत्र इयादेशो न स्यादिति योजना ।

क्लीबे तु नुमिति । इयङं बाधते इति शेषः । अतिस्त्रि इति । स्त्रियमतिक्रान्तं कुलम् अतिस्त्रि । 'स्वमोर्नपुंसकात्' इति सुलुक् । अतिस्त्रिणी इति । अतिस्त्रि औ इति स्थिते 'नपुंसकाच्च' इत्यौङः शीभावः । इयङं बाधित्वा परत्वात् 'इकोऽचि विभक्तौ' इति नुम् । असर्वनामस्थानत्वान्न दीर्घः । णत्वम् । अतिस्त्रीणीति । जश्शसोः शिः । स्त्रिया इति इयङं जसि च इति गुणं च बाधित्वा नुम् । 'शि सर्वनामस्थानम्' इति सर्वनामस्थानत्वात् दीर्घः । णत्वम् । टा अतिस्त्रिया । इयङं नुमं च बाधित्वा नाभावः । ङेप्रभृतावजादाविति । ङे, ङसि, ङस् , आम् ङि ओस् इत्येतेषु 'तृतीयादिषु भाषित' इति पुंवद्भावस्य वक्ष्यमाणत्वात् पुंवद्भावपक्षे पुँल्लिङ्गातिस्त्रिशब्दवद्रूपम् । पुंवत्त्वाभावपक्षे नुमि वारिवद्रूपमित्यर्थः । टायां तु पुंवत्त्वे तदभावे च नात्वे रूपे विशेषाभावात् ङेप्रभृताविस्युक्तम् । अतिस्त्रये इति । पुंवत्त्वे 'घेर्ङिति' इति गुणे अयादेशः । अतिस्त्रिणे इति । पुंवत्त्वाभावे नुमि रूपम् । इहोभयत्रापि गुणेनानुमा च इयङ् बाध्यते । अतिस्त्रेरिति । ङसिङसोः पुंवत्त्वपक्षे 'घेर्ङिति' इति गुणे 'ङसिङसोश्च' इति पूर्वरूपम् । अतिस्त्रिण इति । ङसिङसोः पुंवत्त्वाभावपक्षे नुमि रूपम् । इहाप्युभयत्रगुणनुम्भ्यामियङ् बाध्यते । अतिस्त्रियोः—अतिस्त्रिणोरिति । पुंवत्त्वाभावे नुम् । पुंवत्त्वे इयङ् । इत्यादीति । आमि पुंवत्त्वे तदभावे च इयङं बाधित्वा नुडेव, न तु नुम् , 'नुम-

स्त्रियां तु प्रायेण पुंवत् । शसि अतिस्त्रीः । अतिस्त्रिया। 'ङिति ह्रस्वश्च' ( सू २९६ ) इति ह्रस्वान्तत्वप्रयुक्तो विकल्पः । 'अस्त्री' इति तु इयङुवङ्स्थानावित्यस्यैव पर्युदासः, तत्संबद्धस्यैवानुवृत्तेः दीर्घस्यायं निषेधः, न तु ह्रस्वस्य । अतिस्त्रियै-अतिस्त्रये । अतिस्त्रियाः-अतिस्त्रेः । अतिस्त्रियाः-अतिस्त्रेः । अतिस्त्रीणाम् । अतिस्त्रियाम्-अतिस्त्रौ । श्रीः श्रियौ श्रियः । ( ३०२ ) नेयङुवङ्स्थानावस्त्री १।४।४॥

चिर' इति वचनात् । 'नामि' इति दीर्घः । अतिस्त्रीणाम् । अतिस्त्रौ-अतिस्त्रिणि । अतिस्त्रियोः—अतिस्त्रिणोः ।

तदेवमुपसर्जनस्त्रीशब्दस्य पुंनपुंसकविषये रूपाणि प्रदर्श्य प्रकृतमनुसरति—स्त्रियां त्विति । स्त्रियमतिक्रान्तेति विग्रहे 'अत्यादयः' इति समासे 'गोस्त्रियोः' इति ह्रस्वत्वे सति अतिस्त्रिशब्दः । तस्य प्रायेण उदाहृतपुंलिङ्गातिस्त्रिशब्दवद्रूपाणीत्यर्थः । शसि अतिस्त्रीरिति । 'वाम्शसोः' इति इयङभावे पूर्वसवर्णदीर्घे सत्यपि स्त्रीलिङ्गत्वात् 'तस्माच्छसः' इति नत्वं नेति भावः । अतिस्त्रियेति । स्त्रीलिङ्गत्वान्नात्वाभावे इयङ् । ह्रस्वान्तत्वेति । 'ङिति ह्रस्वश्च' इत्यत्र इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ नदीसंज्ञौ वा स्तः, इति प्रथमं वाक्यम् । ह्रस्वाविवर्णोवर्णौ स्त्रियां नदीसंज्ञौ वा स्तः, इति द्वितीयं वाक्यम् । तत्र द्वितीयवाक्याद् अतिस्त्रिशब्दस्य ङित्सु नदीत्वविकल्प इत्यर्थः । ननु 'नेयङुवङ्स्थानावस्त्री' इत्यतः अस्त्रीत्यस्यानुवृत्तेः कथमिह नदीत्वविकल्प इत्यत आह—अस्त्री इति त्विति । इयङुवङ्स्थानावित्यादिप्रथमवाक्यविहितनदीत्वस्यैवास्त्रीति पर्युदासः, न तु ह्रस्वावित्यादिद्वितीयवाक्यविहितनदीत्वस्यापीत्यर्थः । कुत इत्यत आह—तत्संबद्धस्यैवानुवृत्तेरिति । नेयङुवङ्स्थानावित्यतः अस्त्रीत्यस्यावृत्तिर्वक्तव्या । ततश्च इयङुवङ्स्थानाविति यत्रान्वेति, तत्रैव तत्सम्बद्धस्य अस्त्रीत्यस्यानुवृत्तिरुचिता । एवं च ह्रस्वादिवाक्ये इयङुवङ्स्थानावित्यस्य अनुवृत्यभावाद् अस्त्रीत्यस्यापि तत्र नानुवृत्तिरिति भावः । अतिस्त्रियै इति । नदीत्वपक्षे आट् वृद्धिः । अतिस्त्रये इति । नदीत्वाभावे घित्वात् 'घेर्ङिति' इति गुणे अयादेशः । अतिस्त्रियाः—अतिस्त्रेरिति । नदीत्वे आट् । तदभावे गुणः । 'ङसिङसोश्च' इति पूर्वरूपम् । अतिस्त्रियामिति । नदीत्वपक्षे ङेराम् , आट् । अतिस्त्राविति । नदीत्वाभावपक्षे 'अच्च घेः' ।

श्रीरिति । श्रयन्त्येतामिति श्रीः। 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च' इति क्विप् , प्रकृतेर्दीर्घश्च । श्रीशब्दात् सुः । अङ्यन्तत्वान्न सुलोपः । श्रियौ श्रिय इति । 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधे 'इको यणचि' इति यणि प्राप्ते धात्ववयवेवर्णान्तत्वात् 'अचि श्नुधातु' इतीयङ् । एकाच्त्वात् संयोगपूर्वकत्वाच्च यण् न । 'यू स्त्र्याख्यौ' इति नदीत्वात् 'अम्बार्थ' इति ह्रस्वे प्राप्ते । नेयङुवङ् । 'यू स्त्र्या-

इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तः, न तु स्त्री। हे श्रीः। श्रियम्। श्रियौ। श्रियः। श्रियै-श्रिये। श्रियाः-श्रियः। (३०४) वाऽऽमि १।४।५॥ इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तः, न तु स्त्री। श्रीणाम्-श्रियाम्। श्रियाम्-श्रियि। प्रधीशब्दस्य तु वृत्तिकारादीनां मते लक्ष्मीवद्रूपम्, 'पदा-

ख्यौ नदी' इत्यतो यू नदीत्यनुवर्तते। स्थानशब्दो भावे ल्युडन्तः। इयङुवङोः स्थानं स्थितिर्ययोरिति बहुव्रीहिः। इयङुवङ्योग्याविति यावत्। तदाह—इयङुवङोरित्यादिना। हे श्रीरिति। अजादावियङ्योग्यत्वात् नदीत्वनिषेधात् 'अम्बार्थनद्योः' इति ह्रस्वो नेति भावः। श्रियमिति। अमि पूर्वरूपं बाधित्वा इयङ्। श्रियौ श्रिय इति। औट्शसोः पूर्ववत्। टा श्रिया। श्रियै इति। 'ङिति ह्रस्वश्च'ेति ङिति नदीत्वपक्षे आट्, वृद्धिः। श्रिये इति। नदीत्वभावे इयङ्। श्रियाः इति। ङसिङसोः नदीत्वे आट्, वृद्धिः। श्रियः इति। नदीत्वाभावपक्षे इयङेव। ङित्वाभावात् आमि 'ङिति ह्रस्वश्च' इति अप्राप्ते। वामि। यू स्त्र्याख्यौ नदीत्यनुवर्तते। 'नेयङुवङ्स्थानावस्त्री' इति नञ्वर्जमनुवर्तते। वा आमीति छेदः। अमि नदीकार्याभावात्। तदाह—इयङुवङ्स्थानावित्यादिना। श्रीणामिति। नदीत्वपक्षे 'ह्रस्वनद्यापः' इति नुट्। श्रियामिति। नदीत्वाभावे इयङ्। श्रियाम्-श्रियीति। नदीत्वे ङेराम्, आट्, इयङ्। नुट् तु न, आटा नुट् बाध्यते इत्युक्तत्वात्। नदीत्वाभावे तु इयङेव। श्रियोः। श्रीषु।

प्रधीशब्दस्य त्विति। प्रध्यायतीत्यर्थे 'ध्यायतेः सम्प्रसारणं च' इति क्विपि यकारस्य सम्प्रसारणे इकारे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'हलः' इति दीर्घे निष्पन्नस्य प्रधीशब्दस्य वृत्तिकारहरदत्तादिमते लक्ष्मीवद्रूपाणि। तत्र 'एरनेकाचः' इति यणा इयङो बाधितत्वेन इयङ्स्थानत्वाभावात् 'नेयङुवङ्स्थानौ' इति नदीत्वनिषेधाभावात् 'यू स्त्र्याख्यौ' इति नित्यनदीत्वे सति 'अम्बार्थ' इत्यादिनदीकार्यप्रवृत्तेरिति भावः। तत्र अमि शसि च पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा यणेवेति विशेषः। ननु प्रध्यायतेः क्विपि निष्पन्नस्य प्रधीशब्दस्य प्रकर्षेण ध्यातृत्वप्रवृत्तिनिमित्तकस्य लिङ्गत्रयसाधारणत्वात् नित्यस्त्रीलिङ्गत्वाभावात् नदीत्वाभावात् कथं नदीकार्याणीत्यत आह—पदान्तरं विनापीति। पदान्तरसमभिव्याहाराभावेऽपि यः शब्दः स्त्रीरूपार्थबोधकः सः नित्यस्त्रीलिङ्गः इति विवक्षितः। अत एव ब्राह्मण्यां आधीशब्दस्य आध्यै इति रूपमास्थितं भाष्ये। स्त्रियामेव यो वर्तते स एव नित्यस्त्रीलिङ्ग इत्यभ्युपगमे तु तदसङ्गतिः स्पष्टैव। आधीशब्दस्य क्रियाशब्दतया त्रिलिङ्गत्वात्। अतः पदान्तरं विनापि स्त्रियां वर्तमानत्वमेव नित्यस्त्रीत्वम्। इदं तु प्रधीशब्दस्य सम्भवत्येव, प्रकर्षेण ध्यातृत्वं निमित्तीकृत्य स्त्रियां वृत्तिसम्भवात्। परन्तु प्रधीरित्युक्ते पुंसः स्त्रियाश्च प्रतीतिप्रसक्तौ अन्यतरव्यवच्छेदाय ब्राह्मणः ब्राह्मणी इत्यादिपदान्तरसम-

न्तरं विनापि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वम्' इति स्वीकारात्। 'लिङ्गान्तरानभिधायकत्वं तत्' इति कैयटमते तु पुंवद्रूपम्। 'प्रकृष्टा धीः' इति विग्रहे तु लक्ष्मीवत्। अमि शसि च प्रध्यम्, प्रध्यः इति विशेषः। सुष्ठु धीर्यस्याः, सुष्ठु ध्यायति वेति विग्रहे तु वृत्तिकारमते सुधीः श्रीवत्। मतान्तरे तु पुंवत्। सुष्ठु धीः इति विग्रहे तु श्रीवदेव। ग्रामणीः पुंवत्। ग्रामनयनस्योत्सर्गतः पुंधर्मतया पदान्तरं

---

भिव्याहारापेक्षा। नैतावतास्य पदान्तरसमभिव्याहाराभावे स्त्रियां वृत्तिरपैति। अतः प्रधीशब्दस्य नित्यस्त्रीलिङ्गत्वात् नदीकार्यं निर्बाधमिति भावः। लिङ्गान्तरेति। 'स्त्रीलिङ्गान्यलिङ्गानभिधायकत्वमेव नित्यस्त्रीत्वम्' इति कैयटमतम्। 'स्त्रीविषयावेव यौ यू तयोरेव नदीसंज्ञा' इति 'यू स्त्र्याख्यौ' इत्यत्र भाष्यादिति तदाशयः। पुंवद्रूपमिति। उदाहृतप्रधीशब्दस्य त्रिलिङ्गतया नित्यस्त्रीत्वाभावात् पुंसीव स्त्रियामपि अदनीत्वादिति भावः। प्रकृष्टेति। प्रकृष्टा धीरिति विग्रहे प्रादिसमासे प्रधीशब्दस्य मतद्वयरीत्यापि नित्यस्त्रीलिङ्गत्वात् लक्ष्मीवद्रूपमित्यर्थः। अमि शसि चेति। प्रध्यायतीति, प्रकृष्टा धीरिति च विग्रहे प्रधीशब्दात् अमि शसि च पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा 'एरनेकाचः' इति यण्; इत्येतावान् विशेषो लक्ष्मीशब्दापेक्षयेत्यर्थः। कैयटमते ब्राह्मण्याम् 'आध्यै' इति भाष्यप्रयोगस्तु बहुव्रीह्यभिप्रायेण नेयः। अत एव भाष्यात् 'नद्यृतश्च' इति कप् नेत्याहुः।

सुष्ठु धीर्यस्या इति। सुष्ठु धीर्यस्या इति सुष्ठु ध्यायतीति उभयविधविग्रहेऽपि पदान्तरं विना स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति वृत्तिकारादिमते सुधीशब्दस्य नित्यस्त्रीलिङ्गत्वेन 'नेयङुवङ्स्थानावस्त्री' इति नदीत्वनिषेधात् 'ङिति ह्रस्वश्च' इति 'वामि' इति च श्रीशब्दवद्रूपाणि प्रत्येतव्यानि। 'न भूसुधियोः' इति यण्निषेधे इयङ एव प्रवृत्तेरिति भावः। मतान्तरे तु पुंवदिति। लिङ्गान्तरानभिधायकत्वं नित्यस्त्रीत्वमिति कैयटमते तु त्रिलिङ्गतया नदीत्वाभावात् पुंवदेव रूपमित्यर्थः। ननु सुधीशब्दे बहुव्रीहिप्रवृत्तेः प्राक् धीशब्दस्य नित्यस्त्रीलिङ्गत्वात् 'प्रथमलिङ्गग्रहणं च' इति नदीत्वं दुर्वारमिति चेत्, सत्यम्—यस्य वृत्तेः प्राक् नदीत्वं दृष्टं तस्य उपसर्जनत्वेऽपि नदीत्वमतिदिश्यते। इह च वृत्तेः प्राक् धीशब्दस्य केवलस्य एकाच्त्वाद्यणभावे इयङ्योग्यतया 'नेयङुवङ्स्थानौ' इति नदीत्वनिषेधात् वृत्तावपि न तदतिदेश इत्यास्तां तावत्। सुष्ठु धीरिति विग्रहे तु श्रीवदेवेति। मतद्वयेऽपि नित्यस्त्रीलिङ्गत्वादिति भावः। ग्रामणीः पुंवदिति। स्त्रियामिति शेषः। ननु ग्रामं नयति नियमयतीति ग्रामणीशब्दस्य प्रधीशब्दवत् पदान्तरं विनापि स्त्रियां वर्तमानत्वात् नित्यस्त्रीलिङ्गत्वान्नदीकार्यसत्त्वात् पुंवदिति कथमित्यत आह—ग्रामनयनस्येति। ग्रामनयनस्य लोके उत्सर्गतः सामान्यतः पुंधर्मतया (पुरुषकर्तव्यतया) ब्राह्मणीत्यादिपदान्तरसमभिव्या-

विनापि स्त्रियामप्रवृत्तेः। एवं खलपवनादेरपि पुंधर्मत्वमौत्सर्गिकं बोध्यम्॥ इति ईदन्ताः॥ धेनुः मतिवत्। (३०५) स्त्रियां च ७।१।९६॥ स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते। (३०६) ऋन्नेभ्यो ङीप् ४।१।५॥ ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् स्यात्। क्रोष्ट्री क्रोष्ट्र्यौ क्रोष्ट्र्यः। इत्युदन्ताः॥ वधूः गौरीवत्। भ्रूः श्रीवत्। हे सुभ्रूः। कथं तर्हि 'हापितः क्वासि हे सुभ्रु' इति भट्टिः। प्रमाद एवायमिति बहवः। खलपूः पुंवत्। पुनर्भूः। 'दृन्कर—' (वा ४११८)

---

हारं विना स्त्रीलिङ्गाप्रतीतेः वृत्तिकारादिमतेऽपि नित्यस्त्रीलिङ्गत्वाभावान्नदीत्वं नेत्यर्थः। एवमिति। खलपवनकटप्रवणादिक्रियाणामपि पुरुषकर्तव्यत्वम् औत्सर्गिकं सामान्यतः सिद्धम्। अतः खलपूः कटप्रूः इत्यादिशब्दानामपि स्त्रियां वृत्तिकारादिमतेऽपि नित्यस्त्रीत्वं न। अतः पुंवदेव रूपमित्यर्थः। इति ईदन्ताः।

अथ उदन्ता निरूप्यन्ते। धेनुर्मतिवदिति। उकारस्य ओकारो गुणः, अवादेश इत्यादिविशेषस्तु सुगम इति भावः। अथ क्रोष्टुशब्दस्य स्त्रियां विशेषमाह—स्त्रियां च। 'तृज्वत्क्रोष्टुः' इत्यनुवर्तते। रूपातिदेशोऽयमित्युक्तम्। तदाह—स्त्रीवाचीत्यादिना। तथा च स्त्रियामुदन्तः क्रोष्टुशब्दो नास्त्येव। किन्तु क्रोष्टृ इति ऋदन्त एवेति फलितम्। ऋन्नेभ्यो ङीप्। ऋतश्च नश्चेति द्वन्द्वः। स्त्रियामित्यधिकृतम्। 'ङ्याप्प्रातिपदिकात्' इत्यतः प्रातिपदिकग्रहणमनुवृत्तम् ऋन्नकारैर्विशेष्यते। तदन्तविधिः। तदाह—ऋदन्तेभ्य इत्यादिना। ङपावितौ। क्रोष्टृ ई इति स्थिते यणि क्रोष्ट्रीशब्दात् सुबुत्पत्तिः। गौरीवद्रूपाणीत्याह-क्रोष्ट्री इत्यादि। इत्युदन्ताः।

अथ ऊदन्ता निरूप्यन्ते। वधूर्गौरीवदिति। 'वहो धश्च' इत्यूप्रत्ययः हस्य धश्च। धात्ववयवोवर्णाभावात् नोवङ्। ऊकारस्य यण् वकार इत्यादिविशेषस्तु सुगम इति भावः। भ्रूः श्रीवदिति। 'भ्रमे च डूः' इति डूप्रत्ययान्तोऽयम्। 'अचि श्नुधातुभ्रुवाम्' इत्युवङ् इत्यादिविशेषस्तु सुगम इति भावः। सु शोभना भ्रूर्यस्याः सा सुभ्रूः। अस्त्रीप्रत्ययान्तत्वात् 'गोस्त्रियोः' इति ह्रस्वो न भवति। 'नेयङुवङ्स्थानावस्त्री' इति भ्रूशब्दस्य तदन्तस्य च निषेधात् नदीत्वं न। ततश्च 'अम्बार्थ' इत्यादिनदीकार्यं नेत्यभिप्रेत्याह—हे सुभ्रूरिति। कथं तर्हीति। यदि सुभ्रूशब्दे नदीकार्यं न स्यात् तदा 'हापितः क्वासि हे सुभ्रु' इति कथं भट्टिराहेत्यर्थः। रावणेन सीतापहारोत्तरं रामविलापोऽयम्। हे सुभ्रु त्वया अहं हापितोऽस्मि विधिनेत्यर्थः। हापित इत्यस्य त्याजित इत्यर्थः। प्रमाद इति। 'अम्बार्थ' इति ह्रस्वस्य करणादिति भावः। बहव इति। कतिपये सामान्ये नपुंसकत्वमाश्रित्य कथञ्चित् समादधुः। खलपूः पुंवदिति।

इति यणा उवङो बाधनात् 'नेयङुवङ—' ( सू २०२ ) इति निषेधो न। हे पुनर्भु। पुनर्भ्वम्। पुनर्भ्वौ। पुनर्भ्वः। (३०७) **एकाजुत्तरपदे णः ८।४।१२॥** एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं णत्वं स्यात्। आरम्भसामर्थ्यान्नित्यत्वे सिद्धे पुनर्णग्रहणं स्पष्टार्थम्। यणं बाधित्वा परत्वान्नुट्। पुनर्भूणाम्। वर्षाभूः। भेकजातौ नित्यस्त्रीत्वाभावात्-हे वर्षाभूः कैयटमते। मतान्तरे तु हे वर्षाभु। 'भेक्यां पुनर्नवायां

---

खलपवनस्य उत्सर्गतः पुंधर्मतया पदान्तरं विना स्त्रियां वर्तमानत्वाभावेन नित्यस्त्रीत्वाभावात् नदीत्वं नेति भावः।

पुनर्भूरिति। 'पुनर्भूर्दिधिषूरूढा द्विः' इत्यमरः। तस्य 'नेयङुवङ्' इति निषेधमाशङ्क्याह—इन्करेतीति। अम्शसोः पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा 'इन्कर' इति यणिति मत्वाह—पुनर्भ्वम् पुनर्भ्वाविति। पुनर्भ्वैं। पुनर्भ्वाः। नद्यन्तत्वात् नुटि दीर्घे पुनर्भूनामिति स्थिते रेफान्नकारस्य भिन्नपदस्थत्वात् 'अट्कुप्वाङ्' इत्यप्राप्ते। एकाजुत्तरपदे णः। समासस्य चरमावयवे रूढेन उत्तरपदशब्देन समासे इति लभ्यते। एक अच् यस्मिन् तत् एकाच्, तत् उत्तरपदं यस्य सः एकाजुत्तरपदः। तस्मिन् समासे इति बहुव्रीहिगर्भो बहुव्रीहिः। 'रषाभ्यां नो णः' इत्यनुवर्तते। 'पूर्वपदात् संज्ञायाम्' इत्यतः पूर्वपदादित्यनुवर्तते। पूर्वं पदं यस्य तत् पूर्वपदम्। एकत्वमविवक्षितम्। पूर्वपदस्थाभ्यामिति लभ्यते। 'प्रातिपदिकान्तनुम्विभक्तिषु च' इत्यनुवर्तते। विद्यमानस्येति शेषः। तदाह—एकाजुत्तरपदमित्यादिना। नन्विहण कारग्रहणं व्यर्थम्। 'रषाभ्यां नो णः' इत्यत एव तदनुवृत्तिसिद्धेः। न च 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति विकल्पनिवृत्त्यर्थं पुनर्णग्रहणमिति वाच्यम्। आरम्भसामर्थ्यादेव नित्यत्वसिद्धेरित्यत आह—आरम्भेति। यणमिति। 'इन्कर' इति यणमित्यर्थः। पुनर्भूणामिति। रेफस्य 'हशि च' इत्युत्वं तु न, रोरेव तद्विधानात्। ङेराम्, पुनर्भ्वाम्। वर्षाभूशब्दे विशेषमाह—भेकेति। 'बह्वादिभ्यश्च' इति ङीषो वैकल्पिकत्वात् ङीषभावे वर्षाभूशब्दः। स च भेकजातौ द्विलिङ्गः।

'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवः।

दर्दुरो भेकः। एवं च 'लिङ्गान्तरानभिधायकत्वम्' इति कैयटमते नित्यस्त्रीलिङ्गत्वाभावात् नदीत्वाभावे सति 'अम्बार्थ' इति ह्रस्वाभावे सति हे वर्षाभूरिति रूपमित्यर्थः। मतान्तरे त्विति। 'पदान्तरं विनापि स्त्रियां वर्तमानत्वम्' इति वृत्तिकारादीनां मते तु वर्षाभूशब्दस्य जातिशब्दतया पदान्तरं विनापि स्त्रियां वर्तमानतया नित्यस्त्रीत्वान्नदीत्वे 'अम्बार्थ' इति ह्रस्वे सति हे वर्षाभु इति रूपमित्यर्थः। ननु 'शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः' इत्यमरकोशे वर्षाभूशब्दस्य भेकजातौ

स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवः। 'वर्षाभ्वश्च' ( सू २८२ )। वर्षाभ्वौ। वर्षाभ्वः। स्वयम्भूः पुंवत्। इत्यूदन्ताः॥ (३०८) न षट्स्वस्रादिभ्यः ४।१।१०॥ षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप्टापौ न स्तः॥

'स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा।
याता मातेति सप्तैते स्वस्रादय उदाहृताः॥'

'अप्तृन्—'(सू २७७) इति दीर्घः। स्वसा। स्वसारौ। स्वसारः। माता पितृवत्। शसि मातॄः। इत्यृदन्ताः॥ द्यौः गोवत्॥ इत्योदन्ताः॥ राः पुंवत्॥ इत्यै-

---

स्त्रीलिङ्गमात्रावगमात् कैयटमतेऽपि नित्यस्त्रीत्वं कुतो न स्यादित्यत आह—भ्वेत्यामिति। यादवकोशानुसारात् अमरकोशे स्त्रीग्रहणमुपलक्षणमिति भावः। यद्वा अमरमतरीत्या कैयटमतेऽपि नित्यस्त्रीत्वमस्तु। अजादौ 'एरनेकाचः' इति यणः 'न भूसुधियोः' इति निषेधे प्राप्ते 'वर्षाभ्वश्च' इति यणः प्रतिप्रसव उक्तः। तं स्मारयति—वर्षाभ्वश्चेति। स्वयम्भूः पुंवदिति। स्वयम्भूशब्दस्य चतुराननं रूढत्वात् तस्य यौगिकस्य पदान्तरं विना स्त्रियामवृत्तेः। न वृत्तिमते नित्यस्त्रीत्वम्। कैयटमते तु अनेकलिङ्गत्वात् न नित्यस्त्रीत्वमिति भावः। इत्यूदन्ताः॥

अथ ऋदन्ता निरूप्यन्ते। 'सावसेर्ऋन्' इति सौ उपपदे अस्धातोः ऋन्प्रत्यये स्वसृशब्दः, भगिनीवाची। 'ऋन्नेभ्यः' इति ङीपि प्राप्ते। न षट्। षट इत्यनेन षट्सञ्ज्ञका गृह्यन्त इत्याह—षट्संज्ञकेभ्य इति। ङीप्टापाविति। 'ऋन्नेभ्य' इत्यतो ङीबिति, 'टाबृचि' इत्यतष्टाबित्यस्य चानुवृत्तेरिति भावः। स्वस्रादीन् पठति—स्वसा तिस्र इत्यादिना। अथ 'तिसृचतसृ' इत्यनयोः पाठो न कर्तव्यः 'न तिसृचतसृ' इति नामि दीर्घनिषेधादेव लिङ्गात् ङीबभावसिद्धेरिति 'क्रुन्सेजन्तः' इति सूत्रे कैयटः। न नन्दतीति ननान्दा। 'नञि च नन्देः' इति ऋन्, वृद्धिश्च। 'ननान्दा तु स्वसा पत्युः' इत्यमरः। दोग्धीति दुहिता। 'नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ' इति दुहेस्तृच्, इट् गुणाभावश्च निपातितः। मान्यते पूज्यते इति माता। मान् पूजायाम्। तृचि नलोपश्च। यतते इति याता। 'यतेर्वृद्धिश्च' इति ऋन् उपधावृद्धिश्च। 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' इत्यमरः। अप्तृन्नितीति। स्वसृशब्दात् सुः, 'ऋदुशनस्' इत्यनङ्, तृप्रत्ययान्तत्वाभावेऽपि 'अप्तृन्' इति सूत्रे स्वसृग्रहणात् दीर्घ इति भावः। माता पितृवदिति। 'अप्तृन्' इति सूत्रे औणादिकतृन्तृजन्तेषु तप्त्रादीनामेव दीर्घनियमनादिति भावः। इत्यृदन्ताः।

अथ ओदन्ता निरूप्यन्ते। द्यौर्गोवदिति। 'आतो णित्' इति णिद्वत्वातिदेशात् 'अचो ञ्णिति' इति वृद्धिः। 'द्योदिवौ द्वे स्त्रियामभ्रम्' इत्यमरः। इत्योदन्ताः।

दन्ताः ॥ नौः ग्लौवत् ॥ इत्यौदन्ताः ॥

इत्यजन्तस्त्रीलिङ्गप्रकरणम् ।



## अथ अजन्तनपुंसकलिङ्गप्रकरणम् ॥ १० ॥

(३०६) अतोऽम् ७।१।२४॥ अतोऽङ्गात्क्लीबात्स्वमोरम्स्यात् । 'अमि पूर्वः' (सू १९४) ज्ञानम् । 'एङ्ह्रस्वात्–' (सू १९३) इति हल्मात्रलोपः । हे ज्ञान ।

---

अथ ऐदन्ता निरूप्यन्ते । राः पुंवदिति । 'रायो हलि' इत्यात्वम् । 'राः स्त्रीत्येके' इति क्षीरस्वाम्युक्तेः स्त्रीलिङ्गोऽप्ययमिति भावः । इत्यैदन्ताः ।

अथ औदन्ता निरूप्यन्ते । नौग्लौवदिति । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः । इत्यौदन्ताः ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायामजन्तस्त्रीलिङ्गनिरूपणं समाप्तम् ।



अथाजन्तनपुंसकलिङ्गा निरूप्यन्ते । ज्ञानशब्दात् सुः 'स्वमोर्नपुंसकात्' इति तस्य लुकि प्राप्ते । अतोऽम् । अत इति पञ्चमी । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते । अत इत्यनेन विशेष्यते । तदन्तविधिः । 'स्वमोर्नपुंसकात्' इत्यनुवर्तते । तदाह—अतोऽङ्गादिति । अदन्तादङ्गादित्यर्थः । ज्ञानमिति । सोरमि कृते अमि पूर्वरूपम् इति भावः । असोऽम्विधानं तु 'स्वमोर्नपुंसकात्' इति लुङ्निवृत्त्यर्थम् । ननु अतः म् इत्येव छेदोऽस्तु । सोर्मकारादेशे ज्ञानमिति सिद्धेः । अमि च 'आदेः परस्य' इति अकारस्य मकारे अन्त्यस्य मकारस्य संयोगान्तलोपेनैव ज्ञानमिति सिद्धेरिति चेत्, मैवम्—एवं सति ज्ञानमित्यत्र 'सुपि च' इति दीर्घापत्तेः न च अदन्तसन्निपातमाश्रित्य प्रवृत्तस्य मादेशस्य तद्विघातकदीर्घनिमित्तत्वं न सम्भवति; सन्निपातपरिभाषाविरोधादिति वाच्यम्, 'सुपि च' इति दीर्घे कर्तव्ये सन्निपातपरिभाषाया अप्रवृत्तेरित्युक्तत्वादित्यलम् । हे ज्ञानेति । हे ज्ञान स् इति स्थिते सोरमि कृते पूर्वरूपे 'एङ्ह्रस्वात्' इति मकारलोपे हे ज्ञानेति रूपम् । ननु एङ्ह्रस्वादित्यत्र सम्बुद्ध्याक्षिप्तस्य सम्बुद्ध्यैवान्वय उचितः । ततश्च एङन्ताद्ध्रस्वान्ताच्चाङ्गात् परा या सम्बुद्धिः तदवयवस्य हलो लोप इति लभ्यते । ततश्च प्रकृते पूर्वरूपे कृते तस्य पूर्वान्तत्वाश्रयेण ज्ञान इत्यदन्तमङ्गम् । ततः परा सम्बुद्धिर्नास्ति मकारमात्रस्यासम्बुद्धित्वात्, सुस्थानिकस्याम एव सम्बुद्धित्वात्, अर्धविकारेण एकदेशविकृतन्यायानवताराच्च । न च

(३१०) नपुंसकाच्च ७।१।१९ क्लीबात्परस्यौङः शी स्यात् । भसंज्ञायाम् । (३११) यस्येति च ६।४।१४८॥ भस्येवर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च परे । इत्यकारलोपे प्राप्ते । 'औङः श्यां प्रतिषेधो वाच्यः' ( वा ४१८९ )। ज्ञाने । (३१२) जश्शसोः शिः ७।१।२०॥ क्लीबादनयोः शिः स्यात् । (३१३) शि सर्वनामस्थानम् १।१।४२॥ 'शि' इत्येतदुक्तसंज्ञा स्यात् । (३१४) नपुंसकस्य झलचः ७।१।७२॥ झलन्तस्याजन्तस्य च क्लीबस्य

---

पूर्वरूपात् प्राक् 'एङ्ह्रस्वात्' इत्यस्य प्रवृत्तिः किं न स्यादिति वाच्यम्, परत्वात् पूर्वरूपस्यैव पूर्वं प्रवृत्तेः । न च पूर्वान्तत्वात् पूर्वरूपस्याङ्गान्तर्भावात् ज्ञान इत्यदन्तमङ्गम् । परादित्वाच्च अम् इत्यस्य सम्बुद्धित्वं चेत्याश्रित्य तदवयवहलो मकारमात्रस्य 'एङ्ह्रस्वात्' इति लोपो निर्बाध इति वाच्यम् । 'उभयत आश्रयणे नान्तादिवत्' इति निषेधादित्यत आह—एङ्ह्रस्वादिति । हल्मात्रलोप इति । पूर्वरूपे कृते सम्बुद्धेर्मकारमात्रं यत् परिशिष्टं तस्य 'एङ्ह्रस्वात्' इति लोप इत्यर्थः । लक्ष्यानुरोधात् सम्बुद्ध्याक्षिप्तमङ्गं सम्बुद्धौ नान्वेति;किन्तु सम्बुद्ध्यवयवहल्येवान्वेति । ततश्च एङन्तात् ह्रस्वान्ताच्चाङ्गात् परो यः सम्बुद्ध्यवयवहल् तस्य लोप इति लभ्यते । प्रकृते च पूर्वरूपे कृतेऽपि ह्रस्वान्तादङ्गात् परत्वं सम्बुद्ध्यवयवस्य मकारमात्रस्य अस्त्येवेति तस्य 'एङ्ह्रस्वात्' इति लोपो निर्बाध इत्यन्यत्र विस्तरः ।

नपुंसकाच्च । 'जसः शी' इत्यतः शीति 'औङ आपः' इत्यतः 'औङः' इति चानुवर्तते । तदाह—क्लीबादिति । औङित्यौकारविभक्तेः संज्ञेत्युक्तम् । ज्ञान ई इति स्थिते—यस्येति च । यस्य ईतीति छेदः । इश्च अश्च तयोः समाहारः यं तस्य इवर्णस्य अवर्णस्य चेत्यर्थः । भस्येत्यधिकृतम् । 'नस्तद्धिते' इत्यतः तद्धिते इत्यनुवर्तते । तदाह—भस्येत्यादिना । इत्यकारलोपे प्राप्त इति । 'सुडनपुंसकस्य' इति पर्युदासेन शीभावस्यासर्वनामस्थानतया तस्मिन् परतो भत्वादिति भावः । औङः श्यामिति । औङः यः शी आदेशः तस्मिन् परतः 'यस्येति च' इति लोपस्य प्रतिषेधो वक्तव्य इत्यर्थः । श्यामिति निर्देशादेव नित्यस्त्रीत्वं बोध्यम् । औङ इति तु व्यर्थमेव । सर्वे इत्यादौ 'जशः शी' इत्यस्य भाधिकारेणैव व्यावृत्तिसिद्धेः । ज्ञाने इति । ज्ञान ई इति स्थिते आद्गुण इति भावः । जश्शसोः शिः । 'स्वमोर्नपुंसकात्' इत्यतो नपुंसकादित्यनुवर्तते । तदाह—क्लीबादिति । ज्ञान शि इति स्थिते स्थानिवत्त्वेन प्रत्ययत्वात् 'लशक्वतद्धिते' इति शकार इत् । शि सर्वनामस्थानम् । उक्तसंज्ञमिति । सर्वनामस्थानसंज्ञकमित्यर्थः । अनपुंकस्येति पर्युदासात् शि इत्यस्य सर्वनामस्थानत्वे अप्राप्ते वचनम् । नपुंसकस्य झलचः । झल् च अच्चेति समाहारद्वन्द्वः । तेन च अङ्गस्येत्यधिकृतं विशेष्यते । तदन्तवि-

नुमागमः स्यात्सर्वनामस्थाने परे । उपधादीर्घः । ज्ञानानि । पुनस्तद्वत् । शेषं रामवत् । एवं घनवनफलादयः । (३१५) अद्ड्डतरादिभ्यः पञ्चभ्यः ७।१।२५॥ एभ्यः क्लीबेभ्यः स्वमोरद्ड्डादेशः स्यात् । (३१६) टेः ६।४।१४३॥ डिति परे भस्य टेर्लोपः स्यात् । 'वाऽवसाने' ( सू २०६ )। कतरत्–कतरद् कतरे कतराणि । 'भस्य' इति किम् । पञ्चमः । टेर्लुप्तत्वात् 'प्रथमयोः—' (सू १६४) इति पूर्वसवर्णदीर्घः 'एङ्ह्रस्वात्—' ( सू १९२ ) इति सम्बुद्धिलोपश्च न भवति । हे कतरत् । पुनस्तद्वत् । शेषं पुंवत् । कतमत् । इतरत् । अन्यत् । अन्यतरत् । अन्यतमशब्दस्य तु अन्यतममित्येव । 'एकतरात्प्रतिषेधो वक्तव्यः' ( वा ४२८७ )।

---

धिः । 'इदितो नुम्धातोः' इत्यतो नुमित्यनुवर्तते । 'उगिदचाम्' इत्यतः सर्वनामस्थाने इत्यनुवर्तते । तदाह—झलन्तस्येत्यादिना । मित्त्वादन्त्यादचः परः । उपधादीर्घ इति । ज्ञानम् इ इति स्थिते 'सर्वनामस्थाने च' इति दीर्घ इत्यर्थः । पुनस्तद्वदिति । अमौट्शस्सु ज्ञानं ज्ञाने ज्ञानानि इति क्रमेण रूपाणीत्यर्थः । शेषं रामवदिति । शिष्यत इति शेषम् । कर्मणि घञ् । 'घञबन्ताः पुंसि' इति तु प्रायिकमिति भावः ।

अद्ड्डतरादिभ्यः । अद्ड् डतरादिभ्य इति छेदः । दस्य ष्टुत्वेन डकारः, डस्य संयोगान्तलोपश्च आदेशस्वरूपावगतये न कृत इति कैयटः । डतर, डतम, अन्य, अन्यतर, इतर इति डतरादयः सर्वादिगणपठिताः । अत्र डतरडतमौ प्रत्ययौ । अतस्तदन्तग्रहणम् । 'स्वमोर्नपुंसकात्' इति सूत्रमनुवर्तते तदाह—एभ्य इत्यादिना । डकार इत् । कतर अद् इति स्थितेः । टेः । अल्लोपोऽन इत्यस्माल्लोप इति 'ति विंशतेर्डिति' इत्यतः डितीति चानुवर्तते । भस्येत्यधिकृतम् । तदाह—डितीत्यादिना । कतर अद् इत्यत्र रेफादकारस्य लोपः । चर्त्वविकल्पं स्मारयति—वाऽवसाने इति । ननु पररूपेण कतरदिति सिद्धेः अद्डो डित्करणस्य किं प्रयोजनमित्यत आह—टेर्लुप्तत्वादिति । टेर्लुप्तत्वात् पूर्वसवर्णदीर्घो न भवतीत्यन्वयः । डित्त्वाभावे 'टेः' इति लोपस्याप्राप्त्यापररूपं बाधित्वा पूर्वसवर्णदीर्घः प्रसज्येत इति भावः । ननु पूर्वसवर्णदीर्घाभावाय दकार एवादेशः क्रियतामित्यत आह—एङ्ह्रस्वादित्यादि । सोर्दकारादेशे सति तस्य स्थानिवत्त्वेन सम्बुद्धित्वात् ह्रस्वान्तादङ्गात् परत्वाच्च लोपः प्रसज्येत । अद्डादेशे तु टिलोपे सति कतर् इत्यङ्गम् । न तद्ध्रस्वान्तम् । यत्तु ह्रस्वान्तं कतर इति न तदङ्गम् , रेफादकारस्य प्रत्ययावयवत्वेन तदन्तस्य प्रत्ययपरकत्वाभावेन अङ्गत्वाभावात् । अतष्टिलोपप्रवृत्तये अद्डादेशविधिरिति भावः । पुनस्तद्वदिति । प्रथमावत् द्वितीयेत्यर्थः । शेषं पुंवदिति । सर्ववदित्यर्थः । अन्यतमशब्दस्य त्विति । तस्याव्युत्पन्नप्रातिपदिकत्वेन डतमप्रत्ययान्तत्वाभावेन तत्राद्ड्डादेशो नेत्यर्थः । 'एकाच प्राचाम्' इति डतरजन्तादेकतरशब्दात्

एकतरम् । सोरमादेशे कृते सन्निपातपरिभाषया न जरस् । अजरम् । अजरसी-अजरे । परत्वाज्जरसि कृते झलन्तत्वान्नुम् । (३१७) **सान्तमहतः संयोगस्य ।** ६।४।१०॥ सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे । अजरांसि-अजराणि । अमि लुकोऽपवादमम्भावं बाधित्वा पर-

स्वमोरद्डादेशे प्राप्ते आह—एकतरादिति । एकतरशब्दात् परयोः स्वमोरद्डादेशप्रति-षेधो वक्तव्य इत्यर्थः ।

अविद्यमाना जरा यस्य कुलस्येति विग्रहे 'नञोऽस्त्यर्थानाम्' इति बहुव्रीहौ विद्य-मानपदलोपे 'गोस्त्रियोः' इति ह्रस्वत्वे अजरशब्दः । तस्य प्रक्रियां दर्शयति—सोरिति। सोरमादेशे कृते अजरमित्यन्वयः । जरसादेशमाशङ्क्याह—सन्निपातेति । अदन्तसन्नि-पाताश्रयस्य अमः अदन्तत्वविघातकजरसादेशं प्रति निमित्तत्वायोगादिति भावः। अज-रसी इति । 'नपुंसकाच्च' इति शीभावे जरसादेशे रूपम् । अजरे इति । जरसादेशाभावे रूपम् । जसि रूपं दर्शयितुमाह—परत्वादिति । अजर अस् इति स्थिते 'जश्शसोः शिः' इति शिभावात् परत्वाज्जरसि कृते ततः शिभावे झलन्तत्वान्नुमित्यर्थ इति केचित् । तदेतत् 'जराया जरस्' इति सूत्रे अजरांसीत्यत्र 'नुम्जरसोः प्राप्तयोः विप्रतिषेधेन जरस्' इति भाष्यविरुद्धत्वादुपेक्ष्यम् । शिभावात् पूर्वमेव परत्वात् जरसः प्रवृत्तौ हि तदा जसः सर्वनामस्थानत्वाभावेन नुम एवाप्रसक्तेः तदसंगतिः स्पष्टैव । पूर्वविप्रतिषेध-माश्रित्य जरसः पूर्वमेव शिभावे तु तद्भाष्यं सङ्गच्छते। एवञ्च जरसः पूर्वमेव शिभावे कृते तस्य सर्वनामस्थानत्वात् तस्मिन् परे नुम्जरसोः प्राप्तयोः नुमपेक्षया परत्वात् जरस् । ततो झलन्तलक्षणो नुमित्येव व्याख्येयम् । यदि हि जरसादेशात् प्रागेव अजन्तलक्षणो नुम् स्यात्, तदा अजरन् इ इति स्थिते 'निर्दिश्यमानस्यादेशा भवन्ति' इति न्यायेन जर इत्यस्य जरसि कृते अजरस् न् इति स्थिते सान्तसंयोगाभावात् 'सान्तमहतः' इति वक्ष्यमाणदीर्घो न स्यादित्यादि शब्देन्दुशेखरे निर्जरशब्दनिरूपणे अत्र च प्रप-ञ्चितम् । उभयथापि अजरन् स् इति स्थिते नान्तत्वाभावात् 'सर्वनामस्थाने च' इति दीर्घे अप्राप्ते । सान्तमहतः । ।सर्वनामस्थाने चासम्बुद्धौ इति, 'नोपधायाः' इति चानुवर्तते । नेति लुप्तषष्ठीकं पदम् । 'ढ्लोपे पूर्वस्य' इत्यतो दीर्घ इत्यनुवर्तते । नकारस्य उपधायाः दीर्घ इति लभ्यते । संयोगस्येत्यवयवषष्ठ्यन्तं नकारे अन्वेति । सान्तेति षष्ठ्यन्तं पृथक्पदम् । आर्षः षष्ठ्या लुक् । सान्तस्येति लभ्यते । तच्च संयोगे अभेदेनान्वेति—सान्तो यः संयोगः इति । अत एवासामर्थ्यान्महच्छब्देन तस्य न समासः । महत इत्यप्यवयवषष्ठ्यन्तम् । तच्च नकारे अन्वेति । तदाह—सान्तसंयोगस्येत्यादिना । अजरांसीति । दीर्घे सति 'नश्चापदान्तस्य' इत्यनुस्वारः । अत्र

त्वाज्जरस्। ततः सन्निपातपरिभाषया न लुक्। अजरसम्-अजरम्। अजरसी-अजरे। अजरांसि-अजराणि। शेषं पुंवत्। 'पद्दन्—' ( सू. २२८ ) इति हृदयोदकास्यानां हृद् उदन् आसन्। हृन्दि। हृदा। हृद्भ्यामित्यादि। उदानि। उद्ना उद्भ्यामित्यादि। आसानि। आस्ना आसभ्यामित्यादि। मांसि। मांसा। मान्भ्या-

---

उपधाया इति पूर्वत्वमात्रोपलक्षणम्, पारिभाषिकोपधात्वस्यासम्भवात्। अथ द्वितीयैकवचने रूपं दर्शयितुमाह—अमि लुक् इति। अजर अम् इति स्थिते। 'स्वमोर्नपुंसकात्' इति लुक् प्राप्तः, तं बाधित्वा तदपवादः 'अतोऽम्' इत्यम्भावः प्राप्तः, तं बाधित्वा 'विप्रतिषेधे परम्' इति परत्वाज्जरस्। अजरसमिति। वस्तुस्थितिकथनमेतत्। ननु 'लुगपवादस्याम्भावस्य जरसादेशेन बाधितत्वात् 'अपवादे निषिद्धे पुनरुत्सर्गस्य स्थितिः' इति न्यायेन अमो लुक् कुतो न स्यादित्यत आह—नत इति। ततो न लुगित्यन्वयः। जरसादेशानन्तरं अमो लुङ् न भवतीत्यर्थः। कुत इत्यत आह—सन्निपातेति। अम्सन्निपातमाश्रित्य प्रवृत्तस्य जरसः तल्लुकि निमित्तत्वाभावादिति भावः। शेषं पुंवत्। अजरसा-अजरेण। अजरसे-अजराय। अजरसः-अजरात्। अजरसः-अजरस्य। अजरसोः-अजरयोः। अजरसि-अजरे।

हृदयोदकास्यशब्दाः सुटि ज्ञानवत्। शसादौ विशेषमाह—पद्दन्निति। हृन्दीति। हृदयशब्दात् शसः शिभावे हृदादेशे 'नपुंसकस्य झलचः' इति ऋकारात् परतो नुमि 'नश्चापदान्तस्य' इत्यनुस्वारे तस्य परसवर्णे नकारे रूपम्। इत्यादीति। हृदे। हृदः। हृदः। हृदोः। हृदाम्। हृदि। हृदोः। हृत्सु। हृदभावपक्षे ज्ञानवत्। उदकशब्दः सुटि ज्ञानवत्। शसादौ विशेषमाह—उदानीति। शसः शिभावे उदन्नादेशे 'सर्वनामस्थाने च' इति दीर्घः। 'अल्लोपोऽनः' इति तु न, शेः सर्वनामस्थानत्वात्। उद्नेति। उदक आ इति स्थिते उदन्नादेशे अल्लोपः। उद्भ्यामिति। उदन्नादेशे 'न लोपः प्रातिपदिकान्तस्य' इति नलोपः, 'स्वादिष्वसर्वनामस्थाने' इति पदत्वात्। इत्यादीति। उद्ने। उद्नः। उद्नः। उद्नोः। उद्नि-उदनि। उद्नोः। उदन्नभावपक्षे ज्ञानवत्। आस्यशब्दः सुटि ज्ञानवत्। शसादौ विशेषमाह—आसानीत्यादिना। उदन्नादेशवद्रूपाणि। इत्यादीति। आस्ने। आस्नः। आस्नः। आस्नोः। आस्नि-आसनि। आस्नोः। आससु। आसन्नभावपक्षे ज्ञानवत्। मांसशब्दोऽपि सुटि ज्ञानवत्। 'मांसपृतनासानूनाम्' इति शसादौ मांस् आदेशः। अत्र नकारस्य 'नश्चापदान्तस्य' इति कृतानुस्वारस्य निर्देशः। अत एवाह—मान्भ्यामिति। मांस् आदेशे सकारस्य संयोगान्तलोपे सति निमित्तापायात् अनुस्वारनिवृत्तौ रूपम्। संयोगान्तलोपस्यासिद्धत्वान्नलोपो न।

मित्यादि। वस्तुतस्तु प्रभृतिग्रहणं प्रकारार्थमित्युक्तम्। अत एव भाष्ये 'मांसपचन्या उखायाः' इत्युदाहृतम्। अयस्मयादित्वेन भत्वात्संयोगान्तलोपो न। 'पद्न्—' (सू २२८) इत्यत्र हि 'छन्दसि' इत्यनुवर्तितं वृत्तौ। तथापि 'अपो भि' (सू ४४२) इत्यत्र 'मासश्छन्दसि' (वा ४६३४) इति वार्तिके छन्दोग्रहणसामर्थ्याल्लोकेऽपि क्वचित् इति कैयटोक्तरीत्या प्रयोगमनुसृत्य पदादयः प्रयोक्तव्या इति बो-

---

अथ सुब्व्यपि हृदाद्यादेशं साधयितुमाह—वस्तुतस्त्विति। इत्युक्तमिति। 'ककुद्दोपणी' इति भाष्यप्रयोगात् प्रभृतिग्रहणस्य प्रकारार्थत्वम् अजन्तपुँल्लिङ्गाधिकारे स्वयमुक्तमित्यर्थः। ननु प्रभृतिग्रहणस्य प्रकारार्थत्वेऽपि प्रत्ययत्वेन सादृश्यविवक्षायां प्रथमैकवचने हृत् इति प्रयोगोऽनुपपन्नः, सोर्लुका लुप्तत्वेन प्रत्ययलक्षणस्याप्यभावात् तदनित्यत्वाश्रयणे च मानाभावादित्यत आह—अत एवेति। मांसपचन्या इति। पच्यते अस्यामुखायामिति पचनी। अधिकरणे ल्युट्, अनादेशः। टित्वात् ङीप् मांसस्य पचनीति षष्ठीसमासः। अत्र ङसो लुका लुप्तत्वात् प्रत्ययलक्षणाभावे प्रत्ययपरत्वाभावात् मांस् आदेशो न स्यात्। अतो हृदाद्यादेशविधौ 'न लुमता' इति निषेधस्यानित्यत्वमाश्रीयत इत्यर्थः। ननु मांसपचन्या इत्यत्र अन्तर्वर्तिनं ङसं लुप्तमाश्रित्य मांस् इत्यस्यास्ति पदत्वम्, 'सुप्तिङन्तम्' इति पदसञ्ज्ञायाः प्रकृतिप्रत्ययधर्मत्वेन केवलाङ्गधर्मत्वाभावेन अत्र 'न लुमता' इति निषेधस्याप्रवृत्तेः। अन्यथा राजपुरुष इत्यत्र कथं नलोपः। ततश्चात्र सकारस्य संयोगान्तलोपो दुर्वार इत्यत्र आह—भत्वात् संयोगान्तलोपो नेति। ननु यजादिस्वादिप्रत्यये परे विधीयमानायाः भसञ्ज्ञायाः केवलाङ्गधर्मत्वात् तत्र लुका लुप्ते प्रत्ययलक्षणनिषेधात् कथमिह भसञ्ज्ञेत्यत आह—अयस्मयादित्वेनेति। मांस् आदेशस्य अयस्मयादिगणपठितत्वात् 'अयस्मयादीनि छन्दसि' इति भत्वमित्यर्थः। शङ्कते—पद्न्नित्यत्रेति। पद्न् इति सूत्रे 'शीर्षन् छन्दसि' इत्यतः छन्दसीत्यनुवृत्तिः वृत्तिग्रन्थे प्रदर्शितेत्यर्थः। ततश्च वैदिकप्रक्रियायामेव तदुपन्यासो युज्यत इत्याक्षेपः। परिहरति—तथापीति। 'पद्न्नो' इति सूत्रे छन्दोग्रहणानुवृत्तावपि लोकेऽपि क्वचिदित्यन्वयः। कुतो लोकेऽपि प्रयोग इत्यत आह—अपो भीत्यादीति। 'अपो भि' इति सूत्रम्। अपस्तकारः स्यात् भादौ प्रत्यये परे इत्यर्थः। तत्रास्ति वार्तिकम्—'मासश्छन्दसि' इति। मास् इत्यस्य तकारः स्यात् भादिप्रत्यये परे छन्दसि इति तदर्थः। ऋग्वेदे 'माद्भिः शरद्भिः' इत्यादिमन्त्रमुदाहरणम्। यदि 'पद्न्' इति छन्दोमात्रविषयं स्यात् तदा मास् इत्यादेशस्य छन्दोमात्रविषयत्वादलौकिकत्वात् मासश्छन्दसीति सस्य तकारविधौ छन्दोग्रहणं व्यर्थं स्यात्। अतो लोकेऽपि क्वचिदिति कैयटोक्तरीत्या 'पद्न्' इत्यस्य लोकेऽपि प्रवृत्तिमनुसृत्य पदाद्यादेशाः प्रयोक्तुं योग्या इत्यर्थः। इत्यदन्ताः॥

ध्यम्। इत्यदन्ताः ॥ (३१८) ह्रस्वो नपुंसके प्रातिपदिकस्य १।२।४७॥ क्लीबे प्रातिपदिकस्याजन्तस्य ह्रस्वः स्यात्। श्रीपं ज्ञानवत्। श्रीपाय। अत्र सन्निपातपरिभाषया 'आतो धातोः' (सू २४०) इत्याकारलोपो न। इत्यादन्ताः ॥ (३१९) स्वमोर्नपुंसकात् ७।१।२३॥ क्लीबादङ्गात्परयोः स्वमोर्लुक् स्यात्।

---

अथ आदन्ता निरूप्यन्ते। श्रियं पातीति श्रीपाशब्दो विश्वपाशब्दवत् विजन्तः क्विबन्तो वा। तस्य नपुंसकत्वे ह्रस्वविधानमाह—ह्रस्वो नपुंसके। ह्रस्वश्रुत्या उपस्थितेन अच इत्यनेन प्रातिपदिकस्य विशेषणात् तदन्तविधिरित्याह—क्लीब इत्यादिना। न च कुले इति द्विवचने एकादेशस्य पूर्वान्तत्वेन ग्रहणात् अजन्तप्रातिपदिकत्वाद्ध्रस्वः स्यादिति वाच्यम्, 'अर्थवदधातुः' इत्यतः प्रातिपदिकग्रहणानुवृत्तौ पुनः प्रातिपदिकग्रहणेन अन्तवद्भावतः प्रातिपदिकत्वे ह्रस्वाभावबोधनात्। ज्ञानवदिति। ह्रस्वविधानात् दीर्घान्तत्वप्रयुक्तो न कश्चिद्विशेष इति भावः। जश्शसोः शिः श्रीपाणीति रूपम्, भिन्नपदस्थत्वेऽपि 'एकाजुत्तरपदे णः' इति णत्वप्रवृत्तेः। श्रीपेण, इनादेशे गुणे तस्य पूर्वान्तत्वादुत्तरपदस्य एकाच्त्वात्स्यादेव णत्वम्। श्रीपायेति। श्रीपाशब्दस्य 'ह्रस्वो नपुंसके' इति ह्रस्वत्वे ङेर्यादेशे 'सुपि च' इति दीर्घे रूपम्। सन्निपातपरिभाषा तु कष्टायेति निर्देशात् न प्रवर्तत इति प्रागुक्तम्। नन्वत्र ह्रस्वत्वे कृतेऽपि प इत्यस्य एकदेशविकृतन्यायेन धातुत्वानपायात् दीर्घे कृते आकारान्तत्वाच्च 'आतो धातोः' इत्याल्लोपः स्यात्, यादेशस्य स्वतो यकारादितया स्थानिवत्त्वेन स्वादिप्रत्ययतया च तस्मिन् परे भत्वस्यापि सत्त्वादित्यत आह—अत्र सन्निपातेति। ननु उपजीव्यविघातकं प्रति उपजीवकं निमित्तं न भवतीति सन्निपातपरिभाषया लभ्यते। प्रकृते च अदन्तमुपजीव्य प्रवृत्तस्य यादेशस्य आल्लोपं प्रति कथं न निमित्तत्वम्। यादेशस्य आकारमुपजीव्य प्रवृत्तत्वाभावेन अकारलोपं प्रति निमित्तत्वे बाधकाभावादिति चेत्, मैवम्—यादेशस्तावत् ह्रस्वमवर्णमुपजीव्य प्रवर्तते, तद्विधावत इत्यनुवृत्तेः। ततश्च ह्रस्वत्वमवर्णत्वं च समुदितं यादेशस्य उपजीव्यम्। तत्र कष्टायेति निर्देशात् सन्निपातपरिभाषां बाधित्वा कृतेऽपि दीर्घे ह्रस्वत्वांश एव निवृत्तः। अवर्णत्वांशस्त्वनुवृत्त एव। तस्याप्याल्लोपेन निवृत्तौ उपजीव्यविघातः स्यादेवेति भवेदेव सन्निपातपरिभाषाविरोधः। अतो न भवत्याल्लोप इति कौस्तुभे समाहितम् 'इको गुणवृद्धी' इत्यत्र। वस्तुतस्तु आतो धातोरित्यत्र लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदोक्त एवाकारान्तधातुर्गृह्यते। इह तु पाधातोर्ह्रस्वत्वे तु पुनर्दीर्घे सति अवगम्यमानं पास्वरूपं लाक्षणिकमेवेति न तस्यात्र ग्रहणमित्यास्तां तावत्। इत्यादन्ताः ॥

अथ इदन्ता निरूप्यन्ते। अथ वारिशब्दप्रक्रियां दर्शयितुमाह—स्वमोर्नपुंसकात्।

वारि। (३२०) इकोऽचि विभक्तौ ७।१।७३॥ इगन्तस्य क्लीबस्य नुमागमः स्यादचि विभक्तौ। वारिणी। वारीणि। 'न लुमता—' (सू २६३) इति निषेधस्यानित्यत्वात्पक्षे सम्बुद्धिनिमित्तो गुणः। हे वारे-हे वारि। 'आङो ना—' (सू २४४) वारिणा। 'घेर्ङिति' (सू २४५) इति गुणे प्राप्ते 'वृद्ध्यौत्त्वतृज्वद्भावगुणेभ्यो

---

'षड्भ्यो लुक्' इत्यतो लुगित्यनुवर्तत इत्याह—क्लीबादित्यादिना। वारीति। सोरमश्च लुकि रूपम्। न च 'आदेः परस्य' इति अमः अकारस्यैव लुक् स्यात्। न तु मकारस्यापीति शङ्क्यम्, प्रत्ययस्य लोप एव हि लुगित्युच्यते। अम् इति समुदाय एवेह प्रत्ययः; न तु तदेकदेशभूतमकारमात्रम्। अतो लुगमः सर्वादेश एव भवति। इकोऽचि। 'इदितो नुम् धातोः' इत्यतो नुमित्यनुवर्तते। 'नपुंसकस्य झलचः' इत्यतो नपुंसकस्येत्यनुवर्तते। अङ्गस्येत्यधिकृतम् इका विशेष्यते। तदन्तविधिः। तदाह—इगन्तस्येत्यादिना। अचि विभक्ताविति। अजादौ विभक्तावित्यर्थः। 'इकोऽचि सुपि' इत्येव सुवचम्। विभक्तौ किम्। मधु मद्यम्। तस्येदं माधवम्। अणि परे नुमि टिलोपे माधमिति स्यात्। वारिणी इति। वारि औ इति स्थिते शीभावे नुमि 'अट्कुप्वाङ्' इति णत्वे रूपम्। वारिणी इति। जश्शसोः शिभावे नुमि 'सर्वनामस्थाने च' इति दीर्घे णत्वे रूपम्। हे वारि सु इत्यत्र सोर्लुकि प्रक्रियां दर्शयति—पक्ष इति। 'ह्रस्वस्य गुणः' इति सम्बुद्धिनिमित्तको गुणः। कदाचिद्भवतीत्यर्थः। नन्विह सम्बुद्धेर्लुका लुप्तत्वात् 'न लुमता' इति प्रत्ययलक्षणनिषेधात् कथं गुण इत्यत आह—न लुमतेति निषेधस्यानित्यत्वादिति। अत्र च 'इकोऽचि विभक्तौ' इत्यत्राज्ग्रहणं ज्ञापकम्। हलादिषु भ्यामादिषु सत्यपि नुमि 'न लोपः प्रातिपदिकान्तस्य' इति तस्य लोपसम्भवादचीति व्यर्थम्। न च सम्बुद्धिव्यावृत्त्यर्थम् अज्ग्रहणम्। तत्र नुमि सति 'न ङिसम्बुद्ध्योः' इति निषेधे सति नकारश्रवणप्रसङ्गादिति वाच्यम्, सम्बुद्धेर्लुका लुप्ततया प्रत्ययलक्षणाभावेन तत्र नुमः प्राप्तेरेवाभावात्। 'न लुमता' इति निषेधस्यानित्यत्वे तु सम्बुद्धौ प्रत्ययलक्षणेन प्राप्तं नुमं वारयितुमज्ग्रहणम् अर्थवदिति भवत्यज्ग्रहणं 'न लुमता–' इत्यस्यानित्यत्वे लिङ्गमित्याहुः। अत एव 'इकोऽचि–' इति सूत्रे हे त्रपो इति 'एङ्ह्रस्वात्' इति सूत्रे हे त्रपु इति च भाष्यं सङ्गच्छते। आङो नेति। रूपे विशेषाभावेऽपि नुमपेक्षया परत्वेन नाभावस्यैव न्याय्यत्वादिति भावः। ङसिङसोर्विशेषमाह—घेरिति। नुमं बाधित्वा परत्वात् गुणे प्राप्त इत्यर्थः। वृद्ध्यौत्वेति। वार्तिकम्। वृद्ध्यादीनां क्रमेण 'गावौ, हरौ, क्रोष्ट्रा, हरये' इत्यवकाशः। नुमोऽवकाशः वारीणि इति। अतिसखीनि इत्यत्र जश्शसोः 'सख्युरसम्बुद्धौ' इति णित्वाद् वृद्धिः परत्वाद् नुमं बाधित्वा प्राप्ता। वारिणी इत्यत्र ङौ तु 'अच्च घेः' इत्यौत्वं प्राप्तम्। प्रियक्रोष्टूनि इत्यत्र जश्शसोः तृज्वत्त्वं प्राप्तम्। वारिशब्दाद्

नुम् पूर्वविप्रतिषेधेन' ( वा ४३७३ )। वारिणे । वारिणः । वारिणः । 'नुमचिर-' ( वा ४३७४ ) इति नुट् । 'नामि' ( सू २०९ ) इति दीर्घः । वारीणाम् । वारिणि । वारिणोः । हलादौ हरिवत् । **( ३२१ ) तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ७।१।७४॥** प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीवं पुंवद्वा स्याट्टादावचि । अनादये—अनादिने इत्यादि । शेषं वारिवत् । पीलुर्वृक्षः, तत्फलं पीलु,

---

ङ्यादौ गुणः प्राप्तः । अत्र पूर्वविप्रतिषेधान्नुमेवेत्यर्थः । वारिणे इति । ङसि गुणं बाधित्वा नुमि णत्वे रूपम् । वारिण इति । ङसिङसोर्गुणं बाधित्वा नुमि णत्वे रूपम् । वारिणोरिति । ओसि यणं बाधित्वा नुमि णत्वे रूपम् । वारि आमित्यत्र परत्वान्नुटं बाधित्वा नुमि प्राप्त आह—नुमचिरेति नुडिति । नुम्नुटोः को विशेष इत्यत आह—नामीति । दीर्घ इति । नुमि तु सति तस्याङ्गभक्तत्वाद् 'नामि' इति दीर्घो न स्यादिति भावः । वारिणीति । ङौ 'अच्च घेः' इत्यौत्वं परमपि बाधित्वा 'वृद्ध्यौत्व' इति पूर्वविप्रतिषेधान्नुम् ।

न विद्यते आदिः उत्पत्तिः यस्य सः अनादिः ईश्वरः । अनादिः अविद्या । अनादि ब्रह्म । त्रिलिङ्गोऽयं विशेष्यनिघ्नः । तस्य नपुंसकत्वे प्रथमाद्वितीययोर्वारिवद्रूपाणि । टादिषु अचि विशेषमाह—तृतीयादिषु । भाषितः पुमान् येन प्रवृत्तिनिमित्तेन तत् भाषितपुंस्कं प्रवृत्तिनिमित्तं तदस्यास्तीति अर्श आद्यच् । शब्दस्वरूपम्, विशेष्यम् । पुंस्त्वे नपुंसकत्वे च एकप्रवृत्तिनिमित्तकमिति यावत् । 'इकोऽचि विभक्तौ' इत्यतः इकोऽचीति 'नपुंसकस्य झलचः' इत्यतो नपुंसकस्येति चानुवर्तते । षष्ठी च प्रथमया विपरिणम्यते । तदाह-प्रवृत्तिनिमित्तैक्य इत्यादिना । पुंवद्वेति । गालवग्रहणादिति भावः । अचीति । अजादावित्यर्थः । पुंवत्त्वे ह्रस्वनुमोरभावः फलति । घटपटादिशब्दास्तावत् । घटत्वपटत्वादिरूपेणैव तत्तद्व्यक्तिं प्रत्याययन्ति न तु द्रव्यत्वपृथिवीत्वादिरूपेणेति निर्विवादम् । ततश्च यद्विशेषणं पुरस्कृत्य घटादिशब्दाः तत्तद्व्यक्तिषु प्रयुज्यन्ते तद्विशेषणं प्रवृत्तिनिमित्तमित्युच्यते । वाच्यतावच्छेदकमिति यावत् । एवं च नपुंसकत्वे लिङ्गान्तरे च यस्य एकमेव वाच्यतावच्छेदकं तत् शब्दस्वरूपं भाषितपुंस्कशब्देन विवक्षितम् । अनादिशब्दश्च उत्पत्त्यभावात्मकमनादित्वं पुरस्कृत्य स्त्रीपुंनपुंसकतत्तद्व्यक्तिप्रत्यायक इति भवति तस्य प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कता । अतस्तस्य टादावचि पुंवत्त्वविकल्प इत्यभिप्रेत्योदाहरति—अनादये, अनादिने इति । पुंवत्त्वे नुमः अप्रवृत्तेः 'घेर्ङिति' इति गुणः । पुंवत्त्वाभावे तु नुमिति भावः । इत्यादीति । अनादेः-अनादिनः । अनाद्योः-अनादिनोः । आमि तु अनादीनामित्येव । शेषं वारिवदिति । प्रथमाद्वितीययोः भ्यामादौ हलि च वारिवदित्यर्थः । प्रवृत्तिनिमित्तैक्ये इत्यस्य प्रयोजनं दर्शयितुमाह—पीलुर्वृक्ष इत्यादि । यदा

तस्मै पीलुने। अत्र न पुंवत्। प्रवृत्तिनिमित्तभेदात्। (३२२) **अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ७।१।७५।।** एषामनङ् स्याट्टादावचि, स चोदात्तः। 'अल्लोपोऽनः' ( सू २३४ )। दध्ना। दध्ने। दध्नः। दध्नः दध्नोः दध्नाम्। दध्नि-दधनि। दध्नोः। शेषं वारिवत्। एवमस्थिसक्थ्यक्षीणि। तदन्तस्याप्यनङ्। अतिदध्ना ॥ इति इदन्ताः ॥ सुधि। सुधिनी। सुधीनि। हे सुधे-हे सुधि। सुधिया—सुधिना। सुधियाम्—सुधीनाम्। प्रध्या—प्रधिना। इति ईदन्ताः ॥ मधु। मधुनी। मधूनि। हे मधो-हे मधु। एवमम्ब्वादयः। सानुशब्दस्य स्नुर्वा।

---

वृक्षविशेषः पीलुशब्दवाच्यस्तदा पुंलिङ्गः पीलुशब्दः। यदा पीलुजन्यफलं पीलुशब्दवाच्यं तदा नपुंसकलिङ्गः। 'फले लुक्' इत्यणो लुक्। अत्र 'फले वाच्ये पुंवत्त्वं नेत्यर्थः। कुत इत्यत आह-प्रवृत्तिनिमित्तभेदादिति। वृक्षत्वव्याप्यजातिविशेषात्मकं पीलुत्वं वृक्षविशेषे वाच्ये प्रवृत्तिनिमित्तम्। फलविशेषे तु वाच्ये फलत्वव्याप्यजातिविशेषात्मकं पीलुत्वं प्रवृत्तिनिमित्तमिति प्रवृत्तिनिमित्तभेदादित्यर्थः। तदुक्तम्—'पीलुर्वृक्षः फलं पीलु पीलुने न तु पीलवे। वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः।' इति।

अस्थि, दधि, सक्थि, अक्षि एतेषां प्रथमाद्वितीययोर्वारिवद्रूपाणि। टादावचि विशेषमाह—अस्थिदधि। तृतीयादिष्विति। अचीति चानुवर्तते। तदाह—एषामित्यादिना। नुमोऽपवादः। अनङि ङकार इत्, अकार उच्चारणार्थः। ङित्वादन्तादेशः। दध्नि दधनि इति। 'विभाषा ङिश्योः' इत्यल्लोपविकल्प इति भावः। तदन्तस्यापीति। आङ्गत्वादिति भावः। अतिदध्नेति। दधि अतिक्रान्तं कुलमतिदधि। अत्रापि नपुंसकस्येति सम्बध्यते। ततश्च धाञः 'आदृगमहन' इति किप्रत्यये दधिशब्दस्य पुंस्त्वे दधिनेत्येव। नपुंसकस्येति श्रूयमाणमस्थ्यादिभिरेवान्वेति। तेनातिदध्ना ब्राह्मणेनेत्यादि सिद्धम्। इति इदन्ताः।

अथ ईदन्ता निरूप्यन्ते। सु ध्यायतीति, सु शोभना धीर्यस्येति वा विग्रहे सुधीशब्दस्य 'ह्रस्वो नपुंसके' इति ह्रस्वत्वे वारिवद्रूपाणीत्याह—सुधि सुधिनी इत्यादि। परत्वान्नुमा इयङ् बाध्यत इति भावः। सुधिया सुधिनेति। सुध्यातृत्वस्य शोभनज्ञानवत्त्वस्य वा प्रवृत्तिनिमित्तस्य पुंसि नपुंसके च एकत्वात् पुंवत्त्वविकल्पः। एवं प्रधीशब्दः। तत्र 'न भूसुधियोः' इति निषेधाभावात् 'एरनेकाचः' इति यण्। इति ईदन्ताः।

अथ उदन्ता निरूप्यन्ते। मध्विति। 'मधु मद्ये पुष्परसे' 'मधुर्वसन्ते चैत्रे च' इति कोशान्मधुशब्दस्य पुंनपुंसकयोः मद्यत्ववसन्तत्वादिरूपप्रवृत्तिनिमित्तभेदाद् न पुंवत्त्वविकल्पः। मृद्वीकाविकारवाचिनो मधुशब्दस्य तु नित्यनपुंसकत्वान्न पुंवत्त्वमिति विवेकः। सानुशब्दस्य स्नुर्वेति। 'पद्दन्' इति सूत्रे 'मांसपृतनासानूनां मांस्पृत्स्नवो

स्नूनि—सानूनि । प्रियक्रोष्टु । प्रियक्रोष्टुनी । तृज्वद्भावात्पूर्वविप्रतिषेधेन नुम् । प्रियक्रोष्टूनि । टादौ पुंवत्पक्षे प्रियक्रोष्ट्रा प्रियक्रोष्टुना । प्रियक्रोष्ट्रे प्रियक्रोष्टवे । अन्यत्र तृज्वद्भावात्पूर्वविप्रतिषेधेन नुमेव । प्रियक्रोष्टुना । प्रियक्रोष्टुने । 'नुमचिर' ( वा ४२७४ ) इति नुट् । प्रियक्रोष्टूनाम् ॥ इत्युदन्ताः । सुलु, सुलुनी, सुलूनि । पुनस्तद्वत् । सुल्वा, सुलुना । इत्यूदन्ताः ।

---

वाच्याः' इति वार्तिकादिति शेषः । स्नूनि सानूनीति । शसि रूपम् । शसादावेव स्नुविधेः । प्रभृतिग्रहणस्य प्रकारार्थत्वे सुटयपि स्नुर्भवति । अस्य च 'स्नुः प्रस्थः सानुरस्त्रियाम्' इति पुंनपुंसकत्वाद् भाषितपुंस्कत्वादस्यैव पुंवत्त्वविकल्पः । प्रियक्रोष्टु प्रियक्रोष्टुना इति । प्रियः क्रोष्टा यस्येति विग्रहः । असर्वनामस्थानत्वान्न तृज्वत्त्वम् । अथ जश्शसोः शिभावे सति सर्वनामस्थानत्वाद् नुमं बाधित्वा परत्वात् तृज्वत्त्वे प्राप्ते आह—तृज्वद्भावादिति । 'वृद्धयौत्व' इति वार्तिकादिति भावः । प्रियक्रोष्टूनीति । जश्शसोः शिभावे नुमि 'सर्वनामस्थाने च' इति दीर्घे रूपम् । न च नित्यत्वादेव नुम् सिद्धेः किं पूर्वविप्रतिषेधेनेति वाच्यम्, नित्यत्वान्नुमि कृतेऽपि 'यदागमाः' इति न्यायेन 'तृज्वत्क्रोष्टुः' इत्यस्य नुम्विशिष्टस्य ग्रहणापत्तौ पुनस्तृज्वत्त्वापत्तेः । पूर्वविप्रतिषेधमाश्रित्य तृज्वत्त्वं बाधित्वा नुमि कृते तु न पुनस्तृज्वत्त्वम्, विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायादित्यलम् । पुंवत्पक्षे इति । तत्रापि तृज्वत्त्वपक्ष इत्यर्थः । प्रियक्रोष्ट्रेति । पुंवत्त्वे तृज्वत्त्वे च सति रूपम् । अनपुंसकत्वान्न नुम् । प्रियक्रोष्टुनेति । पुंवत्त्वे, तदभावे च तृज्वत्त्वाभावे रूपम् । पुंवत्त्वाभावपक्षेऽपि नुमं बाधित्वा परत्वान्नात्वमेव । प्रियक्रोष्ट्रे इति । पुंवत्त्वे तृज्वत्त्वे यण् । अनपुंसकत्वान्न नुम् । प्रियक्रोष्टवे इति । पुंवत्त्वे तृज्वत्त्वाभावे रूपम् । अन्यत्रेति । पुंवत्त्वाभावपक्ष इत्यर्थः । प्रियक्रोष्टुनेति । पुंवत्त्वतृज्वत्त्वयोरभावे रूपम् । तथा ङयि त्रीणि रूपाणि । एवं ङसिङसोः । प्रियक्रोष्टुः । प्रियक्रोष्टोः । प्रियक्रोष्टुनः । प्रियक्रोष्ट्रोः । प्रियक्रोष्ट्रोः—प्रियक्रोष्टुनोः । आमि विशेषमाह—नुमचिरेति नुडिति । तृज्वत्त्वं नुमं च बाधित्वेति शेषः । पुंवत्त्वे तृज्वत्त्वं बाधित्वा नुट् । पुंवत्त्वाभावे तु तृज्वत्त्वं बाधित्वा नुम्, तदपि बाधित्वा नुडिति विवेकः । प्रियक्रोष्टरि-प्रियक्रोष्टौ-प्रियक्रोष्टुनि । भ्यामादौ हलि मधुवत् इत्युदन्ताः ।

अथ ऊदन्ता निरूप्यन्ते । सुल्विति । सुष्ठु लुनातीति क्विप् । 'ह्रस्वो नपुंसके' इति ह्रस्वः । सुलुनी इति । 'ओः सुपि' इति यणं बाधित्वा परत्वान्नुम् । सुल्वेति । शोभनलवनकर्तृत्वं प्रवृत्तिनिमित्तमेकमिति पुंवत्त्वविकल्पः । पुंवत्त्वे ह्रस्वाभावेऽघित्वाद् नाभावो न, नुमभावश्च 'ओः सुपि' इति यण् । पुंवत्त्वाभावपक्षे तु यणं बाधित्वा

धातृ धातृणी धातॄणि। हे धातः-हे धातृ। धात्रा। धातृणा। एवं ज्ञातृकर्त्रादयः। इत्यृदन्ताः॥ (३२३) एच इग्घ्रस्वादेशे १।१।४८॥ आदिश्यमानेषु ह्रस्वेषु एच इगेव स्यात्। प्रद्यु प्रद्युनि प्रद्यूनि। प्रद्युनेत्यादि। इह न पुंवत्। यदिगन्तं

---

नुम्, ङेप्रभृतिषु तु पुंवत्त्वाभावे 'वृद्ध्यौत्व' इति पूर्वविप्रतिषेधेन नुमि सुलुने, पुंवत्त्वे तु सुल्वे इत्यादि रूपद्वयम्। इत्यूदन्ताः॥

अथ ऋदन्ता निरूप्यन्ते। धातृ इति। दधातीति धातृ। 'न लुमता' इति निषेधादनङ् न। धातृणी इति। 'इकोऽचि' इति नुमि 'ऋवर्णान्नस्य' इति णत्वम्। धातॄणि इति। जश्शसोः शिभावे नुमि 'सर्वनामस्थाने च' इति दीर्घे णत्त्वम्। 'न लुमता' इति निषेधस्यानित्यत्वात् सम्बुद्धिनिमित्तको ह्रस्वस्य पक्षे गुण इत्याह—हे धातः हे धातृ इति। धारणकर्तृत्वरूपप्रवृत्तिनिमित्तैक्यात् टादावचि पुंवत्त्वविकल्प इत्याह-धात्रा-धातृणा इति। धात्रे-धातृणे। धातुः-धातृणः। धात्रोः-धातृणोः। 'नुमचिर' इति नुट्। धातॄणाम्। धातरि-धातृणि। इत्यृदन्ताः॥

अथ ओदन्ता निरूप्यन्ते। प्रकृष्टा द्यौः यस्येति बहुव्रीहौ प्रद्योशब्दस्य 'ह्रस्वो नपुंसके' इति ह्रस्वः प्राप्नुवन् एचां ह्रस्वाभावात् तेषां द्विस्थानत्वेन अ, इ, उ, ऋ, लृ, इत्येतेषां ह्रस्वानामन्तरतमत्वाभावाद् अन्यतरस्थानसाम्याश्रयेण अवर्णादिषु यस्य कस्यचिदनियमेन पर्यायेण वा प्राप्ताविदमारभ्यते। एच इक्। आदिश्यते इत्यादेशः। कर्मणि घञ्। तस्य ह्रस्वपदेन सह कर्मधारयः। विशेष्यस्यार्षः पूर्वनिपातः। आदेश इति निर्धारणसप्तमी। सौत्रमेकवचनम्। यदाह—आदिश्यमानेष्वित्यादिना। मध्ये इत्यपपाठः, तद्योगे षष्ठ्या एवौचित्यात्। इगेवेति। तेन अकारव्यावृत्तिः फलतीति भावः। यद्यपीकश्चत्वारः एचोऽप्येवम्, तथापि स्थान्यादेशानां यथासङ्ख्यं न भवति। न ह्ययमपूर्वविधिः किन्तु नियमविधिः। यथाप्राप्तमेव नियम्यते। एचां हि पूर्वभागः अवर्णसदृशः। उत्तरभागस्तु इवर्णोवर्णसदृशः। तत्र पूर्वभागसादृश्यमवर्णस्यास्ति। तस्य च इग्ग्रहणेन निवृत्तौ इवर्णसादृश्यमात्रमादाय एकारस्य ऐकारस्य च इवर्णः, उवर्णसादृश्यात् ओकारस्य औकारस्य च उवर्णः इति व्यवस्था न्यायप्राप्ता। यथाप्राप्तमेव च नियम्यत इति न यथासङ्ख्यम्। ततश्च प्रद्योशब्दे ओकारस्य उकारः ह्रस्व इत्यभिप्रेत्योदाहरति—प्रद्यु इत्यादि। ननु पुंनपुंसकयोः प्रकृष्टस्वर्गवत्त्वमेकमेव प्रवृत्तिनिमित्तमिति टादौ पुंवत्त्वविकल्पः कुतो नेत्यत आह—इह न पुंवदिति। कुत इत्यत आह—यदिगन्तमिति। प्रद्योशब्दः ओदन्तः पुंसि। प्रद्युशब्दस्तु उदन्तो नपुंसके। तथा च पुंसि प्रद्योशब्दस्य भाषितपुंस्कत्वेऽपि नपुंसके प्रद्युशब्दस्य तदपेक्षया भिन्नत्वेन भाषितपुंस्कत्वाभावान्न पुंवत्त्वमित्यर्थः। केचित्तु पुंसि यः प्रद्यो-

प्रद्यु इति तस्य भाषितपुंस्कत्वाभावात् । एवमग्रेऽपि ॥ इत्योदन्ताः ॥ प्ररि । प्ररिणी । प्ररीणि । प्ररिणा । एकदेशविकृतस्यानन्यत्वात् 'रायो हलि' (सू २८६) इत्यात्वम् । प्राराभ्याम् । प्रराभिः । 'नुमचिर—' (वा ४३७४) इति नुट्यात्वे प्रराणाम् इति माधवः । वस्तुतस्तु सन्निपातपरिभाषया नुट्यात्वं न । 'नामि' (सू २०९) इति दीर्घस्त्वारम्भसामर्थ्यात्सन्निपातपरिरिभाषां बाधत इत्युक्तम् । प्ररीणाम् ॥ इत्यैदन्ताः ॥ सुनु । सुनुनी । सुनूनि । सुनुना । सुनुने । इत्यादि । ॥ इत्यौदन्ताः ॥

इत्यजन्तनपुंसकलिङ्गप्रकरणम् ।



---

शब्दः ओदन्तः स एवेदानीं नपुंसकः, तस्य ह्रस्वान्तत्वेऽपि एकदेशविकृतस्यानन्यत्वात् । अतः पुंवत्त्वविकल्पोऽस्त्येवेत्याहुः । एवमग्रेऽपीति । प्ररि, सुनु, इत्यादावपीत्यर्थः । इत्योदन्ताः ।

अथ ऐदन्ता निरूप्यन्ते । एकारान्तस्योदाहरणं तु स्मृतः इः येन सः स्मृतेः । सु शोभनः स्मृतेर्यस्य तत् सुस्मृति इत्यादि बोध्यम् । प्ररीति । प्रकृष्टो राः धनं यस्य इति बहुव्रीहौ प्ररैशब्दः । तस्य नपुंसकह्रस्वत्वेन इकारः । सुटि वारिवत् । सोर्लुक्त्वात् । 'रायो हलि' इत्यात्वं न, टादावचि पुंवत्त्वविकल्पः प्रद्युशब्दवत् । भ्यामादौ हलि विशेषमाह—रायो हलीत्यात्वमिति । ननु रैशब्दस्य ऐदन्तस्य विहितमात्वं कथमिदन्तस्येत्यत आह—एकदेशविकृतस्यानन्यत्वादिति । आमि विशेषमाह—नुमचिरेति । नुटि 'रायो हलि' इत्यात्वे प्रराणामित्यन्वयः । ननु प्ररि आमिति स्थिते नुटं बाधित्वा परत्वान्नुमि तस्याङ्गभक्तत्वाद् हलादिविभक्त्यभावात् कथमात्वमित्यत आह—नुमचिरेति । पूर्वविप्रतिषेधान्नुमं बाधित्वा नुट्यात्वं निर्बाधमिति भावः । सन्निपातेति । ह्रस्वान्तत्वमुपजीव्य प्रवृत्तस्य नुटस्तद्विघातकमात्वं प्रति निमित्तत्वासम्भवाद् इति भावः । ननु तर्हि ह्रस्वान्तत्वमुपजीव्य प्रवृत्तस्य नुटः तद्विघातकं 'नामि' इति दीर्घं प्रति कथं निमित्तत्वमित्यत आह—नामीति दीर्घस्त्विति । इत्युक्तमिति । रामशब्दाधिकारे इति शेषः । इत्यैदन्ताः ।

अथ औदन्ता निरूप्यन्ते । सु शोभना नौर्यस्येति विग्रहे बहुव्रीहौ 'ह्रस्वो नपुंसके' इति ह्रस्वः उकार इति मत्वाह—सुनु इति । इत्यौदन्ताः ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायाम् अजन्तनपुंसकलिङ्गनिरूपणं समाप्तम् ।



# अथ हलन्तपुँल्लिङ्गप्रकरणम् ॥ ११ ॥

(३२४) हो ढः ८।२।३१। ॥ हस्य ढः स्याज्झलि पदान्ते च । 'हल्ङ्याप्–' ( सू. २५२ ) इति सुलोपः । पदान्तत्वाद्धस्य ढः । जश्त्वचर्त्वे । लिट्–लिड्, लिहौ, लिहः । लिहम् लिहौ लिहः । लिहा लिड्भ्याम् इत्यादि । लिट्त्सु–लिट्सु । (३२५) दादेर्धातोर्घः ८।२।३२। उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च । उपदेशे किम् । अधोग् इत्यत्र यथा स्यात् । दामलिहमात्मन इच्छति दाम-

---

अथ हकारान्ता निरूप्यन्ते । तत्र वर्णसमाम्नायक्रममनुसृत्य हकारान्तमादौ निरूपयितुमाह—हो ढः । ह इति षष्ठ्यन्तम् । 'झलो झलि' इत्यतो झलीत्यनुवर्तते । पदस्येत्यधिकृतम् । 'स्कोः संयोगाद्योरन्ते च' इत्यतोऽन्ते इत्यनुवर्तते । तदाह–हस्येति । झलीति । झलि परतः पूर्वस्य हकारस्य, पदान्ते विद्यमानस्य हकारस्य चेत्यर्थः । नच डकार एव कुतो न विहित इति वाच्यम्, 'वा द्रुह' इत्यत्र वक्ष्यमाणत्वात् । पदान्तत्वादिति । सुलोपे सति प्रत्ययलक्षणमाश्रित्य झल्परत्वाच्चेत्यपि बोध्यम् । लिंडिति । 'लिह आस्वादने' क्विप् । हल्ङ्यादिना सुलोपः । हस्य ढत्वे 'वाऽवसाने' इति चर्त्वविकल्प इति भावः । लिड्भ्यामिति । 'स्वादिष्वसर्वनामस्थाने' इति पदत्वात् 'झलां जशोऽन्ते' इति जश्त्वमिति भावः । इत्यादीति । लिड्भिः । लिहे । लिड्भ्यः । लिहः । लिहः । लिहोः । लिहाम् । लिट्त्सु इति । लिह् सु इति स्थिते हस्य ढः । तस्य जश्त्वेन डः । 'खरि च' इति चर्त्वस्यासिद्धत्वात्ततः प्रागेव 'डः सि' इति धुट् । ततो डस्य चर्त्वेन टः । धुटश्चर्त्वसम्पन्नस्य तकारस्यासिद्धत्वात् 'चयो द्वितीयाः' इति न भवति । 'न पदान्तात्' इति तकारस्य ष्टुत्वं न । लिट्सु इति । धुडभावे रूपम् । हस्य ढः । तस्य जश्त्वेन डः । तस्य चर्त्वेन टः । तस्यासिद्धत्वात् 'चयो द्वितीयाः' इति न । 'न पदान्तात्' इति सस्य न ष्टुत्वमिति भावः ।

दुह्धातोः क्विबन्तात्सुलोपे दुह् इत्यत्र ढत्वे प्राप्ते ढत्वं क्वचिदपवदति—दादेर्धातोः । 'हो ढः' इत्यतो ह इति षष्ठ्यन्तमनुवर्तते । झलि इति पदस्येति, अन्ते इति च पूर्ववदनुवर्तते । धातोरित्यावर्तते । एकं धातुग्रहणमवयवषष्ठ्यन्तं हकारेऽन्वेति—धातोरवयवस्य हस्येति । दादेरित्येतत्तु धातोरित्यत्र सामानाधिकरण्येनान्वेति । दः आदिर्यस्येति बहुव्रीहिः, धातोरिति द्वितीयं धातुग्रहणं तु धातोरुपदेशकालं लक्षयति ततश्च फलितमाह—उपदेशे इत्यादिना । धातूपदेशकाले यो दकारादिर्धातुः तदवयवस्य हस्येत्यर्थः । आवृत्तधातुग्रहणलब्धोपदेशग्रहणस्य फलं पृच्छति—उपदेशे किमिति । अधोगिति । 'दुह प्रपूरणे' लङ्, अडागमः, तिप्, शप्, तस्य लुक्, लघूपधगुणः, हल्ङ्यादिना तिपो लोपः, 'दादेः' इति हस्य घः, 'एकाचो बशः' इति भष्भावेन

लिह्यति। ततः क्विपि दामलिट्। अत्र मा भूत्। (३२६) **एकाचो बशो भष् झषन्तस्य स्ध्वोः ८।२।३७॥** धातोरवयवो य एकाज् झषन्तस्तदवयवस्य बशः स्थाने भष् स्यात्सकारे ध्वशब्दे पदान्ते च। एकाचो धातोः इति सामानाधिकरण्ये-नान्वये त्विह न स्यात्। गर्दभमाचष्टे गर्दभयति। ततः क्विप्, णिलोपः। गर्धप्।

दकारस्य धकारः। 'वाऽवसाने' इति चर्त्वजश्त्वे इति भावः। यथा स्यादिति। यथेति प्राप्तियोग्यतायाम्। घत्वमत्र प्राप्तियोग्यम्, तच्च उपदेशग्रहणे सत्येव स्यादित्यर्थः। घत्वप्रवृत्तिवेलायां दुहधातोर्दकारादित्वं नास्ति कृते अडागमे 'यदागमास्तद्ग्रहणेन गृह्यन्ते' इत्यकारादित्वात्। अतोऽत्र घत्वं न स्यादित्यव्याप्तिः स्यात्। उपदेशग्रहणे तु नायं दोषः घत्वप्रवृत्तिवेलायां दुहेरत्र दकारादित्वाभावेऽपि धातूपदेशकाले दादि-त्वादिति भावः। तदेवमव्याप्तिपरिहारफलमुक्त्वा अतिव्याप्तिपरिहारफलमाह-दामेति। ग्रीवासु गवादिपशुबन्धनार्थरज्जुपर्यायो दामशब्दः। 'लिह् आस्वादने' दाम लेढीति दामलिट्। तमात्मन इच्छतीत्यर्थे 'सुप आत्मनः क्यच्' इति क्यचि 'सनाद्यन्ताः' इति धातुत्वात् तिपि शपि दामलिह्यतीति रूपम्। ततः क्विपीति। क्यजन्तात् कर्तरि क्विपि अल्लोपे यलोपे च दामलिहशब्दात् सोर्लोपे 'हो ढः' इति ढत्वे 'वाऽवसाने' इति चर्त्वविकल्पे दामलिट्-दामलिड् इति रूपमित्यर्थः। अत्र मा भूदिति। माङि लुङ्। सर्वलकारापवादः। अत्र घत्वं न भवेदित्येतदर्थमप्युपदेशग्रहणम्, कृते तु तस्मिन् घत्वमत्र न भवति। धातूपदेशे दामलिह् इति सुब्धातोः पाठाभावादिति भावः।

तथा च प्रकृतोदाहरणे सौ दुघ् इति स्थिते। एकाचो बशो। स् च ध्व् च स्ध्वौ तयोरिति विग्रहः। बश इति स्थानषष्ठी। एकाच इत्यवयवषष्ठी। एकः अच् यस्येति विग्रहः। झषन्तस्येत्यस्य शब्दस्येति विशेष्यम्। एकाच्कस्य झषन्तशब्दस्यावयवो यो बश् तस्य भष् स्यादित्यन्वयः। 'दादेर्धातोः' इत्यतो धातोरित्यवयवषष्ठ्यन्तमनु-वर्तते। तच्च झषन्तशब्देनान्वेति। पदस्येत्यधिकृतम्। 'स्कोः संयोगाद्योः' इत्यतः अन्ते चेत्यनुवर्तते। तदाह—धातोरवयव इत्यादिना। ननु सम्भवति सामानाधिकरण्ये वैयधिकरण्याश्रयणस्यान्याय्यत्वात् एकाच् झषन्तो यो धातुः तदवयवस्य बश इत्ये-वान्वय उचित इत्यत आह—एकाचो धातोरित्यादि। गर्दभयतीति। 'तत्करोति तदाचष्टे' इति णिजन्तस्य 'सनाद्यन्ताः' इति धातुत्वात्तिबादि। ततः क्विबिति। गर्दभि इति ण्यन्तात् कर्तरि क्विबित्यर्थः। कपावितौ। वेर्लोपः। णिलोप इति। 'णेरनिटि' इत्य-नेनेति शेषः। गर्धप् इति। गर्दभ् इत्यस्मात् सुः,हल्ङ्यादिलोपः। 'एकाचो बशः' इति दस्य धः। 'वाऽवसाने' इति चर्त्वम्। एकाचो धातोः झषन्तस्येत्यन्वये गर्दभ् इत्यस्य सुब्धातोरनेकाच्त्वात् दकारस्य भष्भावो न स्यात्। धात्ववयवस्य झषन्तस्येत्यन्वये तु दभ् इति एकाचो झषन्तस्य धात्ववयवत्वात् तदवयवस्य दस्य भष्भावो निर्बाध

झलीति निवृत्तम्, स्ध्वोर्ग्रहणसामर्थ्यात्। तेनेह न। दुग्धम्। दोग्धा। व्यपदेशिवद्भावेन धात्ववयवत्वाद्भष्भावः। जश्त्वचर्त्वे। धुक्—धुग्, दुहौ, दुहः। घत्वचर्त्वे। धुक्षु (३२७) वा द्रुहमुहष्णुहष्णिहाम् ८।२।३३। एषां हस्य वा घः स्याज्झलि पदान्ते च। पक्षे ढः। ध्रुक्-ध्रुग्-ध्रुट् ध्रुड्, द्रुहौ, द्रुहः। ध्रुग्भ्याम्-

---

इति भावः। अत्र प्राचीनैः झलीत्यनुवर्तितम्। तदयुक्तमित्याह—झलीति निवृत्तमिति। सामर्थ्यादिति। झलीत्यनुवृत्तौ तद्वैयर्थ्यादिति भावः। ननु झलीत्यस्यानवृत्तिरेवास्तु स्ध्वोरित्येव न क्रियतामित्यत आह—तेनेति। झलीत्यननुवर्तनेनेत्यर्थः। दुग्धमिति। दुहेः क्तः। कित्वात् न लघूपधगुणः। 'दादेः' इति हस्य घः। 'झषस्तथोर्धोऽधः' इति तकारस्य धः। 'झलां जश् झशि' इति घस्य गः। दुग्धमिति रूपम्। दोग्धेति। दुहेस्तृच्। लघूपधगुणः। 'दादेः' इति हस्य घः। 'झषस्तथोः' इति तकारस्य धः। 'ऋदुशनस्' इत्यनङ्। 'सर्वनामस्थाने च' इति दीर्घः। हल्ङ्यादिलोपः। 'न लोपः' इति नकारलोपः, दोग्धा इति रूपम्। झलीत्यनुवृत्तौ इहोभयत्रापि घत्वे कृते भष्भावः स्यादिति भावः।

ननु दुहेः क्विबन्तात् सोर्लोपे 'दादेः' इति घत्वे कृते दुघ् इति झषन्तमेकाच्कम्। तस्य धातुत्वात् धात्ववयवत्वाभावात् कथमिह दकारस्य भष्भावेन धकारः स्यादित्यत आह—व्यपदेशिवद्भावेनेति। विशिष्टः अपदेशः व्यपदेशः मुख्यव्यवहारः, सोऽस्यास्तीति व्यपदेशी, तेन तुल्यं व्यपदेशिवत्। धातावेव धात्ववयवत्वव्यवहारो गौणः, राहोश्शिरः इत्यादिवदिति भावः। इदं च 'आद्यन्तवदेकस्मिन्' इति सूत्रे भाष्ये स्पष्टम्। धुक् धुगिति। क्विपः प्राक् प्रवृत्ताया धातुसञ्ज्ञाया अनपायाद् 'दादेः' इति घत्वे कृते झषन्तत्वात् भष्भावे चर्त्वविकल्प इति भावः। दुहौ दुहः। दुहम् दुहौ दुहः। दुहा। भ्यामादौ 'दादेः' इति घत्वे कृते स्वादिष्विति पदत्वात् पदान्तत्वप्रयुक्तो भष्भावः। 'झलां जशोऽन्ते' इति जश्त्वम्। धुग्भिः। दुहे धुग्भ्याम् धुग्भ्यः। दुहः। दुहः दुहोः दुहाम्। दुह् सु इति स्थिते प्रक्रियां दर्शयति—घत्वेति। घत्वे कृते भष्भावे 'झलां जशोऽन्ते' इति जश्त्वेन गकारः। तस्य 'खरि च' इति चर्त्वस्यासिद्धत्वात् 'आदेशप्रत्यययोः' इति षत्वे कृते चर्त्वे धुक्षु इति रूपमिति भावः। द्रुह् जिघांसायाम्, मुह् वैचित्त्ये, ष्णुह् उद्गिरणे, ष्णिह् प्रीतौ एभ्यः क्विबन्तेभ्यः सोर्लोपे द्रुहेर्दादित्वाद् ढत्वं बाधित्वा नित्यं घत्वे प्राप्ते इतरेषामदादित्वादप्राप्ते घत्वे इदमारभ्यते। वा द्रुह। 'दादेः' इत्यतो घ इत्यनुवर्तते। झलीति पदस्येति अन्ते इति। पूर्ववदनुवर्तते। तदाह—एषामिति। द्रुहादीनां चतुर्णामित्यर्थः। ध्रुक्—ध्रुगिति। घत्वपक्षे भष्भावे चर्त्वविकल्प इति भावः। ध्रुट्—ध्रुडिति। घत्वाभावपक्षे 'हो ढः' इति ढत्वे

ध्रुड्भ्याम् । ध्रुक्षु-ध्रुट्त्सु-ध्रुट्सु । एवं मुहष्णुहष्णिहाम् । ( ३२८ ) **इग्यणः सम्प्रसारणम् १।१।४५॥** यणः स्थाने प्रयुज्यमानो य इक् स सम्प्रसारणसंज्ञः स्यात् । ( ३२९ ) **वाह ऊठ् ६।४।१३२॥** भस्य वाहः सम्प्रसारणमूठ् स्यात् । ( ३३० ) **सम्प्रसारणाच्च ६।१।१०८॥** सम्प्रसारणादचि पूर्वरूपमेकादेशः स्यात् ।

---

भष्भावे चर्त्वविकल्पः । अत्र भष्भावार्थमेव 'हो ढः' इति सूत्रे ढ एव विहितः, न तु डः । तथा सति झषन्तत्वाभावाद् भष्भावो न स्यात् । अचि सुपि द्रुहम् इत्यादि । ध्रुग्भ्यामिति । घत्वपक्षे भष्भावः । ध्रुड्भ्यामिति । घत्वाभावपक्षे ढत्वे जश्त्वे रूपम् । एवं भिसि भ्यसि च रूपद्वयम् । द्रुहः । द्रुहः द्रुहोः द्रुहाम् । ध्रुक्षिवति । घत्वे भष्भावे 'आदेशप्रत्यययोः' इति षत्वे 'खरि च' इति चर्त्वम् । ध्रुट्त्स्विति । घत्वाभावपक्षे ढत्वे, भष्भावे, ढस्य जश्त्वे, धुटि चर्त्वे डस्य चर्त्वम् । चर्त्वस्यासिद्धत्वात् 'चयो द्वितीयाः' इति तकारस्य थो न भवति । 'न पदान्तात्' इति ष्टुत्वं न । ध्रुट्स्विति । धुडभावे रूपम् । हस्य ढः, भष्भावः, ढस्य जश्त्वेन डः, तस्य चर्त्वेन टः । एवमिति । भष्भाववर्जमिति शेषः ।

विश्वं वहतीत्यर्थे 'भजो ण्विः' इत्यतो ण्विरित्यनुवृत्तौ 'वहश्च' इति ण्विः । णकार इत् । वेर्लोपः । 'अत उपधायाः' इति वृद्धिः । उपपदसमासः । विश्ववाह् इति रूपम् । ततस्सोर्हल्ङ्यादिति लोपे 'हो ढः' इति ढत्वे 'वाऽवसाने' इति चर्त्वविकल्पे विश्ववाट्-विश्ववाड्, विश्ववाहौ, विश्ववाहः । विश्ववाहम् विश्ववाहौ इति सुटि रूपाणि सुगमत्वादुपेक्ष्य शसादौ अचि संप्रसारणकार्यं वक्ष्यन् सम्प्रसारणसंज्ञां दर्शयति—इग्यणः सम्प्रसारणम् । यणः स्थाने इति । व्याख्यानात् स्थानार्थलाभः । 'षष्ठी स्थानेयोगा' इति तु नेह भवति, अनुवादे परिभाषाणामनुपस्थितेः षष्ठीश्रुतौ सर्वत्र व्याख्यानादेव स्थानार्थलाभसम्भवात् 'षष्ठी स्थानेयोगा' इत्येतत् 'निर्दिश्यमानस्यादेशा भवन्ति' इत्येतदर्थमिति भाष्ये सिद्धान्तितत्वाच्च । संप्रसारणसंज्ञ इति । ततश्च 'वसोः सम्प्रसारणम्' 'वचिस्वपियजादीनाम्' इत्यादौ सम्प्रसारणश्रुतौ यण्स्थानिक इगुपस्थितो भवति । तत्रान्तरतम्याद्यस्य इकारः, वकारस्य उकारः, रेफस्य ऋकारः, लस्य लृकार इति ज्ञेयम् । वाह ऊठ् । 'भस्य' इत्यधिकृतम् । 'वसोः सम्प्रसारणम्' इत्यतः सम्प्रसारणमित्यनुवर्तते । तच्च ऊठ् इत्यनेनान्वेति । तदाह—भस्येत्यादिना । सम्प्रसारणमिति । तेन वाहो यो यण् वकारस्तस्य ऊठ् इति लभ्यते । सम्प्रसारणमित्यननुवृत्तौ 'अलोऽन्त्यस्य' इति हकारस्य स्यात् । तदनुवृत्तौ तु ऊठो यण्स्थानिकत्वलाभाद् नालोऽन्त्यस्येति भवति । विश्व ऊ आह् अस् इति स्थिते । सम्प्रसारणाच्च । 'इको यणचि' इत्यतः अचीति 'अमि पूर्वः' इत्यतः पूर्व इति चानुवर्तते ।

'एत्येधत्यूठ्सु' ( सू ७२ ) । विश्वौहः । विश्वौहेत्यादि । छन्दस्येव ण्विः-इति पक्षे णिजन्ताद्विच् । ( ३३१ ) चतुरनडुहोरामुदात्तः ७।१।९८।। अनयोराम् स्यात्सर्वनामस्थाने परे, स चोदात्तः । (३३२) सावनडुहः ७।१।८२।। अस्य नुम्

'एकः पूर्वपरयोः' इत्यधिकृतम् । तदाह—सम्प्रसारणादित्यादिना । विश्व ऊह् अस् इति स्थिते आद्गुणमाशङ्क्याह—एत्येधत्यूठ्स्विति । अनेन गुणापवादो वृद्धिरिति शेषः । विश्वौहः । विश्वौहा । इत्यादीति । विश्ववाड्भ्याम् । विश्ववाड्भिः । विश्ववाड्भ्यः । विश्वौहे । विश्वौहः । विश्वौहः । विश्वौहोः । विश्वौहाम् । विश्ववाट्त्सु विश्ववाट्सु ।

ननु वहश्चेति ण्विविधौ 'छन्दसि सहः' इत्यतः छन्दसीति केचिदनुवर्तयन्ति । तन्मते विश्ववाह्शब्दस्य लोके कथं प्रयोग इत्यत आह—छन्दस्येव ण्विरिति पक्षे णिजन्ताद्विजिति । विश्वं वाहयतीत्यर्थे वाह् इ इति ण्यन्तात् 'अन्येभ्योऽपि दृश्यते' इति विचि 'नेड्वशि कृति' इति इडभावे णिलोपे अपृक्तलोपे उपपदसमासे विश्ववाह्शब्दो लोके प्रयोगार्हः । किन्तु तस्य ऊठ् न भवति, 'अचः परस्मिन्' इति णिलोपस्य स्थानिवत्त्वेन शसि तस्य भत्वाभावात् । वाहयतेः क्विपि विश्ववाह्शब्दस्य तु ऊठ् निर्बाध एव, 'क्वौ लुप्तम्' इति णिलोपस्य स्थानिवत्त्वाभावेन तस्य भत्वानपायात् । अत एव 'विभाषा पूर्वाह्णापराह्णाभ्याम्' इति सूत्रे प्रष्ठौहः आगतं प्रष्ठवाड् रूपमिति लौकिकविग्रहवाक्ये 'प्रष्ठौहः' इति प्रयोगः संगच्छते । क्वचित् पुस्तके 'छन्दस्येव ण्विरिति प्रामाणिकाः' इति पठ्यते । 'कव्यपुरीष' इत्याद्युत्तरसूत्रे तदनुवृत्तेरावश्यकत्वादिति तदाशयः ।

अनः शकटं वहतीत्यर्थे अनसि वहेः 'अनसो डश्च' इति क्विप्, सस्य डश्च । 'वचिस्वपियजादीनां किति' इति यजादित्वाद् वकारस्य सम्प्रसारणम् उकारः । 'संप्रसारणाच्च' इति पूर्वरूपम् । अनडुह् इति रूपम् । ततः सुबुत्पत्तिः । अनडुह् स् इति स्थिते । चतुरनडुहोः । अनयोरिति । चतुरनडुहोरित्यर्थः । सर्वनामस्थान इति । 'इतोऽत्सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इत्यनुवृत्तेरिति भावः । आमि मकार इत् । मित्त्वादन्त्यादचः परः । उकारस्य यण् वकारः । अनड्वाह् स् इति स्थिते । सावनडुहः । अस्येति । अनडुह्शब्दस्येत्यर्थः । नुम् स्यादिति । 'आच्छीनद्योर्नुम्' इत्यतो नुमित्यनुवृत्तेरिति भावः । नुमि मकार इत् । उकार उच्चारणार्थः । मित्त्वादन्त्यादचः परः । अनड्वान् ह् स् इति स्थितम् । ननु आम्नुमौ एतौ मित्त्वादन्त्यादचः उकारात् परौ प्राप्तौ । तत्र 'चतुरनडुहोः' इत्याम् सर्वनामस्थाननिमित्तकः सामान्यविहितः । 'सावनडुहः' इति नुम् तु सर्वनामस्थानविशेषे सौ विहितत्वाद्विशेषविहितः । स च निरवकाशत्वात् सामान्यविहितमामं बाधेत, सोरन्यत्राम्विधेश्चरितार्थत्वात् । तथा च

स्यात्सौ परे। 'आत्' इत्यधिकारादवर्णात्परोऽयं नुम्। अतो विशेषविहितेनापि नुमा आम् न बाध्यते। अमा च नुम् न बाध्यते। सोर्लोपः। नुम्विधिसामर्थ्यात् 'वसु-

---

अनड्वुन् इति स्यात्। अनड्वान् इति न स्यात्। किञ्च सम्बुद्धौ हे अनडुह् स् इति स्थिते 'अम् सम्बुद्धौ' इत्यमागमः आमपवादोऽनुपदमेव वक्ष्यते। तत्र 'सावनडुहः' इति नुमपि प्राप्तः। स च सम्बुद्धावसम्बुद्धौ च विहितत्वात् सामान्यविहितः। 'अम् सम्बुद्धौ' इत्यम् तु सम्बुद्धावेव विहितत्वाद् विशेषविहितः। स च निरवकाशत्वात् सामान्यं विहितं नुमं बाधेत, असम्बुद्धौ सौ नुम्विधेश्चरितार्थत्वात्। ततश्च हे अनड्वन्निति न स्यात्। 'हो ढः' इति ढत्वे हे अनड्वट् इति स्यादित्या शङ्कयाह—आदित्यधिकारादित्यादि, नुम् न बाध्यत इत्यन्तम्। 'सावनडुहः' इति नुम्विधौ तावत् 'आच्छीनद्योः' इत्यत आदिति पञ्चम्यन्तमनुवर्तते। अतः अनडुहः अवर्णात् परो नुमिति लाभात् विशेषविहितेनापि 'सावनडुहः' इति नुमा 'चतुरनडुहोः' इति सामान्यविहितः आम् न बाध्येत, अवर्णात् परत्वेन विधीयमानं नुमं प्रति आम उपजीव्यत्वात् उपजीव्योपजीवकयोर्विरोधाभावेन बाध्यबाधकभावविरहात्, प्रत्युत आमभावे नुमः प्रवृत्त्यसम्भवात्। तथा 'अम् सम्बुद्धौ' इत्यमा च विशेषविहितेन 'सावनडुहः' इति नुम् न बाध्यते। नुम उपजीवकत्वेन विरोधाभावात्, प्रत्युत अमभावे नुमः प्रवृत्त्यसम्भवादित्यर्थः।

ननु 'सावनडुहः' इति नुम्विधौ आदित्यनुवर्ततां नाम। तथापि आमुपजीवकत्वं नुमो न लभ्यते अनडुहि नुमो नकाराकारात् परत्वेऽपि आदित्यनुवृत्तेरविरोधादिति चेद्, मैवम्—'सावनडुहः' इति नुम्विधौ मित्त्वादन्त्यादच इत्युपस्थितम्। तत्र च आदित्यनुवृत्तमन्वेति। ततश्चानडुहि यः अन्त्यरूपः अवर्णः तस्मात् परो नुमिति लभ्यते। नकाराकारस्तु नैवंविध इत्यामुपजीवकत्वं नुमो निर्बाधमेव। एवं सम्बुद्धौ अमुपजीवकत्वमपि ज्ञेयम्। क्वचित्पुस्तके 'आमा च नुम् न बाध्यत' इति पठ्यते। तत्रेयं योजना। ननु बह्वनड्वांहि कुलानीत्यत्र 'नपुंसकस्य झलचः' इति नुमपेक्षया परत्वादाम् स्यात्। कृते त्वामि पुनर्नुम् न भवति, 'विप्रतिषेधेन यद्बाधितं तद्बाधितमेव' इति न्यायादित्यत आह—आमा च नुम् न बाध्यत इति। 'पुनः प्रसङ्गविज्ञानात् सिद्धम्' इति क्वचिद्विप्रतिषेधेन बाधितस्य पुनरुन्मेषादामि कृतेऽपि 'नपुंसकस्य झलचः' इति नुम् निर्बाध इति भावः। सोर्लोप इति। अनड्वान् ह् स् इत्यत्र हल्ङ्यादिनेति शेषः। ननु कृते सुलोपे हकारस्य संयोगान्तलोपे नुमो नकारस्य पदान्तत्वाद् 'वसुस्रंसुध्वंस्वनडुहां दः' इति दत्वं कुतो न स्यादित्यत आह—नुम्विधीति। यदि ह्यत्र नुमो नस्य दत्वं स्यात्, तर्हि अनड्वाह् इत्यत्र नुमभावेऽपि हस्य दत्वेनैव अनड्वाद् इति सिद्धेः नुम्विधिरनर्थकः स्यात्। अतो नुमो नस्य दत्वं नेति

स्रंसु—' ( सू ३३४ ) इति दत्वं न। संयोगान्तलोपस्यासिद्धत्वान्नलोपो न। अनड्वान्। (३३३) अम् सम्बुद्धौ ७।१।९९॥ चतुरनडुहोरम् स्यात्सम्बुद्धौ। आमोऽपवादः। हे अनड्वन्। अनड्वाहौ। अनड्वाहः। अनडुहः। अनडुहा। (३३४) वसुस्रंसुध्वंस्वनडुहां दः ८।२।७२॥ सान्तवस्वन्तस्य स्रंस्वादेश्च दः स्यात्पदान्ते। अनडुद्भ्यामित्यादि। सान्त इति किम्। विद्वान्। पदान्त इति किम्। स्रस्तम्। ध्वस्तम्। (३३५) सहेः साडः सः ८।३।५६॥ साड्रूपस्य

विज्ञायत इति भावः। ननु अनड्वान् ह् स् इत्यत्र सुलोपे संयोगान्तलोपे च कृते नकारस्य प्रातिपदिकान्तत्वात् पदान्तत्वाच्च 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः किं न स्यात्। न च नुम्विधिसामर्थ्यान्नात्र नलोप इति वाच्यम्, नलोपाभावस्थले सम्बुद्धौ 'हे अनड्वन्' इत्यत्र नुम्विधेश्चरितार्थत्वात्। तत्र 'न ङिसम्बुद्ध्योः' इति नलोपप्रतिषेधादित्यत आह—संयोगान्तेति। हकारलोपस्यासिद्धत्वे सति नकारस्य प्रातिपदिकान्तत्वाभावात् पदान्तत्वाभावाच्च नलोपो नेत्यर्थः। अनड्वानिति। अनडुह् स् इति स्थिते आम्, यण्, नुम्, सुलोपः संयोगान्तलोपश्च। अथ सम्बुद्धौ अनडुह् स् इति स्थिते 'चतुरनडुहोः' इत्यामागमे प्राप्ते। अम् सम्बुद्धौ। 'चतुरनडुहोः' इत्यनुवर्तते। तदाह—चतुरनुडुहोरिति। अमो मकार इत्। मित्त्वादन्त्यादचः परः। हे अनड्वन्निति। अम्, यण्, नुम्, सुलोपः, संयोगान्तलोपश्च। अनड्वाहाविति। सर्वनामस्थानत्वादाम्। नुम् तु न। तस्य सावेव विधानात्। अनडुह इति। शसादावचि अविकृत एवानडुह्शब्द इति भावः।

भ्यामादौ हलि विशेषमाह—वसुस्रंसु। वसुः प्रत्ययः तेन तदन्तं गृह्यते। 'स्रंसु ध्वंसु अवस्रंसने' इति धातू। 'ससजुषो रुः' इत्यतः स इति लुप्तषष्ठीकमनुवृत्तम्। तेन च वसुर्विशेष्यते। तदन्तविधिः। सान्तत्वं स्रंसुध्वंस्वोर्न विशेषणम्, अव्यभिचारात्। नाप्यनडुहः, असम्भवात्। पदस्येत्यधिकृतं बहुवचनान्तत्वेन विपरिणम्यते। 'अलोऽन्त्यस्य' इति तदन्तस्य भवति। फलितमाह—सान्तेत्यादिना। यथासम्भवं रुत्वढत्वयोरपवादः। अनडुद्भ्यामिति। 'स्वादिष्वसर्वनामस्थाने' इति पदत्वादिति भावः। इत्यादीति। अनडुद्भिः। अनडुद्भ्यः। अनडुहे। अनडुहः। अनडुहः। अनडुहोः। अनडुहाम्। दत्वे 'खरि च' इति चर्त्वम्—अनडुत्सु। सान्तेति किमिति। वसोरपि सान्तत्वाव्यभिचारात्प्रश्नः। विद्वानिति। विद्वस् स् इति स्थिते 'अत्वसन्तस्य' इति दीर्घे 'उगिदचाम्' इति नुमि सुलोपे संयोगान्तलोपे च रूपम्। अत्र वसोः सकारान्तत्वाभावान्न दत्वमिति भावः। स्रस्तं ध्वस्तमिति। क्तप्रत्ययान्तम्। अत्र पदान्तत्वाभावान्न दत्वम्। विद्वांसौ, अनड्वाहावित्याद्यपि प्रत्युदाहार्यम्। तुरासाह्—

सहेः सस्य मूर्धन्यादेशः स्यात्। तुराषाट्—तुराषाड् तुरासाहौ तुरासाहः। तुराषाड्भ्यामित्यादि। तुरं सहत इत्यर्थे 'छन्दसि सहः' ( सू ३४०९ ) इति ण्विः। लोके तु साहयतेः क्विप्। 'अन्येषामपि—' ( सू ३५३९ ) इति पूर्वपदस्य दीर्घः। ॥ इति हान्ताः ॥ ( ३३६ ) दिव औत् ७।१।८४॥ दिविति प्रातिपदिकस्य

---

शब्दात् सोर्हल्ङ्यादिलोपे हस्य ढत्वे कृते विशेषमाह—सहेः साडः सः। 'इक्श्तिपौ धातुनिर्देशे' इति 'षह मर्षणे' इति धातोरिक्प्रत्यये 'धात्वादेः षः सः' इति षस्य सत्वे सहिशब्दः। षह्धातोरित्यर्थः। साड् इति कृतढत्वडत्ववृद्धेरनुकरणम्। तदाह—साड्रूपस्येति। मूर्धन्येति। 'अपदान्तस्य मूर्धन्यः' इति तदधिकारादिति भावः। मूर्धनि भवः मूर्धन्यः, मूर्धस्थानक इत्यर्थः। तुराषाट्, तुराषाडिति। सुलोपे ढत्वे, जश्त्वेन डत्वे सस्य मूर्धन्यः षकारः, विवृतप्रयत्नसाम्यात्। 'वाऽवसाने' इति चर्त्वपक्षेऽपि मूर्धन्यो भवत्येव, सूत्रे साड इति कृतजश्त्वनिर्देशस्य पदान्तोपलक्षणत्वादिति भावः। तुरासाहाविति। अपदान्तत्वान्न मूर्धन्य इति भावः। इत्यादीति। तुराषाड्भिः। तुराषाड्भ्यः। तुरासाहे। तुरासाहः। तुरासाहः। तुरासाहोः। तुराषाट्सु-तुराषाट्त्सु। अथ तुरासाट्शब्दं व्युत्पादयति—तुरं त्वरां सहते इत्यर्थे छन्दसि सह इतीति। कर्मण्युपपदे सहेर्ण्विः स्यात् छन्दसीति तदर्थः णकार इत्, उपधावृद्धिः, अपृक्तलोपः। ननु ण्विप्रत्ययस्य छन्दोविषयत्वेन तुरासाहशब्दस्य कथं लोके प्रयोग इत्यत आह—लोके त्विति। सहेर्ण्यन्तात् क्विपि णिलोपे अपृक्तलोपे च सति लोके प्रयोज्य इति भावः। ननु 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' इति हि सहौ क्विबन्ते पर एव पूर्वपदस्य विहितो दीर्घः कथमिह स्यादित्यत आह—अन्येषामपीति। सहेः किम्? डकारेण सहितः सडः मृडादिशब्दः, सः यस्य नाम सोऽपि लक्षणया सडः तस्यापत्यं साडिः। अत इञ्। 'यस्येति च' इत्यकारलोपः, आदिवृद्धिः। साडिरिति रूपम्। अत्र न मूर्धन्य इति भाष्ये स्थितम्। इति हान्ताः।

अथ वकारान्ता निरूप्यन्ते। दिव्शब्दः स्त्रीलिङ्गः। 'द्योदिवौ द्वे स्त्रियामभ्रं व्योमपुष्करमम्बरम्' इत्यमरः। सु शोभना द्यौर्यस्येति बहुव्रीहौ पुंसि सुदिव् स् इति स्थिते-दिव औत्। 'सावनडुहः' इत्यतः सौ इत्यनुवर्तते। दिव इति षष्ठ्यन्तम्। 'दिवेर्डिविः' इत्यौणादिकम् अव्युत्पन्नं वा प्रातिपदिकं गृह्यते, न तु 'दिवु क्रीडादौ' इति धातुः 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति न्यायात्। तदाह—दिविति प्रातिपदिकस्येति। औदिति तकार उच्चारणार्थः न त्वादेशे तकारः श्रूयते। एवं चानेकाल्त्वप्रयुक्तं सर्वादेशत्वं न तकारस्य इत्सञ्ज्ञा तु न, फलाभावात्। तित्स्वरितस्य तु नात्र सम्भवः। 'तिति प्रत्ययग्रहणम्' इति वार्तिकात्। ननु सुदिव् स् इत्यत्र वकार-

औत्स्यात्सौ परे। अल्विधित्वेन स्थानिवत्त्वाभावाद् 'हल्ङ्या—' ( सू २५२ ) इति सुलोपो न । सुद्यौः सुदिवौ सुदिवः । सुदिवम् सुदिवौ । ( २३७ ) दिव उत् ६।१।१३१।। दिवोऽन्तादेश उकारः स्यात्पदान्ते । सुद्युभ्याम् । सुद्युभिः–इत्यादि । ॥ इति वान्ताः ॥ चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः । चतुर्भ्यः । ( २३८ ) षट्चतुर्भ्यश्च ७।१।५५।। षट्संज्ञकेभ्यश्चतुरश्च परस्यामो नुडागमः स्यात् । णत्वम् , द्वित्वम्—चतुर्ण्णाम् । (२३९) रोः सुपि ८।३।१६।। सप्तमीबहुवचने

---

स्यौत्त्वे इकारस्य यणि, औकारस्य स्थानिवत्त्वेन हल्त्वाद् हल्ङ्यादिना सुलोपः स्यादित्यत आह—अल्विधित्वेनेति । औकारादेशस्थानिभूताद् वकारात्मकहलः परत्वमाश्रित्य प्रवर्तमानस्य सुलोपस्याल्विधित्वादिति भावः । सुद्यौरिति । आङ्गत्वात् तदन्तस्याप्यौत्वे यण् । रुत्वविसर्गौ । सुदिवाविति । अजादिषु सुदिव्शब्दः अविकृत एवेति भावः । भ्यामादौ हलि विशेषमाह—दिव उत् । अन्तादेश इति । अलोऽन्त्यसूत्रलभ्यम् । पदान्त इति । पदान्तादित्यनुवृत्तं सप्तम्या विपरिणम्यत इति भावः । उतस्तपरत्वं तु 'भाव्यमान उकारः सवर्णग्राहकः' इति ज्ञापनार्थमिति 'तित्स्वरितम्' इति सूत्रे भाष्ये स्पष्टम् । सुद्युभ्यामिति । वकारस्य उत्त्वे इकारस्य यण् । अत्र उकारस्य 'हलः' इति दीर्घस्तु न वकारस्थाने उकारस्य सम्प्रसारणत्वानवसायात् । सम्प्रसारणशब्देन विहितस्यैव यण्स्थानिकस्य इकः सम्प्रसारणत्वाद् इति 'इग्यणः' इति सूत्रे शब्देन्दुशेखरे स्पष्टम् । इत्यादीति । सुदिवे । सुद्युभ्यः । सुदिवः सुदिवोः सुदिवाम् । सुद्युषु । इति वान्ताः ।

अथ रेफान्ता निरूप्यन्ते । 'चतेरुरन्' इत्युणादिषु चतुर्शब्दो व्युत्पादितः नित्यं बहुवचनान्तः । चत्वार इति । जसि रूपम् । 'चतुरनडुहोः' इत्युकाराद् आम् । उकारस्य यणिति भावः । चतुर इति । शसादौ सर्वनामस्थानत्वाभावान्नाम् । चतुर आम् इति स्थिते ह्रस्वाद्यन्तत्वाभावाद् नुडप्राप्ते—षट्चतुर्भ्यश्च । षट्चतुर्भ्य इति पञ्चमी । 'आमि सर्वनाम्नः' इत्यतः आमीत्यनुवृत्तं षष्ठ्या विपरिणम्यते । षडिति षट्संज्ञकं गृह्यते । न तु षष्शब्दः, 'कृत्रिमाकृत्रिमयोः' इति न्यायात् । तदाह—षट्संज्ञकेभ्य इत्यादिना । नुटि टकार इत्, उकार उच्चारणार्थः । टित्वादाद्यवयवः । णत्वमिति । 'रषाभ्याम्' इत्यनेनेति शेषः । द्वित्वमिति । 'अचो रहाभ्याम्' इति णकारस्येति शेषः । द्वित्वस्यासिद्धत्वात् पूर्वं णत्वे कृते ततो णस्य द्वित्वम् । नच 'पूर्वत्रासिद्धमद्विर्वचने' इति निषेधः शङ्क्यः, द्वित्वे कर्तव्ये अन्यदसिद्धं नेति हि तदर्थः । न तु द्वित्वस्याप्यसिद्धत्वं नेति तदर्थ इति णत्वोत्तरमेव द्वित्वमिति भावः । चतुर् सु इति स्थिते रेफस्य विसर्गे प्राप्ते—रोः सुपि । खरीत्यनुवृत्तेः सप्तमीबहुवचनमेवात्र सुप् , 'खरवसानयोः'

रोरेव विसर्जनीयो नान्यरेफस्य । षत्वम् । षस्य द्वित्वे प्राप्ते । ( ३५० ) शरोऽचि ८।४।४९।। अचि परे शरो न द्वे स्तः । चतुर्षु । प्रियचत्वाः । हे प्रियचत्वः । प्रियचत्वारौ प्रियचत्वारः । गौणत्वे तु नुट् नेष्यते । प्रियचतुराम् । प्राधान्ये तु स्यादेव । परमचतुर्णाम् । ॥ इति रेफान्ताः । कमलं कमलां वा आचक्षाणः कमल कमलौ कमलः । षत्वम् । कमल्षु ॥ इति लान्ताः ॥ ( ३५१ )

---

इत्येव सिद्धे नियमार्थ एवैष विधिरित्याह—रोरेवेति । विपरीतनियमस्तु न, हलोऽनन्तराः संयोग' इति निर्देशात् । षत्वमिति । 'आदेशप्रत्यययोः' इत्यनेनेति शेषः । रेफस्य इण्त्वेन ततः परत्वादिति भावः । षस्य द्वित्व इति । अचो रहाभ्यामित्यनेनेति शेषः । शरोऽचि । 'अचो रहाभ्याम्' इत्यतो द्वे इति 'नादिन्याक्रोशे' इत्यतो नेति चानुवर्तते । तदाह—अचि पर इत्यादिना । तथा च चतुर्षु इत्येकषकारमेव रूपम् । न च सत्यपि द्वित्वे 'झरो झरि सवर्णे' इति लोपादेव एकषकाररूपसिद्धेरिदं व्यर्थमिति वाच्यम् । लोपस्य वैकल्पिकत्वादिति भावः । प्रियाः चत्वारो यस्येति बहुव्रीहौ 'प्रियचतुर्' शब्दो विशेष्यनिघ्न एकद्विबहुवचनान्तः । तस्य सौ रूपमाह—प्रियचत्वारिति । प्रियचतुर् स् इति स्थिते 'चतुरनडुहोः' इत्युकारादाम् । तस्याङ्गत्वेन तदन्तेऽपि प्रवृत्तेः । तत उकारस्य यण् । हल्ङ्याब्भ्यादिलोपश्चेति भावः । हे प्रियचत्वरिति । 'अम् सम्बुद्धौ' इत्यमिति भावः । प्रियचत्वाराविति । सुटि सर्वनामस्थानत्वादाम् । प्रियचत्वारः । प्रियचत्वारम्, प्रियचत्वारौ । शसादावाम् न । प्रियचतुरः । प्रियचतुरा, प्रियचतुर्भ्याम् प्रियचतुर्भिः । प्रियचतुरे । प्रियचतुर्भ्यः । प्रियचतुरः । प्रियचतुरोः । आमि 'षट्चतुर्भ्यश्च' इति नुटमाशङ्क्याह—गौणत्वे त्विति । 'षट्चतुर्भ्यश्च' इति बहुवचननिर्देशात् तदर्थप्राधान्य एव नुडिति भावः । प्रियचतुरि । प्रियचतुर्षु । परमचतुर्णामिति । कर्मधारयः । आङ्गत्वात्तदन्तादपि नुडिति भावः । इति रान्ताः ॥

अथ लकारान्ता निरूप्यन्ते । कमलमिति । कमलं पद्मम् । कमला लक्ष्मीः । कमलमाचष्टे इत्यर्थे कमल्शब्दात् कमलामाचष्टे इत्यर्थे कमलाशब्दात् 'तत्करोति तदाचष्टे' इति णिचि 'सनाद्यन्ताः' इति धातुत्वात् तदवयवस्य सुपो लुकि 'णाविष्ठवत् प्रातिपदिकस्य' इति इष्ठवत्त्वाट्टिलोपे कमल् इति रूपम् । कमलाविति । औजसादिषु न कोऽपि विकार इति भावः । कमलम् कमलौ कमलः । कमला कमल्भ्याम् कमल्भिः । कमले । कमल्भ्यः । कमलः कमलोः कमलाम् । सुपि विशेषमाह—षत्वं कमल्ष्विति । लकारस्य इण्त्वादिति भावः । तोयमाचष्टे तोय् इत्यादियकारान्तास्तु न सन्त्येव, क्विपि 'लोपो व्योः' इति यलोपस्य दुर्वारत्वात् । णिलोपस्य स्थानिवत्त्वं तु न भवति, नलोपे तन्निषेधात् । वस्तुतस्तु 'न पदान्ता हलो यणः

मो नो धातोः ८।२।६४॥ मान्तस्य धातोर्नः स्यात्पदान्ते। नत्वस्यासिद्धत्वान्न-लोपो न। प्रशाम्यतीति प्रशान् प्रशामौ प्रशामः। प्रशान्भ्यामित्यादि। (३४२) किमः कः ७।२।१०३॥ किमः कः स्याद्विभक्तौ। अकच्सहितस्याप्ययमादेशः।

---

सन्ति' इति लण्सूत्रस्थभाष्यादनभिधानमेवञ्जातीयकानामिति हरदत्तः। 'भोभगो' इति सूत्रे वृत्तव् करोतीति भाष्यं तु एकदेश्युक्तिरिति तदाशय इत्यलम्। इति लान्ताः।

अथ मकारान्ता निरूप्यन्ते। अथ प्रपूर्वात् शमुधातोः क्विपि 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घे सति निष्पन्ने प्रशाम्शब्दे विशेषमाह—मो नो धातोः। म इति षष्ठ्यन्तं धातोरित्यस्य विशेषणम्। तदन्तविधिः। पदस्येत्यधिकृतम्। 'स्कोः संयोगाद्योः' इत्यतः अन्ते इत्यनुवर्तते। तदाह—मान्तस्य धातोरित्यादिना। 'अलोऽन्त्यस्य' इति मकारस्य भवति। तत्र सोर्हल्ङ्यादिलोपे सति नकारस्य प्रातिपदिकान्तत्वात् पदान्तत्वाच्च 'न लोपः प्रातिपदिकान्तस्य' इति नलोपमाशङ्क्याह—नत्वस्येति प्रशानिति। स्वरादिपाठेऽप्यस्य नाव्ययत्वम्, सत्त्ववाचित्वात्। असत्त्ववाचित्वे तु स्वरादिपाठादव्ययत्वमेवेति भावः। प्रशान्भ्यामिति। भ्यामादौ हलि 'स्वादिष्वसर्वनामस्थाने' इति पदत्वान्नत्वमिति भावः। इत्यादीति। प्रशान्भिः। प्रशामे। प्रशान्भ्यः। प्रशामः। प्रशामः प्रशामोः प्रशामाम्। प्रशामि। प्रशान्त्सु—प्रशान्सु। 'नश्च' इति धुड्विकल्पः। अथ कायतेर्डिमिरिति निष्पन्नः किंशब्दः प्रष्टव्ये वर्तते। तस्य विशेषमाह—किमः कः। विभक्ताविति। 'अष्टन आ विभक्तौ' इत्यतस्तदनुवृत्तेरिति भावः। ननु 'इमः' इत्येव सूत्र्यताम्। 'त्यदादीनामः' इत्युनुवृत्तौ त्यदादीनाम्। इमः अकारः स्यादित्यर्थलाभात्। द्विपर्यन्तानामिति तु न सम्बध्यते, द्विपर्यन्तेषु त्यदादिषु इमोऽसम्भवात्। एवं च किंशब्दे इम इत्यस्य स्थाने अकारे सति क इत्यदन्तत्वं सिध्यति। न च 'अलोऽन्त्यस्य' इति किंशब्दे इमो मकारस्यैव अकारः स्यात्। ततश्च इकारस्य यणि क्य इति स्यादिति वाच्यम्, 'नानार्थकेऽलोन्त्यविधिः' इति निषेधेन अलोऽन्त्यपरिभाषाया अप्रवृत्तौ इमः कृत्स्नस्य स्थाने अकारे सति क इत्यस्य सिद्धेरित्यत आह—अकच्सहितस्येति। त्यदादेरिमः अकारविधौ 'अव्ययसर्वनाम्नाम्' इति किंशब्दस्य अकचि कृते ककिम् इति स्थिते इमः अकारे कृते कक इति रूपं स्यात्। 'किमः कः' इत्युक्तौ तु साकच्कस्यापि किंशब्दस्य 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायेन किंशब्दत्वात्तस्य कादेशे सति क इत्येव रूपं सिध्यतीति भावः। अत्र त्यदादीनामित्यनुवर्त्य वचनविपरिणामेन त्यदादेः किमः क इति व्याख्येयम्। अतः सर्वाद्यन्तर्गणकार्यत्वादुपसर्जनत्वे कादेशो न भवति। एवञ्च विभक्त्युत्पत्तौ कादेशे

कः कौ के। कम् कौ कान् इत्यादि सर्ववत्। (३४३) इदमो मः ७।२।१०८॥ इदमो मस्य मः स्यात्सौ परे। त्यदाद्यत्वापवादः। (३४४) इदोऽय् पुंसि ७।२।१११॥ इदम इदोऽय् स्यात्सौ पुंसि। सोर्लोपः। अयम्। त्यदाद्यत्वं पररूपत्वं च। (३४५) दश्च ७।२।१०९॥ इदमो दस्य मः स्याद्विभक्तौ। इमौ इमे। त्यदादेः सम्बोधनं नास्ति इत्युत्सर्गः। (३४६) अनाप्यकः ७।२।११२॥

---

सर्वशब्दवद्रूपाणीत्याह—कः कावित्यादि। 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः' इत्यमरः। तत्र कशब्दस्य किंशब्दत्वाभावाद् न सर्वनामत्वम्। वेधसि तु किंशब्दोऽप्यस्ति। तस्य सर्वनामत्वमस्ति नास्तीति पक्षद्वयम् 'कस्येत्' इति सूत्रे भाष्ये स्थितम्। कायं हविरित्यत्र यदि किमः कादेशः, यदि वा शब्दान्तरम् उभयथापि कस्मा अनुब्रूहीति भवितव्यम्। सर्वस्य सर्वनामसंज्ञा। सर्वश्च प्रजापतिः। प्रजापतिश्च कः। अपर आह—उभयथापि कायानुब्रूहीत्येव। संज्ञैषा तत्र भवत इति।

अथ इदंशब्दे विशेषमाह। इदमो मः। साविति। 'तदोः सः सौ' इत्यतस्तदनुवृत्तेरिति भावः। 'अलोऽन्त्यस्य' इत्यन्त्यस्य मस्य मः। ननु मस्य मविधिर्व्यर्थ इत्यत आह—त्यदाद्यत्वापवाद इति। इदम् स् इति स्थिते। इदोऽय् पुंसि। इद् इति स्थानषष्ठी। इदम इत्यनुवर्तते। अवयवषष्ठ्येषा। 'यः सौ' इत्यतः सावित्यनुवर्तते। तदाह—इदम इति। इदम्शब्दस्यावयवो य इद् तस्येत्यर्थः। अयम् स् इति स्थिते। सोर्लोप इति। हल्ङ्यादिनेति शेषः। अयमिति। सुलोपे प्रत्ययलक्षणमाश्रित्य मकारस्यानुस्वारस्तु न, मकारविधिसामर्थ्यात्। अन्यथा अनुस्वारमेव विदध्यात्। 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति निषेधाच्च। अथ औजसादिषु विशेषमाह—त्यदाद्यत्वमिति। इदम् औ इति स्थिते 'त्यदादीनामः' इति मस्य अकार इत्यर्थः। पररूपत्वमिति। इद अ औ इति स्थिते 'अतो गुण' इति अकारयोरेकं पररूपम् अकार इत्यर्थः। इद औ इति। स्थिते। दश्च। 'इदमो मः' इत्यनुवर्तते। द इति षष्ठी। इदमो दकारस्य इति लभ्यते। 'अष्टन आ विभक्तौ' इत्यतः अतिव्यवहितमपि विभक्तावित्येतद् मण्डूकप्लुत्या अनुवर्तते 'तदोः सः सौ' इत्यतः साविति तु सन्निहितमपि नानुवर्तते, सौ इदमो दस्याभावात्, 'यः सौ' इत्युत्तरसूत्रे सौग्रहणाच्च। तदाह—इदमो दस्येत्यादिना। तथा च इम औ इति स्थिते रामवद्रूपाणीत्याह—इमावित्यादि। त्यदादेः सम्बोधनं नास्तीति। प्रचुरप्रयोगादर्शनादिति भावः। नन्वेवं सति 'तदोः सः सौ' इति सूत्रे हे स इति भाष्यविरोध इत्यत आह—उत्सर्गं इति। प्रायिकमित्यर्थः। टादावचि विशेषमाह—अनाप्यकः। अन्, आपि, अकः इति छेदः। न विद्यते क् यस्य सः अक्, तस्य अकः ककाररहितस्येत्यर्थः। 'इदमो मः' इत्यत इदम् इति 'इदोऽय् पुंसि' इत्यत इद इति

अककारस्येदम इदोऽन् स्यादापि विभक्तौ। आप् इति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः। अनेन। ( ३५७ ) हलि लोपः ७।२।११३॥ अककारस्येदम इदो लोपः स्यादापि हलादौ। 'नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे' ( वा ४१० )। ( ३५८ ) आद्यन्तवदेकस्मिन् १।१।२१॥ एकस्मिन्क्रियमाणं कार्यमादाविवान्त

चानुवर्तते। 'अष्टन आ विभक्तौ' इत्यतो विभक्ताविति। तदाह—अककारस्येत्यादिना। आपीत्यनेन टाप्डाप्चापां ग्रहणं नेत्याह—आवित्यादिना। टा इत्याकारमारभ्येत्यर्थः। विभक्तावित्यनुवृत्तिसामर्थ्याद् न टाबादिग्रहणमिति भावः। अनेनेति। इदम् आ इति स्थिते त्यदाद्यत्वं पररूपत्वम्। इदः अनादेशः। अन आ इति स्थिते इनादेशे गुण इति भावः। भ्यामादौ त्यदाद्यत्वे पररूपे च कृते 'अनाप्यकः' इति प्राप्ते। हलि लोपः। आप्यक इति पूर्वसूत्रादनुवर्तते। 'इदमो मः' इत्यत इदम इति 'इदोऽय् पुंसि' इत्यत इद इति 'अष्टनः' इत्यतो विभक्ताविति चानुवर्तते। हलीति विभक्तिविशेषणम्। तदादिविधिः। तदाह—अककारस्येत्यादिना। अलोऽन्त्यपरिभाषया इदो दकारस्य लोपमाशङ्क्याह—नानर्थक इति। परिभाषेयमुपधासंज्ञासूत्रे भाष्ये स्थिता। इदम्शब्दे इद् इत्यस्यानर्थकत्वात् तदन्तस्येति न लभ्यते। ततश्च इद् इत्यस्य कृत्स्नस्यैव लोप इति भावः। अनभ्यासविकार इत्यनुक्तौ बिभर्तीत्यादौ 'भृञामित्', 'अर्तिपिपर्त्योश्च' इतीत्वं कृत्स्नस्याभ्यासस्य स्यात्, द्वित्वे सति समुदायस्यैवार्थवत्त्वात्। 'हलि लोपः' इत्यत्र लोपग्रहणमपनीय 'हल्यश्' इत्येव सूत्रयितुमुचितम्। शित्वात् इदः कृत्स्नस्याकारे पररूपे 'सुपि च' इति दीर्घे आभ्यामित्यादिसिद्धेः।

ननु इदम् भ्याम् इति स्थिते त्यदाद्यत्वे पररूपे इदो लोपे च कृते अ भ्याम् इति स्थिते अङ्गस्याकारात्मकत्वात् अदन्तत्वाभावात् कथं 'सुपि च' इति दीर्घ इत्यत आह—आद्यन्तवदेकस्मिन्। आदित्वान्तत्वयोर्नित्यमन्यसापेक्षत्वादेकस्मिन् तत्प्रयुक्तकार्याणामप्राप्तौ तत्प्राप्त्यर्थमिदमारभ्यते। एकशब्दः असहायवाची। 'एके मुख्यान्यकेवलाः' इत्यमरः। सप्तम्यन्तात् 'तत्र तस्येव' इति वतिः। एकस्मिन्नित्युपमेये सप्तमीदर्शनात्। वतिश्च द्वन्द्वान्ते श्रूयमाणत्वात् प्रत्येकं सम्बध्यते। तदाह—एकस्मिन् क्रियमाणं कार्यमादाविवान्त इव च स्यादिति। तदादितदन्तयोः क्रियमाणं कार्यं तदादौ तदन्त इव च असहायेऽपि स्यादित्यर्थः। एकस्मिन्निति किम्। दरिद्रातेः 'एरच्' इति न। आदिवत्त्वफलम्। औपगव इत्यादौ अण्प्रत्ययाद्युदात्तत्वम्। आभ्यामित्यादौ अन्तवत्त्वाद् दीर्घादिर्भवति। भाष्ये तु आद्यन्तवदित्यपनीय व्यपदेशिवदेकस्मिन् 'इति सूत्रपाठः शिक्षितः। तेन इयायेत्यादौ 'एकाचो द्वे प्रथमस्य' इति द्विर्भावः, धुक् इत्यत्र व्यपदेशिवत्त्वेन धात्ववयवत्वाद् भष्भावश्च सिद्ध्यति। विशिष्टः अपदेशः व्यपदेशः मुख्यो व्यवहारः सोऽस्यास्तीति व्यपदेशी मुख्य इति यावत्, एकस्मिन् तदादित्वतदन्तत्व-

श्च च स्यात्। आभ्याम्। ( ३४९ ) नेदमदसोरकोः ७।१।११॥ अककारयोरिदमदसोर्भिस ऐस् न स्यात्। एत्वम्-एभिः। अत्वम्, नित्यत्वाद् ङेः स्मै, पश्चाद्धलि लोपः। अस्मै आभ्याम् एभ्यः। अस्मात् आभ्याम् एभ्यः। अस्य अनयोः एषाम्। अस्मिन् अनयोः एषु। ककारयोगे तु-अयकम् इमकौ इमके। इमकम् इमकौ इमकान्। इमकेन इमकाभ्याम् इत्यादि। (३५०) इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ २।४।३२॥ अन्वादेशविषयस्येदमोऽनुदात्तोऽशादेशः

---

तदवयवत्वादिप्रयुक्तकार्यं स्यादिति फलितम्। इदम् भिस् इति स्थिते त्यदाद्यत्वे पररूपे 'हलि लोपः' इति इदो लोपे अ भिस् इति स्थिते 'अतो भिस ऐस्' इति प्राप्ते। नेदमदसोरकोः। 'अतो भिस ऐस्' इत्यतो भिस ऐसित्यनुवर्तते। अकोरिति षष्ठी। न विद्यते ककारो ययोरिति बहुव्रीहिः। तदाह—अककारयोरित्यादिना। एत्वमिति। 'बहुवचने झलि' इत्यनेनेति शेषः। ङयि विशेषमाह—अत्वमित्यादि। अत्वं 'ङेः स्मै' इत्यन्वयः। इदम् ए इति स्थिते त्यदाद्यत्वे पररूपे इद ए इति स्थिते ङेर्यादेशं बाधित्वा-'सर्वनाम्नः स्मै' इति स्मैभावः इत्यर्थः। ननु इद ए इति स्थिते स्मैभावात् परत्वादनादेशे 'विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायेन पुनः स्मैभावो न स्यादित्यत आह—नित्यत्वादिति। कृते अकृतेऽप्यनादेशे प्रवृत्तियोग्यतया स्मैभावस्य नित्यत्वादनादेशात् प्रागेव स्मैभावे कृते अनादेशस्य हलि लोपेन बाध इति भावः। आभ्यामिति। पूर्ववत्। एभ्य इति। त्यदाद्यत्वं, पररूपत्वं, हलिः लोपः, 'बहुवचने झल्येत्' इत्येत्त्वं चेति भावः। अस्मादिति। त्यदाद्यत्वं, पररूपत्वं, हलि लोपः। 'ङसिङ्योः' इति स्मादिति भावः। अस्येति। त्यदाद्यत्वं, पररूपत्वं स्यादेशः हलि लोपश्चेति भावः। अनयोरिति। त्यदाद्यत्वं, पररूपत्वम्, अनाप्यकः, ओसि च' इत्येत्त्वम्, अयादेशश्चेति भावः। एषामिति। आमि, त्यदाद्यत्वं पररूपत्वं, सुट्, हलि लोपः, एत्त्वषत्वे। अस्मिन्निति। अत्वं, पररूपत्वं, स्मिन्, हलि लोपश्चेति भावः। एष्विति। अत्वं, पररूपत्वं हलि लोपः, एत्त्वषत्वे इति भावः।

ककारयोगे त्विति। 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यनेन इदंशब्दस्य अकचि सतीत्यर्थः। अयकमिति। अकचि सति निष्पन्नस्य इदकंशब्दस्य तन्मध्यपतितन्यायेन 'इदमो मः' इत्यादाविदंग्रहणेन ग्रहणान्मत्वादिकमिति भावः। 'अनाप्यक' इति 'हलि लोपः' इति, 'नेदमदसोरकोः' इति च नेह प्रवर्तते। ककारयोगे तन्निषेधादित्याशयेनाह—इमकेन इमकाभ्यामिति। इत्यादीति। इमकैः। इमकस्मै। इमकेभ्यः। इमकस्मात्। इमकस्य इमकयोः इमकेषाम्। इमकस्मिन् इमकेषु। इदमोऽन्वादेशे। अन्वादेशे अश् इति च्छेदः। अन्वादेशे इदमः अश स्यात् तृतीयादिविभक्तौ, स

स्यात्तृतीयादौ। अश्वचनं साकच्कार्थम्। ( ३५१ ) द्वितीयाटौस्स्वेनः २।४। ३४॥ द्वितीयायां टौसोश्च परत इदमेतदोरेनादेशः स्यादन्वादेशे। किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः। यथा 'अनेन व्याकरणमधीतम् एनं छन्दोऽध्यापय' इति। 'अनयोः पवित्रं कुलम् एनयोः प्रभूतं स्वम्' इति। एनम्। एनौ। एनान्। एनेन। एनयोः। इति मान्ताः॥ गणयतेर्विच्। सुगण् सुगणौ। सुगणः। सुगण्ठ्सु–सुगण्ट्सु–सुगण्सु। क्विप्। 'अनुनासिकस्य क्विझलोः'—

---

चानुदात्त इति स्पष्टोऽर्थः। 'आशास्ते यं यजमानोऽसौ। आयुराशास्ते' इति प्रस्तुत्य 'तदस्मै देवा राधन्ताम्' इत्युदाहरणम्। तत् आयुरादि अस्मै यजमानाय देवाः साधयन्त्वित्यर्थः। अत्र अस्मै इत्युदाहरणम्। इद स्मै इति स्थिते प्रकृतेरशादेशे अनुदात्ते सति 'अनुदात्तौ सुप्पितौ' इति स्मै इत्यैकारः अनुदात्तः। तथा च अस्मै इति सर्वानुदात्तः। एवमाभ्यामित्यादावपि हलादावुदाहरणम्। द्वितीयादावचि टौसोरेनादेशस्य विशिष्य विधानात्। ननु अनुदात्तत्वमेवात्र विधीयताम्, न त्वशादेशोऽपि। त्यदाद्यत्वे हलि लोपे च अस्मै, आभ्याम् इत्यादिरूपस्यान्वादेशेऽपि सिद्धेरत आह-अश्वचनं साकच्कार्थमिति। 'इमकाभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम्' इत्यत्रान्वादेशे इमकाभ्याम् इति न भवति। अत्र अ अ इति प्रश्लिष्टनिर्देशाद् अनेकाल्त्वात् सर्वादेशत्वसिद्धेः शित्करणं न कर्तव्यमिति भाष्ये स्पष्टम्। द्वितीयाटौस्स्वेनः। द्वितीया च टाश्च ओश्च द्वितीयाटौसः, तेष्विति द्वन्द्वः। 'इदमोऽन्वादेशे' इत्यत इदम इति, अन्वादेश इति चानुवर्तते। 'एतदस्त्रतसोः' इत्यत एतद इति च। तदाह— द्वितीयायामित्यादिना। 'अन्वादेशशब्दं व्याचष्टे—किञ्चिदिति। विधातुमिति। अपूर्वं बोधयितुमित्यर्थः। अन्वादेशमुदाहृत्य दर्शयति—यथेति। उदाहरणप्रदर्शने यथाशब्दः। 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्।' इत्यत्र तु एनादेशो न पूर्वार्धस्य यच्छब्दयोगेन अनुवादत्वात्। किञ्चित्कार्यं विधातुमुपात्तस्य इत्यत्र च पूर्ववाक्ये यथाकथञ्चित्तदुपादानं विवक्षितम्, न त्विदमैवेत्याग्रह इति भाष्ये स्पष्टम्। इति मान्ताः।

अथ णकारान्ता निरूप्यन्ते। गणयतेर्विजिति। 'गण सङ्ख्याने' इति चुरादिः अदन्तः। ततः सुपूर्वात् स्वार्थे णिच्। अल्लोपस्य स्थानिवत्त्वाद् नोपधावृद्धिः। तस्माद्विच्। 'अन्येभ्योऽपि दृश्यते' इति वचनात्। णिलोपः, अपृक्तलोपः, ततः सुबुत्पत्तिः, हल्ङ्यादिना सुलोपः। सुगण् इति रूपम्। सुगणौ, सुगणः इत्याद्यविकृतमेव। सुपि 'ङ्णोः कुक्टुक्शरि' इति टुग्विकल्पः। 'चयो द्वितीयाः' इति टस्य ठः इत्यभिप्रेत्याह— सुगण्ठ्सु इति। द्वितीयाभावे रूपमाह—सुगण्ट्सु इति। टुगभावे रूपमाह—सुगण्सु

( सू २६६६ ) इति दीर्घः । सुगाण् सुगाणौ सुगाणः । सुगाण्ठ्सु-सुगाण्ट्सु—सुगाण्सु । इति णान्ताः ॥ परत्वादुपधादीर्घः, हल्ङ्यादिलोपः, ततो नलोपः । राजा । (२५२) न ङिसम्बुद्ध्योः ८।२।८॥ नस्य लोपो न स्याद् ङौ सम्बुद्धौ च । हे राजन् । ङौ तु छन्दस्युदाहरणम् । 'सुपां सुलुक्—' ( सू ३५६१ ) इति ङेर्लुक् । निषेधसामर्थ्यात्प्रत्ययलक्षणम् । 'परमे व्योमन्' । ङावुत्तरपदे प्रतिषेधो वक्तव्यः' ( वा ४७८५ ) । ङौ विषये उत्तरपदे परे 'न ङिसम्बुद्ध्योः' इत्यस्य

---

इति । सुगाणिति । गणधातोरदन्ताद् णिच् , अल्लोपः । तस्य स्थानिवत्त्वाद् लोपधावृद्धिः । तस्मात् क्विप् , णिलोपः, अपृक्तलोपः । 'अनुनासिकस्य क्विझलोः' इति दीर्घः । सुगाण् इति रूपम् । सुगाणौ सुगाणः इत्यादि । न च दीर्घे कर्तव्ये णिलोपाल्लोपयोः स्थानिवत्त्वं शङ्क्यम् , दीर्घविधौ तन्निषेधात्, क्वौ विधिं प्रति तन्निषेधाच्च । इति णान्ताः ।

अथ नकारान्ता निरूप्यन्ते । अथ राजन्शब्दे विशेषमाह—परत्वादिति । हल्ङ्यादिलोपापेक्षया परत्वात् पूर्वमेव 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घः । ततो हल्ङ्यादिलोप इत्यर्थः । न च 'विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायात् कथमिह हल्ङ्यादिलोप इति वाच्यम् , 'पुनः प्रसङ्गविज्ञानात् सिद्धम्' इति 'विप्रतिषेधे यद्बाधितम्' इत्यस्य असार्वत्रिकत्वादिति भावः । नलोप इति । 'न लोपः प्रातिपदिकान्तस्य' इति नकारस्य लोप इत्यर्थः । हे राजन् स् इति स्थिते हल्ङ्यादिना सुलोपे सति नकारस्य पदान्तत्वात् प्रातिपदिकान्तत्वाच्च लोपे प्राप्ते—न ङिसम्बुद्ध्योः । 'न लोपः प्रातिपदिकान्तस्य' इत्यतो न लोप इत्यनुवर्तते । तत्र नेति लुप्तषष्ठीकम् । तदाह—नस्येत्यादिना । हे राजन्निति । 'सर्वनामस्थाने च' इति दीर्घस्तु न, असम्बुद्धावित्युक्तेः । नन्वत्र ङिग्रहणं व्यर्थम् , राजनीत्यत्र भत्वात्पदत्वाभावान्नलोपस्याप्रसक्तेरित्यत आह—ङौ तु छन्दसीति । छन्दस्येवेत्यर्थः । ननु छन्दस्यपि ङौ परतो भत्वात् पदत्वाभावात् कथं नकारस्य लोपप्रसङ्गः येन तन्निषेधोऽर्थवान् स्यादित्यत आह—सुपामिति । ननु 'परमे व्योमन्' इत्यादौ ङेर्लुका लुप्तत्वात् प्रत्ययलक्षणाभावात् कथं तत्र 'न ङिसम्बुद्ध्योः' इत्यस्य प्रवृत्तिरित्यत आत—निषेधसामर्थ्यादिति । छन्दस्यपि ङिलुकि प्रत्ययलक्षणाभावे सति 'न ङिसम्बुद्ध्योः' इत्यप्रवृत्तौ तद्वैयर्थ्यादिति भावः । ननु यदि छन्दसि 'परमे व्योमन्' इत्यादौ ङेर्लुका लुप्तत्वेऽपि प्रत्ययलक्षणमाश्रित्य 'न ङिसम्बुद्ध्योः' इत्यस्य प्रवृत्तिरभ्युपगम्यते, तर्हि चर्मणि तिला अस्य चर्मतिलः, ब्रह्मणि निष्ठा अस्य ब्रह्मनिष्ठः इत्यत्रापि समासे ङिलुकः प्रत्ययलक्षणमाश्रित्य 'न ङिसम्बुद्ध्योः' इति नकारस्य लोपनिषेधः स्यादित्यत आह—ङावुत्तरपदे प्रतिषेधो वक्तव्य इति । उत्तरपदे परतो यः ङिः तस्मिन् परे 'न ङिसम्बुद्ध्योः'

निषेधो वाच्य इत्यर्थः। चर्मणि तिला अस्य चर्मतिलः। ब्रह्मनिष्ठः। राजानौ। राजानः। राजानम्। राजानौ। 'अल्लोपोऽनः' (सू. २३४)। श्चुत्वम्। न चाल्लोपः स्थानिवत्। पूर्वत्रासिद्धे तन्निषेधात्। नापि बहिरङ्गतया असिद्धः। यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्वस्यासिद्धतयाऽन्तरङ्गाभावे परिभाषाया अप्र-

इति निषेधस्य प्रतिषेधो वक्तव्य इत्यर्थः। एवं च चर्मतिल इत्यत्र उत्तरपदे परतः 'न ङिसम्बुद्ध्योः' इति प्रतिषेधाभावाद् नकारस्य लोपो निर्बाध इति भावः।

भाष्ये तु छन्दसि 'परमे व्योमन्' इत्यत्र 'अयस्मयादीनि छन्दसि' इति भत्वात् पदत्वाभावान्नकारलोपस्याप्रसक्तेर्ङौ प्रतिषेधो न कर्तव्य इति ङिग्रहणं प्रत्याख्यातम्। न च राजन्यतीत्यत्र लोके राजनीवाचरतीत्यर्थे 'अधिकरणाच्च' इति क्यचि 'सनाद्यन्ताः' इति धात्ववयवत्वात् 'सुपो धातुप्रातिपदिकयोः' इति ङेर्लुकि राजन्य-इत्यस्मात् तिपि राजन्यतीत्यत्राप्यन्तर्वर्तिविभक्त्या पदत्वमाश्रित्य नकारस्य लोपप्राप्तौ तन्निषेधार्थं ङिग्रहणस्यावश्यकत्वात्तत्प्रत्याख्यानभाष्यमनुपपन्नमिति वाच्यम्, एतद्भाष्यप्रामाण्यादेव राजनीवाचरतीत्यर्थे 'अधिकरणाच्च' इति क्यचोऽनभिधानाभ्युपगमादित्यलम्। राजानमित्यादौ सुटि 'सर्वनामस्थाने च' इति दीर्घः। शसि विशेषमाह—अल्लोपोऽन इति। अनेन सूत्रेण जकारादकारस्य लोप इत्यर्थः। राजन् अस् इति स्थिते—श्चुत्वमिति। ततश्च नकारस्य जकारे राज्ञ इति सिद्धम्। ननु 'अचः परस्मिन्' इत्यल्लोपस्य पूर्वस्मादपि विधौ स्थानिवत्त्वात् कथमिह श्चुत्वमित्यत आह—न चाल्लोपः स्थानिवदिति। कुत इत्यत आह—पूर्वत्रेति। 'पूर्वत्रासिद्धे' इति श्चुत्वे कर्तव्ये स्थानिवत्त्वनिषेधादित्यर्थः। ननु अल्लोपो भसञ्ज्ञापेक्षो बहिर्भूतस्वादिप्रत्ययापेक्षो बहिरङ्गः। श्चुत्वं तु श्चुयोगमात्रापेक्षत्वादन्तरङ्गम्। ततश्च 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया श्चुत्वे कर्तव्ये बहिरङ्गस्याल्लोपस्यासिद्धत्वादकारेण व्यवधानात् कथमिह श्चुत्वमित्यत आह—नापीति। यथोद्देशेति। यथोद्देशं सञ्ज्ञापरिभाषमित्येकः पक्षः। उद्देशाः उत्पत्तिप्रदेशाः,ताननतिक्रम्य यथोद्देशम्। यत्र प्रदेशे सञ्ज्ञापरिभाषयोरुत्पत्तिः, तत्रैव ते स्थिते प्रतिविधि व्याप्रियेते इत्यर्थः। 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषेयं षष्ठाध्याये 'वाह ऊठ्' इति सूत्रे ज्ञापितेति तत्रैव भाष्ये स्पष्टम्। ततश्च इयं षाष्ठी परिभाषा त्रैपादिकश्चुत्वे कर्तव्ये अन्तरङ्गेऽपि न प्रवर्तते। तां प्रति श्चुत्वस्य अन्तरङ्गस्यासिद्धतया तद्दृष्ट्या श्चुत्वस्यैवाभावेन तद्विषये तस्याः परिभाषायाः प्रवृत्त्यसम्भवात्। तथा च श्चुत्वे कर्तव्ये बहिरङ्गस्याप्यल्लोपस्यासिद्धत्वाभावादिह श्चुत्वं निर्बाधमिति भावः। 'कार्यकालं सञ्ज्ञापरिभाषम्' इत्यप्यस्ति पक्षान्तरम्। प्रतिविधिप्रदेशं प्राप्य सञ्ज्ञापरिभाषे व्याप्रियेते इत्यर्थः। अस्मिन् पक्षे यद्यपि श्चुत्वमन्तरङ्गं पुरस्कृत्य 'असिद्धं बहिरङ्ग-

वृत्तेः । जञोर्ज्ञः । राज्ञः । राज्ञा । (३५३) नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति । ८ । २ । २ ॥ सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धः, नान्यत्र 'राजाश्वः' इत्यादौ । इत्यसिद्धत्वादात्वमेत्त्वमैस्त्वं च न । राज-

---

मन्तरङ्गे' इति परिभाषाऽत्र प्रवृत्तिमर्हति । तथापि लक्ष्यानुरोधात् कार्यकालपक्षो नेहाश्रीयत इत्यलम् । जञोर्ज्ञ इति । जञ्योगे तादृशध्वनेर्लोकवेदसिद्धत्वादिति भावः । नन्विदं वर्णान्तरम् , शिक्षादावदर्शनात् । अत एतज्ज्ञानमिति श्चुत्वसिद्धिरित्याहुः । राज्ञः । राज्ञेति । शसादावचि भत्वादल्लोपे नकारस्य श्चुत्वेन ञकार इति भावः ।

ननु राजन् भ्यामिति स्थिते 'स्वादिषु' इति पदत्वात् कृते नलोपे 'सुपि च' इति दीर्घः प्राप्नोति । तथा राजन् भिस् इति स्थिते नलोपे 'अतो भिसः' इत्यैस् प्राप्नोति । तथा राजन् भ्यस् इति स्थिते नलोपे 'बहुवचने झल्येत्' इत्येत्त्वं प्राप्नोति । न च नलोपस्यासिद्धत्वादिह दीर्घः ऐस् एत्त्वं च नेति वाच्यम् , नलोपविषये 'पूर्वत्रासिद्धम्' इत्यस्य प्रवृत्तौ राजाश्वो दण्ड्यश्व इत्यादावपि नलोपस्यासिद्धत्वात् सवर्णदीर्घयणाद्यनापत्तेरित्यत आह—नलोपः सुप् । नस्य लोपो नलोपः । विधिशब्दो भावसाधनः । विधानं विधिः । सुप्च स्वरश्च सञ्ज्ञा च तुक्च तेषां विधय इति सम्बन्धसामान्यषष्ठ्या समासः । कृतीति तु तुकैव सम्बध्यते । अन्यत्रासम्भवात् । तदाह—सुब्विधावित्यादिना । सुपो विधिः सुब्विधिः । सम्बन्धसामान्यं विवक्षितम् । सुबाश्रयविधाविति यावत् । स्वरस्य विधिः । कर्मणः शेषत्वविवक्षया षष्ठी । स्वरे विधेये इति यावत् । एवं सञ्ज्ञाविधावित्यपि कर्मणः शेषत्वविवक्षया षष्ठी । सञ्ज्ञायां विधेयायामिति यावत् । कृति परतो यस्तुक् तस्य विधिः कृति तुग्विधिः । इहापि कर्मणः शेषत्वविवक्षया षष्ठी । कृति परे यस्तुक् तस्मिन् विधेये इति यावत् । 'पूर्वत्रासिद्धम्' इत्येव सिद्धे अन्यनिवृत्तिफलकनियमार्थमेतदित्याह—नान्यत्रेति । अन्यत्रेत्येतदुदाहृत्य दर्शयति—राजाश्व इत्यादाविति । आदिना दण्ड्यश्व इत्यादिसङ्ग्रहः । अत्र सवर्णदीर्घयणादिविधीनां सुब्विध्याद्यनन्तर्भावात् तेषु कर्तव्येषु नलोपस्यासिद्धत्वाभावे सति नकारलोपस्य सत्त्वात् सवर्णदीर्घादिकं निर्बाधमिति भावः । प्रकृते राजभ्याम् राजभिः राजभ्यः इत्यत्र दीर्घादि न भवत्येवेत्याह—इत्यसिद्धत्वादिति । सुपि परतो दीर्घविधिः, भिस ऐस्विधिः, भ्यसि एत्त्वविधिश्च सुबाश्रयविधय इति तेषु कर्तव्येषु परिसङ्ख्याविधिलभ्यासिद्धत्वनिषेधाभावे सति 'पूर्वत्रासिद्धम्' इति नलोपस्यासिद्धत्वान्न दीर्घादिकमित्यर्थः । वस्तुतस्तु अन्यनिवृत्तिफलकसिद्धविषयकविधित्वमेव नियमविधित्वम् । अत एव 'पञ्च पञ्चनखा भक्ष्याः' इत्यत्र पञ्चानां पञ्चनखप्राणिनां भक्षणनियमे तदितरेषां पञ्चनखानां भक्षणप्रतिषेधो गम्यते इति पस्पशाह्निकभाष्ये प्रपञ्चितम् । तदाह—इत्यसिद्धत्वादिति ।

भ्याम् , राजभिः । राज्ञे, राजभ्यः । राज्ञः, राज्ञोः, राज्ञाम् । राज्ञि–राजनि । प्रति-

ननु दण्डिष्वित्यत्र नलोपे कृते इणः परत्वात् सस्य षत्वमिति स्थितिः । तत्र षत्वविधेः सुबाश्रयविधित्वात् तत्र कर्तव्ये नलोपस्यासिद्धत्वात् कथं षत्वमिति चेत्, मैवम्—न हि षत्वविधिः, सुब्विधिः । सुप्त्वं तद्व्याप्यधर्मं वा पुरस्कृत्य प्रवर्तमानो विधिर्हि सुब्विधिरिह विवक्षितः । न च षत्वविधिस्तथा । अतस्तत्र नलोपस्य सिद्धत्वमस्त्येवेति षत्वं निर्बाधम् । अस्तु वा षत्वविधिरपि सुब्विधिः । तथापि तस्मिन् कर्तव्ये नलोपस्यासिद्धत्वं न भवत्येव । तदसिद्धत्वं हि किं 'पूर्वत्रासिद्धम्' इत्यनेनापाद्यते, उत 'नलोपः सुप्स्वर' इत्यनेनैव । न तावदाद्यः, नलोपविधेः षत्वविध्यपेक्षया पूर्वत्वेन तस्य षत्वे कर्तव्ये असिद्धत्वासम्भवात् । न द्वितीयः, 'नलोपः सुप्स्वर' इत्यनेन हि राजभ्यामित्यादौ नलोपस्यासिद्धत्वमपूर्वं न विधीयते । किन्तु 'पूर्वत्रासिद्धम्' इत्यनेन प्राप्तमेव नियमार्थं पुनर्विधीयते । राजाश्व इत्यादौ सुप्स्वरसञ्ज्ञातुग्विधिभिन्नसवर्णदीर्घादिविधिसिद्धये । दण्डिष्वित्यत्र तु नलोपस्यासिद्धत्वं 'पूर्वत्रासिद्धम्' इत्यनेन प्राप्तं न भवतीति तस्य 'नलोपः सुप्स्वर' इति सूत्रविषयत्वं न सम्भवति । अन्यथा सुब्विधावित्यनेन दण्डिष्वित्यादौ षत्वे कर्तव्ये नलोपासिद्धत्वमपूर्वं विधीयेत । राजभ्यामित्यादौ तु दीर्घादौ कर्तव्ये सिद्धमेव नियमार्थं विधीयत इति विधिवैरूप्यमापद्येत । तस्माद्दण्डिष्वित्यादौ षत्वे कर्तव्ये नलोपस्यासिद्धत्वाभावाद् नलोपस्य सत्वादिणः परत्वानपायात् षत्वं निर्बाधमिति शब्देन्दुशेखरे प्रपञ्चितम् ।

प्रकृतमनुसरामः । स्वरविधौ यथा—पञ्चार्मम् । अत्र नलोपस्यासिद्धत्वादकारान्तत्वाभावाद् 'अर्मे चावर्णं द्व्यच्त्र्यच्' इति पूर्वपदाद्युदात्तत्वं न भवति । सञ्ज्ञाविधौ यथा—दण्डिदत्तौ दत्तदण्डिनौ । अत्र 'द्वन्द्वे घि' इति पूर्वनिपातनियमो न भवति, घिसञ्ज्ञाविधौ नलोपस्यासिद्धत्वेन इदन्तत्वविरहात् । कृति तुग्विधौ यथा—वृत्रहभ्याम् वृत्रहभिः । अत्र 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति विहितं क्विपमाश्रित्य 'ह्रस्वस्य पिति कृति तुक्' इति न तुक्, नलोपस्यासिद्धत्वेन ह्रस्वस्य नकारव्यवहितत्वात् । कृतीति विशेषणात् 'छे च' इति तुग्विधौ नलोपस्य नासिद्धत्वम् । ततश्च वृत्रहच्छत्रम् । इह स्यादेव 'छे च' इति तुक् । भाष्ये तु वृत्रहभ्यामित्यादौ नलोपस्य सत्त्वेऽपि सन्निपातपरिभाषया 'ह्रस्वस्य पिति'–इति तुक् न भविष्यतीति तुग्विधिग्रहणं प्रत्याख्यातम् ॥ 'स्वादिषु' इति पदत्वद्वारा भ्यांसन्निपातनिमित्तको नलोपस्तद्विघातकं न प्रवर्तयतीत्याशयः । ननु वृत्रहधनमित्यत्र तुग्व्यावृत्त्यर्थं तुग्विधिग्रहणमावश्यकम्, तत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य प्रवृत्तं पदत्वमादाय प्रवृत्तस्य नलोपस्य सन्निपातनिमित्तकत्वाभावादिति चेन्न, तुग्विधिग्रहणप्रत्याख्यानपरभाष्यप्रामाण्येन तादृशसन्निपातनिमित्तकनलोपविषयाणां वृत्रहधनमित्यादीनां अनभिधानकल्पनादित्यास्तां तावत् । राज्ञि राजनीति । 'विभाषा ङिश्योः' इत्यल्लोपविकल्प इति भावः ।

दीव्यतीति—प्रतिदिवा प्रतिदिवानौ प्रतिदिवानः। अस्य भविषयेऽल्लोपे कृते। **( ३५४ ) हलि च ८।२।७७।** रेफवान्तस्य धातोरुपधाया इको दीर्घः स्याद्धलि। न चाल्लोपस्य स्थानिवत्त्वम्। दीर्घविधौ तन्निषेधात्। बहिरङ्गपरिभाषा तूक्तन्यायेन न प्रवर्तते। प्रतिदीव्नः। प्रतीदीव्ना इत्यादि। यज्वा यज्वानौ यज्वानः। **( ३५५ ) न संयोगाद्वमन्तात् ६।४।१३७।** वकारमकारान्तसंयोगात्परस्याऽनोऽकारस्य लोपो न स्यात्। यज्वनः। यज्वना यज्वभ्याम् इत्यादि। ब्रह्मणः। ब्रह्मणा ब्रह्मभ्याम् इत्यादि। **( ३५६ ) इन्हन्पूषार्यम्णां शौ**

---

प्रतिदिवेति। दिवु क्रीडादौ। तस्मात् 'कनिन्युवृषितक्षि' इत्युणादिसूत्रेण कनिन्प्रत्ययः। कनावितौ। इकार उच्चारणार्थः। प्रतिदिवन्शब्दात् सुबुत्पत्तिः। 'सर्वनामस्थाने च' इति दीर्घः। हल्ङ्यादिना सुलोपे प्रतिदिवा इति रूपम्। सुटि राजवत्। अस्येति। प्रतिदिवन्शब्दस्य शसादावचि 'अल्लोपोऽन' इत्यल्लोपे सतीत्यर्थः। हलि च। 'र्वोरुपधाया दीर्घ इकः' इत्यनुवर्तते। 'सिपि धातोः' इत्यतो धातोरिति च। तच्च 'र्वोः' इत्यनेन विशेष्यते। तदन्तविधिः। तदाह—रेफवान्तस्येत्यादिना। रेफान्तस्य जीर्यतीत्युदाहरणम्। अपदान्तत्वात् 'र्वोरुपधायाः' इत्यप्राप्ते विधिः। प्रकृते च प्रतिदिव् न् अस् इति स्थिते नकारे हलि परे वान्तस्य दिव्धातोरुपधाया इकारस्य दीर्घ इति भावः। ननु 'अचः परस्मिन्' इत्यल्लोपस्य स्थानिवत्त्वादकारेण व्यवधानाद् हल्परत्वाभावात् कथमिह दीर्घ इत्याशङ्क्य परिहरति—न चाल्लोपस्य स्थानिवत्त्वमिति। कुत इत्यत आह—'दीर्घविधौ तन्निषेधादिति। 'न पदान्त' इति सूत्रेण दीर्घविधौ स्थानिवत्त्वनिषेधादित्यर्थः। नन्वेवमपि भसञ्ज्ञापेक्षस्याल्लोपस्य बहिर्भूतप्रत्ययापेक्षत्वेन बहिरङ्गतयाऽन्तरङ्गे दीर्घे कर्तव्ये असिद्धत्वादकारेण व्यवधानाद् हल्परत्वाभावात् कथमिह दीर्घ इत्यत आह—बहिरङ्गेति। यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्वस्यासिद्धतया अन्तरङ्गाभावे परिभाषाया अप्रवृत्तेः इति राजन्शब्दस्योक्तन्यायेन दीर्घस्यासिद्धतया तद्विषये 'असिद्धं बहिरङ्गम्' इति परिभाषा न प्रवर्तते इति भावः। प्रतिदीव्न इति। 'न भकुर्छुराम्' इति निषेधस्तु वान्तस्याभावान्नेति भावः। इत्यादीति। प्रतिदीव्ने। प्रतिदीव्नः। प्रतिदीव्नोः। भ्यामादौ हलि राजवदित्यर्थः। यज्वन्शब्दः सुटि राजवदित्याह—यज्वेति। शसि अल्लोपे प्राप्ते—न संयोगाद्वमन्तात्। वश्च मश्च वमौ अन्तौ यस्येति विग्रहः। 'अल्लोपोऽनः, इत्यनुवर्तते। तदाह—वकारेत्यादिना। अन्तग्रहणं स्पष्टार्थम्, वमयोः संयोगविशेषणत्वादेव तदन्तलाभात्। इत्यादीति। यज्वने यज्वनः यज्वनोः। भ्यामादौ हलि राजवदित्यर्थः। मान्तसंयोगस्योदाहरणमाह—ब्रह्मण इति। शसादावचि नाल्लोपः शेषं राजवदिति भावः। 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः। इत्यमरः।

६।४।१२॥ एषां शावेवोपधाया दीर्घः, नान्यत्र। इति निषेधे प्राप्ते ( ३५७ ) सौ च ।६।४।१३॥ इन्नादीनामुपधाया दीर्घः स्यादसम्बुद्धौ सौ परे। वृत्रहा। हे वृत्रहन्। 'एकाजुत्तरपदे—' ( सू० ३०७ ) इति णत्वम्। वृत्रहणौ वृत्रहणः। वृत्रहणम्। वृत्रहणौ। ( ३५८ ) हो हन्तेर्ञ्णिन्नेषु ७।३।५४॥ ञिति णिति च प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वं स्यात्। ( ३५९ ) हन्तेः ८।४।२२॥ उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णत्वं स्यात्। प्रहण्यात्। ( ३६० )—अत्पूर्वस्य

---

वृत्रो नाम असुरः, तं हतवानित्यर्थे 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति क्विप्। कपावितौ। अपृक्तलोपः। उपपदसमासः। 'सुपो धातु' इत्यमो लुक्, वृत्रहन्शब्दः, तस्मात् सुबुत्पत्तिः। सौ विशेषमाह—इन्हन्। 'ढ्लोपे' इत्यतो दीर्घ इत्यनुवर्तते। 'नोपधायाः' इत्यत उपधाया इति। तदाह—एषामिति। इन् हन् पूषन् अर्यमन् इत्यन्तानामित्यर्थः। अङ्गविशेषणत्वेन तदन्तविधिः। 'सर्वनामस्थाने च' इति सिद्धे नियमार्थमित्याह—शावेवेति। नान्यत्रेति। शेरन्यत्रेत्यर्थः। इति निषेधे प्राप्त इति। वृत्रहन्शब्दे हन् इत्यस्यापि शावेव दीर्घ इति नियमात् सौ परतः 'सर्वनामस्थाने' इति दीर्घे अप्राप्ते सतीत्यर्थः। सौ च। पूर्वसूत्रमनुवर्तते। तत्र यदनुवृत्तं तच्च तदाह—इन्नादीनामिति। असम्बुद्धाविति। 'सर्वनामस्थाने च' इत्यतः तदनुवृत्तेरिति भावः। 'इन्हन्पूष' इत्यस्यायमपवादः। हे वृत्रहन्निति। असम्बुद्धावित्यनुवृत्तेर्न दीर्घः। भिन्नपदत्वादाह—एकाजिति। वृत्रहणावित्यादि। शावेवेति नियमान्न दीर्घः। शसादावचि अल्लोपे कृते। हो हन्तेः। हः इति स्थानषष्ठी, हन्तेरित्यवयवषष्ठी। ञ् च ण् च ञ्णौ इतौ ययोस्तौ ञ्णितौ। इच्छब्दः प्रत्येकं सम्बध्यते। ञ्णितौ च नश्च ञ्णिन्नाः तेष्विति विग्रहः। अङ्गाधिकारात् प्रत्ययत्वं ञ्णितोर्लभ्यते। 'चजोः कु घिण्यतोः' इत्यतः कुग्रहणमनुवर्तते। तदाह—ञितीत्यादिना। हन्तेरिति श्तिपा निर्देशः। हन्धातोरित्यर्थः। प्रकृते हकारस्य नकारपरत्वात् कुत्वम्। तत्र घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हस्य तादृशो वर्गचतुर्थो घकारः। वृत्रघ्नः वृत्रघ्ना इत्यादि सिद्धम्। नन्विह कथं न णत्वम् भिन्नपदस्थत्वेऽपि 'एकाजुत्तरपदे णः' इति णत्वस्य दुर्वारत्वात्, कृतेऽप्यल्लोपे तस्य पूर्वस्माद्विधौ स्थानिवत्त्वादुत्तरपदस्य एकाच्त्वात् स्थानिवत्त्वाभावेऽपि 'प्रातिपदिकान्तनुम्विभक्तिषु च' इत्यस्य 'कुमति च' इत्यस्य वा दुर्वारत्वादिति प्राप्ते तद्वारणार्थम् 'हन्तेरत्पूर्वस्य' इति सूत्रं विभज्य व्याचष्टे—हन्तेः। 'रषाभ्यां नो णः' इत्यनुवर्तते। 'उपसर्गादसमासेऽपि' इत्यतः उपसर्गादित्यनुवर्तते। तात्स्थ्यात्ताच्छब्द्यम्। उपसर्गस्थादिति लभ्यते। तच्च रषयोः प्रत्येकमन्वेति। तदाह—उपसर्गस्थान्निमित्तादित्यादिना। निमित्तशब्देन रेफः षकारश्च विवक्षितः। प्रहण्यादिति। अत्र भिन्नपदस्थ—

८।४।२२ ॥ हन्तेरत्पूर्वस्यैव नस्य णत्वम्, नान्यस्य। प्रघ्नन्ति । योगविभाग-सामर्थ्यात् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (प ६२) इति न्यायं बाधित्वा 'एकाजुत्तरपदे' (सू २०७) इति णत्वमपि निवर्त्तते । नकारे परे कुत्वविधिसामर्थ्यादल्लोपो न स्थानिवत् । वृत्रघ्नः वृत्रघ्ना इत्यादि । यत्तु वृत्रघ्नः इत्यादौ वैकल्पिकं णत्वं माधवेनोक्तं, तद्भाष्यवार्तिकविरुद्धम् । एवं शार्ङ्गिन्,

---

त्वादप्राप्ते णत्वे वचनम्, प्रकृतोपयुक्तमाह—अत्पूर्वस्य। हन्तेरित्यनुवर्तते 'रषाभ्यां नो णः' इति च। उपसर्गादिति तु निवृत्तम्। हन्तेरत्पूर्वस्य नस्य णः स्यादिति लभ्यते सिद्धे सत्यारम्भो नियमार्थः तदाह—हन्तेरत्पूर्वस्यैवेत्यादिना । प्रघ्नन्तीति। हन्तेर्लट्, झिः, झोऽन्तः, शप्, लुक् 'गमहन' इत्युपधालोपः । 'हो हन्तेः' इति कुत्वम् । प्रघ्नन्तीति रूपम् । अत्र उपसर्गस्थरेफात् परत्वात्, 'हन्तेः' इत्यनेन प्राप्तं णत्वम् 'अत्पूर्वस्य' इति नियमान्न भवति । वृत्रघ्न इत्यत्र 'प्रातिपदिकान्त' इत्यादिणत्वं निवर्तते ।

ननु प्रातिपदिकान्तनुम्विभक्तिषु च, एकाजुत्तरपदे णः, कुमति च, 'हन्तेरत्पूर्वस्य इति सूत्रपाठक्रमः। ततश्च 'अनन्तरस्य विधिः' इति न्यायेन 'अत्पूर्वस्य' इति नियमेन प्रघ्नन्तीत्यत्र हन्तेरित्यव्यवहितणत्वमेव निवर्तेत नत्वन्यदित्यत आह—योगेति। यदि 'अत्पूर्वस्य' इत्यनेन 'हन्तेः, इति णत्वमेव व्यावर्त्येत, तर्हि हन्तेरत्पूर्वस्य इत्येकमेव सूत्रं स्यात् । उपसर्गस्थान्निमित्तात् परस्य हन्तेरत्पूर्वस्य नस्य णत्वम् इत्येतावतैव प्रघ्नन्तीत्यत्र णत्वनिवृत्तिसम्भवात् । अतो योगविभागसामर्थ्यात् णत्वमात्रस्यायं नियम इति विज्ञायत इत्यर्थः । एकाजुत्तरेति । 'कुमति च' इत्यस्य 'प्रातिपदिकान्त' इत्यस्य चोपलक्षणम्, अल्लोपस्य पूर्वस्मादपि विधौ स्थानिवत्त्वादेकाच्त्वमुत्तरपदस्य बोध्यम् । न च 'पूर्वत्रासिद्धे न स्थानिवत्' इति वाच्यम्, 'तस्य दोषः, संयोगादिलोपलत्वणत्वेषु' इत्युक्तेः । ननु वृत्रघ्नः इत्यत्र 'हो हन्तेः' इति कथं कुत्वम् । पूर्वस्य विधावल्लोपस्य स्थानिवत्त्वादित्यत आह—नकारे पर इति । माधवमतं दूषयितुमनुवदति—यत्त्विति । तुः पूर्ववैषम्ये । वैकल्पिकमिति । 'प्रातिपदिकान्त' इति विहितमित्यर्थः । तद्भाष्येति । 'कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः' किं प्रयोजनम् । वृत्रघ्नः । सुघ्नः । प्राघानि । 'हन्तेरत्पूर्वस्य' इति सूत्रे 'अत्पूर्वग्रहणं न कर्तव्यम्' इति 'अट्कुप्वाङ्' इति सूत्रे भाष्यम् । अत्र णत्वप्रकरणे हादेशकुव्यवाये प्रतिषेधविज्ञानात् 'प्रातिपदिकान्त' इति णत्वमपि हादेशकुव्यवाये न भवतीति विज्ञायते तद्विरोधाद् माधवमतमुपेक्ष्यमित्यर्थः । एवमिति । वृत्रहन्शब्दवदित्यर्थः । 'इन्हन्पूषार्यम्णां शौ' 'सौ च' इति दीर्घनियममात्रे दृष्टान्तः न तु कुत्वादौ, असम्भवात् । शार्ङ्गमस्यास्तीत्यर्थे 'अत इनिठनौ' इति मत्वर्थीय इनिः । यशोऽस्यास्तीत्यर्थे 'अस्मायामेधास्रजः—'

यशस्विन्, अर्यमन्, पूषन् । यशस्विन्निति विन्प्रत्यये इनोऽनर्थकत्वेऽपि 'इन्हन्—' (सू. ३५६) इत्यत्र ग्रहणं भवत्येव । 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' (प १७) इति वचनात् । अर्यम्णि—अर्यमणि । पूष्णि पूषणि । (३६०) **मघवा बहुलम् ६।४।१२८।।** मघवन्शब्दस्य वा तृ इत्यन्तादेशः स्यात् । ऋ इत् । (३६१) **उगिदचां सर्वनामस्थानेऽधातोः ७।१।७०।।** अधातोरुगितो नलोपिनोऽञ्चतेश्च नुमागमः स्या-

---

इति विनिः । 'तसौ मत्वर्थे' इति भावान्न रुत्वम् । नन्वर्थवत्परिभाषया 'इन्हन्' इत्यत्रार्थवत एव इनो ग्रहणम् । ततश्च विन्प्रत्यये इनोऽनर्थकत्वात् तस्य कथं ग्रहणमित्याशङ्क्य परिहरति—यशस्विन्नित्यादिना । अनिनस्मन्निति । एतच्च 'येन विधिः' इति सूत्रे भाष्ये स्थितम् । राज्ञः इत्यत्र अन् अर्थवान्, दाम्नः इत्यत्र तु अनर्थकः । शार्ङ्गी इत्यत्र इन् अर्थवान्, यशस्वी इत्यत्र तु अनर्थकः । सुपया इत्यत्रास् अर्थवान्, सुस्रोता इत्यत्र तु अनर्थकः । असन्तत्वाद्दीर्घः । सुशर्मेत्यत्र मन् अर्थवान्, सुप्रथिमा इत्यत्र तु अनर्थकः । 'मनः' इति न ङीप् । अर्यमन्शब्दे पूषन्शब्दे च अल्लोपे विशेष इत्याह—अर्यम्णि इत्यादि । 'विभाषा ङिश्योः' इत्यल्लोपविकल्पः । शसादावचि तु नित्यमल्लोपः उक्तप्राय इति भावः ।

महते पूज्यत इत्यर्थे कनिप्रत्ययः । इकार उच्चारणार्थः । ककार इत् । अन् इति प्रत्ययः शिष्यते । धातोरुगागमः । तत्र ककार इत् । उकार उच्चारणार्थः । कित्त्वादन्तावयवः । महधातोर्हस्य घश्च इति त्रयं निपात्यते । श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्नित्युणादिसूत्रेण निष्पन्ने तस्मिन् मघवन्शब्दे विशेषमाह—मघवा बहुलम् । 'अर्वणस्त्रसौ' इत्यनुवर्तते । तच्च लुप्तप्रथमाकम् । मघवेति तु षष्ठ्यर्थे प्रथमा । तदाह—मघवन्शब्दस्येत्यादिना । ऋ इदिति । 'उपदेशेऽजनुनासिक इत्' इति ऋकार इत्संज्ञक इत्यर्थः । ऋ इत्यविभक्तिको निर्देशः प्रक्रियासमये न दुष्यति । 'अलोऽन्त्यस्य' इति नकारस्य तकारः । सर्वादेशस्तु न, नानुबन्धकृतमनेकाल्त्वम् इति वचनात् । मघवत् स् इति स्थिते । उगिदचाम् । अधातोरिति छेदः । उक् इत् येषां ते उगितः । अच् इति लुप्तनकारस्य 'अञ्चु गतिपूजनयोः' इति धातोर्ग्रहणम् । अधातोरित्युगिद्विशेषणम्, न त्वञ्चतेः, असम्भवात् । 'इदितो नुम् धातोः' इत्यतो नुमित्यनुवर्तते । तदाह–अधातोरुगित इत्यादिना । नुमि मकार इत् । उकार उच्चारणार्थः । मित्त्वादन्त्यादचः परः । अजिति अच् प्रत्याहारो न गृह्यते, व्याख्यानाद् 'नपुंसकस्य झलचः' इत्यज्ग्रहणाच्च । अन्यथा 'उगिदचाम्' इत्येव सिद्धे तद्वैयर्थ्यात् । वृद्धिः गुणः इत्यादिनिर्देशाच्च । अधातोरित्येतत्त

रसर्वनामस्थाने परे। उपधादीर्घः। मघवान्। इह दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं न भवति बहुलग्रहणात्। तथा च 'श्वन्नुक्षन्—' (उ १५७) इति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयसिद्धिमाश्रित्यैतत्सूत्रं प्रत्याख्यातमाकरे। 'हविर्जक्षिति निःशङ्को मखेषु मघवानसौ' इति भट्टिः। मघ-

---

अग्रे गोमच्छब्दनिरूपणावसरे मूल एव व्याख्यास्यते। तत्प्रयोजनं च तत्रैव वक्ष्यते। उपधादीर्घ इति। मघवन् त् स् इति स्थिते हल्ङ्यादिना सुलोपे संयोगान्तलोपे च सति 'सर्वनामस्थाने च' इति दीर्घ इत्यर्थः। नन्विह दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वाद् नान्तत्वाभावात् पचन्नित्यादाविव दीर्घो न सम्भवतीत्यत आह—दीर्घे कर्तव्य इति। बहुलग्रहणादिति।

'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।
शिष्टप्रयोगाननुसृत्य लोके विज्ञेयमेतद्बहुलग्रहे तु॥' इति स्थितिः।

अत्र दीर्घे कर्तव्ये संयोगान्तलोपस्य नासिद्धत्वम्। पचन्नित्यादौ तु असिद्धत्वमेवेति बहुलग्रहणाल्लभ्यत इत्यर्थः। ननु त्रादेशपक्षे मघवन्नित्येवास्तु, बहुलग्रहणेन संयोगान्तलोपस्यासिद्धत्वाभावकल्पनायां प्रमाणाभावात्। वेदे तु यज्ञेन मघवानित्यादौ दीर्घः छान्दसो भविष्यतीत्यत आह—तथा चेति। त्रादेशपक्षे संयोगान्तलोपस्यासिद्धत्वाभावसभ्युपगमस्यैवेत्यर्थः। निपातनादिति। कनिप्रत्ययस्य, अवुगागमस्य, घत्वस्य इति त्रयाणां निपातनादित्यर्थः। तथा च नान्तो मघवन्शब्दः सिध्यतीति भावः। मघशब्दादिति। धनपर्यायादित्यर्थः। मघः धनमस्यास्तीत्यर्थे मतुपि 'मादुपधायाश्च' इति वत्वे तान्तो मघवच्छब्दः सिद्ध इति भावः। भाषायामपीति। लोके छन्दसि च इत्यर्थः। शब्दद्वयेति। मघवन्शब्दो मघवच्छब्दश्चेति शब्दद्वयम् 'मघवा बहुलम्' इत्यस्य फलम्। तस्य सिद्धिमाश्रित्येत्यर्थः। आकर इति। 'केशाद्वः' इति सूत्रे कैयटग्रन्थ इत्यर्थः। तत्र ह्येवमुक्तम्—'मघवा बहुलम्' इत्येतन्न कर्तव्यम्। 'श्वन्नुक्षन्' इति निपातनाद् मघशब्दान्मतुपा च 'भाषायामपि शब्दद्वयस्य सिद्धत्वाद्' इति। त्रादेशपक्षे संयोगान्तलोपस्यासिद्धत्वाद् दीर्घाभावाश्रयणे मघवन्निति रूपम्। मतुपि तु 'अत्वसन्तस्य' इति दीर्घे मघवानिति रूपमिति रूपभेदापत्त्या तदसङ्गतिः स्पष्टैवेति भावः। वस्तुतस्तु कन्यन्तस्य प्रत्ययस्वरेणान्तोदात्तत्वम्, मतुपि तु 'ह्रस्वनुड्भ्यां मतुप्' इति मतुबुदात्तत्वस्य 'न गोश्वन्' इति प्रतिषेधे सति पित्त्वादनुदात्तत्वे घकारादकारस्य फिट्स्वरेण उदात्तत्वमिति फलभेदात् कैयटग्रन्थश्चिन्त्य एव। मघवानिति दीर्घः शिष्टसम्मतश्चेत्याह—हविरिति। मखेषु यज्ञेषु निश्शङ्कः असौ मघवान् हविर्जक्षिति-भक्षयतीत्यर्थः। मघवन्तावित्यादि। सुटि त्रादेशो नुम्चेति भावः। शसादौ

वन्तौ मघवन्तः । हे मघवन् । मघवन्तम् मघवन्तौ मघवतः । मघवता मघवद्भ्याम् इत्यादि । तृत्वाभावे मघवा । 'छन्दसीवनिपौ च' इति वनिबन्तं मध्योदात्तं छन्दस्येव । अन्तोदात्तं तु लोकेऽपीति विशेषः मघवानौ मघवानः । सुटि राजवत् । ( ३६२ ) श्वयुवमघोनामतद्धिते ६।४।१३३।। अन्नन्तानां भसंज्ञ-

त्रादेशोः न तु नुम्, असर्वनामस्थानत्वादित्यभिप्रेत्याह—मघवत इति । मघवद्भ्यामित्यादि । त्रादेशे 'स्वादिषु' इति पदत्वाज्जश्त्वम् । सुपि त्रादेशे जश्त्वे चर्त्वे मघवत्सु ।

तृत्वाभावे मघवेति । नान्तात् सौ राजवद्रूपमिति भावः । ननु 'मघवा बहुलम्' इति सूत्रे 'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत्' इति वार्त्तिकभाष्यकैयटेषु मघवन्शब्दस्य छन्दोमात्रविषयत्वावगमात् कथं तस्य लोके प्रयोग इत्यत आह—छन्दसीवनिपावित्यादि । 'तदस्यास्त्यस्मिन्निति मतुप्' इत्यधिकारे 'केशाद्वोऽन्यतरस्याम्' इति सूत्रे 'छन्दसीवनिपौ च' इति वार्त्तिकम् । 'छन्दसि ईवनिपौ च वक्तव्यौ' वश्च मतुप्च । 'रथीरभून्मुद्गलानी गविष्टौ, सुमङ्गलीरियं वधूः, ऋतवानं मघवानमीमहे' इति तत्र भाष्यम् । तत्र वनिप्प्रत्ययान्ते मघवन्शब्दे प्रत्ययस्वरेण वकारादकार उदात्तः । मघशब्दः फिट्स्वरेणान्तोदात्तः, 'अनुदात्तं पदमेकवर्जम्' इति शिष्टस्वरेण मकारादकारः वकारादकारश्चानुदात्तः । 'उदात्तादनुदात्तस्य स्वरितः' इति वकारादकारः स्वरितः । तथा च मघवन्निति रूपं मध्योदात्तं सम्पद्यते । एतादृशमघवन्शब्दविषयकं छान्दसत्वाभिधानम् । कन्यन्ते तु मघवन्शब्दे वकारादकारः प्रत्ययस्वरेणोदात्तः । शिष्टस्वरेण मकारादकारो घकारादकारश्च अनुदात्तौ । तथा च मघवन्निति रूपमन्तोदात्तमिति स्थितिः । एतादृशमघवन्शब्दस्तु लोकवेदसाधारणः, तस्य छन्दोमात्रविषयत्वे प्रमाणाभावात् । किं च 'वनो र च' इति सूत्रे भाष्यम्—'मघवन्शब्दः अव्युत्पन्नं प्रातिपदिकमि'ति । अयमपि मघवन्शब्दः फिट्स्वरेणान्तोदात्तः लोकवेदसाधारण एव, छन्दोमात्रविषयत्वे प्रमाणाभावादिति भावः । शब्दरत्ने तु 'न शिष्यं छान्दसं हि तत्' इत्युदाहृतभाष्यवार्तिकयोः सामान्यप्रवृत्तयोः मध्योदात्तमात्रविषयसंकोचे प्रमाणं न किञ्चिदस्ति । कविप्रयोगाणां तु 'तं तस्थिवांसं नगरोपकण्ठे' इत्यादिविषये बहुशः प्रमाददर्शनात् तेषामपि नार्षवचनसङ्कोचकता । अतो मघवन्शब्दस्य सर्वस्यापि लोके असाधुत्वमेवेति प्रपञ्चितम् । सुटि राजवदिति । तृत्वाभावपक्षे नान्तत्वाद्दीर्घ इति भावः ।

शसादावचि मघवन् अस् इत्यादिस्थिते 'अल्लोपोऽनः' इति प्राप्ते । श्वयुवमघोनामतद्धिते । श्वा च, युवा च, मघवा च इति द्वन्द्वः । 'वसोः सम्प्रसारणम्' इत्यतः सम्प्रसारणमित्यनुवर्तते । 'भस्य' इत्यधिकृतम् । 'अल्लोपोऽनः' इत्यतः अत इत्यपकृष्यते । तच्च श्वयुवमघोनां प्रत्येकं विशेषणं, तदन्तविधिः । फलितमाह—अन्नन्तानामित्यादि । 'इग्यणः सम्प्रसारणम्' इति वकारस्य सम्प्रसारणमुकारः । मघ उ अन् इति

कानामेषामतद्धिते परे सम्प्रसारणं स्यात्। 'सम्प्रसारणाच्च (सू ३३०)। 'आद्गुणः' (सू ६९)। मघोनः। अन्नन्तानाम् किम्। मघवतः। मघवता। स्त्रियां मघवती। अतद्धिते किम्। माघवनम्। मघोना। मघवभ्याम् इत्यादि। शुनः। शुना श्वभ्यामित्यादि। युवन्शब्दे वस्योत्वे कृते। (३६३) **न सम्प्रसारणे सम्प्रसारणम् ६।१।३७॥** सम्प्रसारणे परतः पूर्वस्य यणः सम्प्रसारणं न स्यात्। इति यकारस्य नेत्वम्। अत एव ज्ञापकादन्त्यस्य यणः पूर्वं सम्प्रसारणम्।

---

स्थिते पूर्वरूपमुक्तं स्मारयति—सम्प्रसारणाच्चेति। मघ उ न् इति स्थिते गुणं स्मारयति—आद्गुण इति। अन्नन्तानां किमिति। श्वयुवमघोनामन्नन्तत्वाव्यभिचारात् किमर्थमन्नन्तत्वविशेषणम्। मघवन्शब्दे नकारस्य त्रादेशपक्षेऽपि एकदेशविकृतस्यानन्यतया अन्नन्तत्वसत्त्वादिति प्रश्नः। मघवत इति। त्रादेशपक्षे मघवन्शब्दे सम्प्रसारणनिवृत्त्यर्थम् अन्नन्तत्वविशेषणम्। यद्यप्येकदेशविकृतस्यानन्यतया अन्नन्तत्वमस्त्येव, तथापि विशेषणसामर्थ्यात् श्रूयमाणनकारान्तस्यैव सम्प्रसारणमित्याहुः। स्त्रियां मघवतीति। मघवतः स्त्री मघवती, पुंयोगेन स्त्रियां वृत्तौ 'उगितश्च' इति ङीप्। अत्राप्यन्नन्तत्वविशेषणाद् न सम्प्रसारणमिति भावः। अत्र 'उगिदचाम्' इति नुम् तु न, ङीपा व्यवधानेन तान्तस्य उगितः सर्वनामस्थानपरकत्वाभावात्। लिङ्गविशिष्टपरिभाषा तु नेह प्रवर्तते, विभक्तौ लिङ्गविशिष्टाग्रहणमित्युक्तेरिति भावः। माघवनमिति। 'साऽस्य देवता' इति मघवन्शब्दात् अणि आदिवृद्धिः। अत्राणस्तद्धितत्वात् तस्मिन् परे न सम्प्रसारणमिति भावः। मघवभ्यामिति। भ्यामादौ हलि नलोप इति भावः। इत्यादीति। मघोने। मघोनः। मघोनोः मघोनाम्। मघोनि। श्वन्शब्दः प्रायेण राजवत्। शसादावचि 'श्वयुव' इति सम्प्रसारणं वकारस्य उकारः। शु अन् इति स्थिते 'सम्प्रसारणाच्च' इति पूर्वरूपमिति मत्वाह—शुनः शुनेति। इत्यादीति। शुने। शुनः। शुनोः शुनाम्। शुनि। युवन्शब्दोऽपि प्रायेण राजवत्। शसादावचि विशेषमाह—युवन्शब्द इति। युवन् अस् इत्यादिस्थिते 'श्वयुव' इति वकारस्य सम्प्रसारणे उकारे यु उ अन् इति स्थिते 'सम्प्रसारणाच्च' इति पूर्वरूपे यु उ न् इति स्थिते सवर्णदीर्घे यून इत्यादिरूपेषु सिद्धेषु, यकारस्यापि सम्प्रसारणे प्राप्त इत्यर्थः। 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः' इत्यस्य तु नायं विषयः, कार्याश्रयवर्णभेदेन लक्ष्यभेदात्। अन्यथा संस्कर्तेत्यादौ 'अनचि च' इत्यादेरसकृत्प्रवृत्त्यनुपपत्तेरिति भावः।

न सम्प्रसारणे। इति यकारस्येति। सवर्णदीर्घनिष्पन्नस्य उकारस्य 'अचः परस्मिन्' इति स्थानिवत्त्वेन सम्प्रसारणतया यकारस्य सम्प्रसारणपरकत्वाद् न सम्प्रसारणमिकार इत्यर्थः। ननु उकारद्वयस्थानिकस्य ऊकारस्य स्थानिवत्त्वे सति तस्य उकारद्-

यूनः । यूना । युवभ्यामित्यादि । अर्वा । हे अर्वन् । ( ३६४ ) **अर्वणस्त्रसावनञः । ६।४।१२७।** नञा रहितस्यार्वन्नित्यस्याङ्गस्य तृ इत्यन्तादेशः स्यात्, न तु सौ । उगित्वान्नुम् । अर्वन्तौ अर्वन्तः । अर्वन्तम् । अर्वन्तौ अर्वन्तः । अर्वता अर्वद्भ्याम् इत्यादि । अनञः किम् ? अनर्वा यज्ववत् । ( ३६५ ) **पथिमथ्यृभुक्षामात् ७।१।८५।।** एषामाकारोऽन्तादेशः स्यात्सौ परे । आ आत्

---

यात्मकतया प्रथमेन प्रकारेण व्यवधानात् सम्प्रसारणपरत्वाभावात् कथमिह निषेधः । 'येन नाव्यवधानम्' इति न्यायस्य तु नायं विषयः, विव्यथे इत्यादौ 'व्यथो लिटि' इति वकारस्याव्यवाहितसम्प्रसारणपरत्वे निषेधस्य चरितार्थत्वाद् इति चेन्मैवम् । एवं हि सति 'न सम्प्रसारणे सम्प्रसारणम्' इति निषेधस्य 'व्यथो लिटि' इति सम्प्रसारणमात्रविषयकत्वमापद्येत । एवं च सति 'व्यथो यो लिटि' इति यकारग्रहणेनैव सिद्धे 'न सम्प्रसारणे सम्प्रसारणम्' इति सूत्रमनर्थकमेव स्यात् । अतः 'श्वयुव' इति सम्प्रसारणनिषेधकत्वमस्यावश्यकमिति व्यवहितेऽपि सम्प्रसारणे परे यून इत्यादौ निषेधो निर्बाधः । 'यूनस्तिः' इत्यादिनिर्देशाच्चेत्यलम् । ननु सकृत्प्रवृत्त्यैव युवन्शब्दे यवयोः सम्प्रसारणे जाते निषेधो व्यर्थः । निमित्तत्वानुपपत्तिश्च । यद्वा प्रथमं यकारस्य सम्प्रसारणमस्तु । तदानीं सम्प्रसारणपरत्वाभावेन निषेधाप्रवृत्तेः । अनन्तरं तु वकारस्यापि सम्प्रसारणमस्तु । तत्राह—अत एव ज्ञापकादिति । अन्यथा एतन्निषेधारम्भवैयर्थ्यापातादिति भावः । इत्यादीति । यूने । यूनः । यूनोः । यूनि ।

आतो मनिन्क्वनिब्वनिपश्च, 'अन्येभ्योऽपि दृश्यते' इति ऋधातोः वनिपि गुणे रपरत्वे अर्वन्शब्दः अश्वे योगरूढः । तस्य सौ राजवद्रूपं मत्वाह—अर्वा । हे अर्वन्निति । अर्वणस्त्रसावनञः । तृ असौ इति छेदः । न विद्यते नञ यस्येति बहुव्रीहिः । अङ्गस्येत्यधिकृतम् अर्वणा विशेष्यते । तदाह—नञा रहितस्येत्यादिना । ऋकार इत् । 'अलोऽन्त्यस्य' इति नस्य तः । उगित्वान्नुमिति । 'उगिदचाम्' इत्यनेनेति भावः । अर्वन्ताविति । नुमो नस्य 'नश्चापदान्तस्य' इति अनुस्वारः, परसवर्ण इति भावः । शसादावचि असर्वनामस्थानत्वान्नुम् नेति मत्वाह—अर्वत इति । अर्वद्भ्यामिति । 'स्वादिषु' इति पदत्वाज्जश्त्वमिति भावः । इत्यादीति । अर्वद्भिः । अर्वते । अर्वद्भ्यः । अर्वतः अर्वतोः अर्वताम् । अर्वति । अर्वत्सु । अनञः किमिति । अनञः इत्यस्य किं प्रयोजनमित्यर्थः । अनर्वा यज्ववदिति । अनर्वन्शब्दो यज्ववदित्यर्थः । शसादावचि 'न संयोगाद्वमन्ताद्' इत्यल्लोपो नेति भावः ।

पथिन्, मथिन्, ऋभुक्षिन्, एते नकारान्ताः । तेषु विशेषमाह—पथिमथ्यृभुक्षामात् । पन्थाश्च, मन्थाश्च, ऋभुक्षाश्च, पथिमथ्यृभुक्षाणः तेषामिति विग्रहः । 'सावन-

इति प्रश्लेषेण शुद्धाया एव व्यक्तेर्विधानान्नानुनासिकः। ( ३६६ ) इतोऽत्सर्वनामस्थाने ७।१।८६॥ पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे। ( ३६७ ) थो न्थः ७।१।८७॥ पथिमथोस्थस्य न्थादेशः स्यात्सर्वनामस्थाने परे। पन्थाः पन्थानौ पन्थानः। पन्थानम् पन्थानौ। ( ३६८ ) भस्य टेर्लोपः

---

डुहः' इत्यतः सावित्यनुवर्तते। आदिति तपरकरणम्। आकार एव विधेयः तदाह—एषामित्यादिना। 'अलोऽन्त्यस्य' इति नकारस्य आकारः। ननु नकारस्य आन्तरतम्याद् अनुनासिक एव आकारः प्राप्नोति। न च निरनुनासिकस्यैवाकारस्योच्चारणात् शुद्ध एव आकार इति वाच्यम्, गुणानामभेदकत्वाद् भेदकत्वेऽपि तपरकरणेन अनुनासिकस्याप्याकारस्य ग्रहणात्, व्यक्तिपक्षे तपरसूत्रस्य अनण्सु दीर्घप्लुतेषु विध्यर्थत्वात्। न च ग्रहणकसूत्रे वार्णसमाम्नायिकत्वेन निश्चितस्याण्ग्रहणस्य अप्रत्यय इत्यस्य च तपरसूत्रे अनुवृत्तेराकारस्येहानण्त्वाद् विधीयमानत्वाच्च न तत्काल इति वाच्यम्, तपरसूत्रे अण्ग्रहणस्य अप्रत्ययग्रहणस्य चानुवृत्तौ मानाभावादित्यत आह—आ आदिति। सवर्णदीर्घेणाकारान्तरं प्रश्लिष्यते। ततश्चाननुनासिकरूप आकारो भवतीति लभ्यते। न च सर्वादेशत्वं शङ्क्यम्। न ह्यत्र वर्णद्वयं विधीयते, विशेषणविशेष्यभावेनान्वयाभ्युपगमेन अननुनासिकाकारस्यैकस्यैव विधानादिति भावः। भाष्ये तु अनुनासिकविधेः संसतत्वे प्रतिपत्तिलाघवाय अनुनासिकस्यैव 'उञः, ऊँ' इत्यत्रेव उच्चार्य विधानसम्भवात्तदनुच्चारणाच्छुद्ध एव आकार इह विधेय इत्युक्तम्। तपरकरणं तु उच्चारणार्थमेव। वस्तुतस्तु 'भाव्यमानेन सवर्णानां ग्रहणं न' इति परिभाषयैव अनुनासिकाकारनिराससम्भवादाकारप्रश्लेषक्लेशो व्यर्थः। 'भाव्यमानोऽण् सवर्णान्न गृह्णाति' इति पाठस्तु प्रामादिकः, 'ज्यादादीयसः' इति सूत्रे आदिति तपरनिर्देशेनेयं परिभाषा ज्ञाप्यते—'भाव्यमानेन सवर्णानां ग्रहणं न' इत्येव भाष्ये पाठाद् अणुदित्सूत्रभाष्येऽप्यण्ग्रहणरहिताया एवास्याः परिभाषायाः पाठदर्शनाच्चेत्यास्तां तावत्। नकारस्य आत्वे पथि आ स् इति स्थिते। इतोऽत्। पथिमथ्यृभुक्षाम् इत्यनुवर्तते। इत इति तपरकरणं स्पष्टार्थम्, पथ्यादिषु त्रिषु दीर्घप्लुतयोरसम्भवात्। भाव्यमानत्वादेव सवर्णाग्राहकत्वे सिद्धे अदिति तपरकरणमपि स्पष्टार्थमेव। तदाह—पथ्यादेरित्यादिना। पथ आ स् इति स्थिते। थो न्थः। थः न्थ इति च्छेदः। थः इति षष्ठी। आदेशे अकार उच्चारणार्थः। पथिमथिग्रहणमनुवर्त्तते। ऋभुक्षिग्रहणं निवृत्तम्, तत्र थकाराभावात्। 'इतोऽत्सर्वनामस्थाने' इत्यतः सर्वनामस्थानग्रहणमनुवर्तते तदाह—पथिमथोरित्यादिना। पन्थाः इति। नकारस्य आत्वे इकारस्य अत्वे थकारस्य न्थादेशे पन्थ आ स् इति स्थिते सवर्णदीर्घे रुत्वविसर्गाविति भावः। पन्थानाविति। पथिन् औ इति स्थिते सावित्युक्तेर्नात्त्वम् 'इतोऽत्' इति इका-

७।१।८८॥ भसंज्ञकस्य पथ्यादेष्टेर्लोपः स्यात् । पथः । पथा पथिभ्यामित्यादि । एवं मन्थाः ऋभुक्षाः । स्त्रियां नान्तलक्षणे ङीपि भत्वाट्टिलोपः । सुपथी ( सुमथी ) नगरी । अनृभुक्षी सेना । आत्त्वं नपुंसके न भवति 'न लुमता—' ( सू २६२ )

रस्यात्त्वे थकारस्य न्थादेशे 'सर्वनामस्थाने च' इति दीर्घे रूपमिति भावः । एवं पन्थानः । पन्थानम् । पन्थानौ । शसादावचि विशेषमाह—भस्य टेर्लोपः । पथ्यादेरिति । पथिमथ्यृभुक्षाम् इत्यनुवर्तत इति भावः । पथः पथेति । पथिन् अस् पथिन् आ इति स्थिते इनो लोपे रूपद्वयमिति भावः । पथिभ्यामिति । नलोपे रूपम् । इत्यादीति । पथिभिः । पथे । पथिभ्यः । पथः पथोः पथाम् । पथि, पथोः पथिषु ।

एवं मन्थाः ऋभुक्षाः इति । मन्थदण्डवाची मथिन्शब्दः । तस्य आत्त्वं, अत्त्वं, न्थादेशः, टिलोपश्च । मन्थाः । मन्थानौ । मन्थानः । मन्थानम् । मन्थानौ । मथः । मथा । मथिभ्याम् । मथे । मथः । मथोः मथाम् । मथि । मथिषु । ऋभुक्षिन्शब्दस्तु इन्द्रवाची । तत्र 'थो न्थः' इतिवर्जमात्त्वादि भवति । पात्परत्वाण्णत्वं च । ऋभुक्षाः ऋभुक्षाणौ इत्यादि । यत्तु अत्र पन्थानमात्मनः इच्छति पथीयति 'सुप आत्मनः क्यच्', 'नः क्ये' इति पदत्वात् नलोपः 'अकृत्सार्वधातुकयोः' इति दीर्घः । 'सनाद्यन्ताः' इति धातुत्वम् ततः क्विप् । अल्लोपयलोपौ । एकदेशविकृतस्यानन्यत्वात् 'पथिमथि' इत्यात्त्वं, 'थो न्थः' । 'इतोऽत्' इत्यत्त्वं तु तपरकरणान्न भवति । पन्थाः । 'एरनेकाचः'—इति यणं बाधित्वा परत्वान्नित्यत्वाच्च 'थो न्थः' । ततः संयोगपूर्वत्वान्न यण् । किन्त्वियङेव । पन्थियौ । 'भस्य टेर्लोपः' पथः इत्यादि प्रौढमनोरमातत्त्वबोधिन्यादावुक्तम् । तदेतदनुनासिकविधौ सति प्रतिपत्तिलाघवायानुनासिकस्यैव उच्चारणे कार्ये तदनुच्चारणाच्छुद्धस्यैव विधानमिति भाष्यविरोधादुपेक्ष्यम् । पथीयतेः क्विपि हि ईकारस्य शुद्धाकारार्थम् अनुनासिकानुच्चारणस्यावश्यकत्वे तदसंगतिः स्पष्टैव । तस्मात् पथीयतेः क्विपः अनभिधानमेवोचितमिति शब्देन्दुशेखरे स्पष्टम् । प्रसङ्गादाह—स्त्रियामिति । सु शोभनः पन्थाः अस्या इति बहुव्रीहिः । 'ऋन्नेभ्यः'—इति ङीप् । भस्य टेर्लोपः' इति इनो लोपः । सुपथीति रूपम् 'ऋक्पूः'—इत्यप्तु न, 'न पूजनात्' इति निषेधात् । न चैवमपि 'न पूजनात्' इति निषेधस्य षचः प्रागेव प्रवृत्तेर्वक्ष्यमाणत्वात् 'इनः स्त्रियाम्' इति कप् दुर्वार एवेति वाच्यम् , 'युवोरनाकौ' इत्यत्र सुपथीति भाष्यप्रयोगेण तस्यानित्यत्वज्ञापनात् । न च लिङ्गविशिष्टपरिभाषया 'पथिमथि'—इत्यात्त्वं थो न्थश्च कुतो नेति वाच्यम् , विभक्तौ लिङ्गविशिष्टाग्रहणात् । सुमथी इति । सु शोभनः मन्थाः यस्या इति विग्रहः । ङीवादि पूर्ववत् । अनृभुक्षी सेनेति । अविद्यमानःऋभुक्षाः यस्या इति विग्रहः । 'नञोऽस्त्यर्थानाम्'—इति समासः । ऋभुक्षाः स्वामी ।

अथ सु शोभनः पन्थाः अस्य वनस्येति बहुव्रीहौ सुपथिन्शब्दान्नपुंसकात् 'स्वमो-

इति प्रत्ययलक्षणनिषेधात्। सुपथि वनम्। 'सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः' (वा ४७८६)। हे सुपथिन्-हे सुपथि। 'नलोपः सुप्स्वर' (सू ३५३) इति नलोपस्यासिद्धत्वाद्ध्रस्वस्य गुणो न। द्विवचने भत्वाट्टिलोपः। सुपथी। शौ सर्वनामस्थानत्वात्सुपन्थानि। पुनरपि सुपथि सुपथी सुपन्थानि। सुपथा। सुपथे सुपथिभ्यामित्यादि। (३६६) ष्णान्ता षट् १।१।२४॥ षान्ता नान्ता च संख्या षट्संज्ञा स्यात्। 'षड्भ्यो लुक्' (सू २६१) पञ्च। पञ्च। संख्या किम्। विप्रुषः। पामानः। शतानि सहस्राणि इत्यत्र सन्निपातपरिभाषया

---

र्नपुंसकात्' इति सोर्लुकि प्रत्ययलक्षणमाश्रित्य सुप्परत्वसत्त्वात् 'पथिमथि' इत्यात्त्वमाशङ्क्याह—आत्त्वं नपुंसके इति। सम्बुद्धाविति। यद्यपि भाष्ये नपुंसकानामित्येव पठितम्। तथापि हे चर्मन् हे चर्मेति भाष्ये सम्बुद्धावेव उदाहृतत्वात् तन्मात्रविषयत्वमस्येति भावः। सम्बुद्धेर्लुका लुप्तत्वात् सम्बुद्धिपरत्वाभावात् 'न ङिसम्बुद्ध्योः' इति निषेधाप्रवृत्तेः नित्यं नलोपप्राप्तौ विकल्पार्थोऽयमारम्भः। ननु नलोपपक्षे 'ह्रस्वस्य गुणः' इति सम्बुद्धौ परतः गुणे कर्तव्ये 'न लुमता' इति निषेधस्यानित्यत्वात् हे वारे हे वारि इतिवत् गुणविकल्पः स्यादित्यत आह—नलोपः सुबिति। द्विवचने इति। सुपथिन्शब्दात् औङः शीभावे सति असर्वनामस्थानत्वेन भत्वात् 'भस्य टेर्लोपः' इति इनो लोपे सुपथी इति रूपमित्यर्थः। शाविति। सुपथिन्शब्दात् जश्शसोः शिभावे सति तस्य सर्वनामस्थानत्वात् 'इतोऽत्' इत्यत्त्वे, थो न्थः इति थस्य न्थादेशे नान्तत्वात् दीर्घे सुपन्थानि इति रूपमित्यर्थः।

पञ्चन्शब्दो नित्यं बहुवचनान्तः। तस्य षट्सञ्ज्ञाकार्यं लुकं विधास्यन् षट्सञ्ज्ञामाह—ष्णान्ता षट्। षूच नश्च ष्णौ ष्टुत्वेन णः। ष्णौ अन्तौ यस्याः सा ष्णान्ता। 'बहुगणवतुडति सङ्ख्या' इत्यतः सङ्ख्येत्यनुवर्तते। तच्च पूर्वसूत्रे बहुगणवतुडतिपरमपि शब्दाधिकारादिह पञ्च षडित्यादिप्रसिद्धसङ्ख्यावोधकशब्दपरमाश्रीयते, बहुगणवतुडतिषु ष्णान्तत्वासम्भवात्। तदाह—षान्तेत्यादिना। षड्भ्यो लुक् इति। अनेन जश्शसोर्लुगिति शेषः। पञ्च पञ्चेति। जश्शसोर्लुकि नलोप इति भावः। सङ्ख्याकिमिति। सङ्ख्याग्रहणानुवृत्तेः किं फलमिति प्रश्नः। विप्रुषः पामान इति। विप्रुष्शब्दस्य पामन्शब्दस्य च ष्णान्तत्वेऽपि सङ्ख्यावाचकत्वाभावेन षट्सञ्ज्ञाविरहात् ततः परस्य जसो न लुगिति भावः। ननु शतशब्दात् जश्शसोः शिभावे 'नपुंसकस्य झलचः' इति नुमि 'सर्वनामस्थाने च' इति दीर्घे शतानीति रूपम्। एवं सहस्राणीत्यपि रूपम्। तत्र 'अट्कुप्वाङ्'-इति णत्वं विशेषः। इह 'तदागमाः'-इति न्यायेन नुमः अङ्गभक्तत्वात् शतन्शब्दसहस्रन्शब्दयोः नान्तसङ्ख्याशब्दत्वात् षट्सञ्ज्ञायां

वा दोषन्। दोष्णः। दोष्णा। दोषः। दोषा। 'विश प्रवेशने'। सन्नन्तात् क्विप्। कत्वस्यासिद्धत्वात्संयोगान्तलोपः 'व्रश्च-' (सू २९४) इति षः। जश्त्वचर्त्वे। विविट्-विविड्, विविक्षौ, विविक्षः। 'स्कोः-' (सू २८०) इति कलोपः। तट्-तड्, तक्षौ, तक्षः। गोरट्-गोरड्, गोरक्षौ, गोरक्षः। तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि तु 'स्कोः-' (सू २८०) इति न प्रवर्तते। णिलोपस्य स्थानिवद्भावात्। 'पूर्वत्रासिद्धे न स्थानिवत्' (वा ४३३) इति त्विह नास्ति। 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' (वा ४४०) इति निषेधात्। तस्मात्संयोगान्तलोप एव।

---

सिद्धवत्कृत्य आह—षत्वस्यासिद्धत्वाद् रुत्वविसर्गाविति। षत्वस्यासिद्धत्वाद्रुत्वे सति विसर्गः। वा दोषन्निति। शसादाविति शेषः। दोष्ण इति। शसि दोषन्नादेशे 'अल्लोपोऽनः' इत्यकारलोपे 'रषाभ्याम्' इति णत्वमिति भावः। दोःषु दोष्षु। विविच्-शब्दं व्युत्पादयति—विशेति। सन्नन्तादिति। वेष्टुमिच्छतीति विग्रहे विशेः सन् 'हलन्ताच्च' इति सनः कित्त्वान्न लघूपधगुणः। 'सन्यङोः' इति द्वित्वम्। हलादिः शेषः। शकारस्य झलपरकत्वात् 'व्रश्च' इति षः। 'षढोः कः सि' इति षस्य कः। प्रत्ययावयवत्वात् सस्य षत्वम्। 'सनाद्यन्ताः' इति धातुत्वात् क्विप्। 'अतो लोपः' विविच् इति षकारान्तं रूपमित्यर्थः। कत्वस्येति। विविच् इत्यस्मात् सोर्हल्ङ्यादिलोपे षकारस्य संयोगान्तलोपः। 'स्कोः' इति ककारलोपस्तु न शङ्क्यः। संयोगादिलोपे कर्तव्ये 'षढोः कः सि' इति कत्वस्यासिद्धत्वादित्यर्थः। व्रश्चेति षः इति। संयोगान्तलोपे सति सकारस्य निमित्तस्य निवृत्त्या कत्वस्यापि निवृत्तौ, झलपरत्वनिवृत्त्या पूर्वप्रवृत्तषत्वस्यापि निवृत्तौ, पदान्तत्वाद् 'व्रश्च' इति शस्य ष इत्यर्थः। जश्त्वचर्त्वे इति। षस्य जश्त्वेन डः, तस्य चर्त्वविकल्प इत्यर्थः।

स्कोरिति। 'तक्षू तनूकरणे' अस्मात् क्विप् ततस्सोर्हल्ङ्यादिलोपे 'स्कोः' इति कलोपे षस्य जश्त्वेन डः, तस्य चर्त्वविकल्प इत्यर्थः। तड्भ्याम्। तट्त्सु-तट्सु। गोरडिति। 'रक्ष पालने' इत्यस्मात् कर्मण्युपपदे अणि प्राप्ते, वाऽसरूपन्यायेन क्विपि सुबुत्पत्तौ तक्षूशब्दवद्रूपम्। तक्षिरक्षिभ्यामिति। इको निर्देशोऽयम्। तक्ष् रक्ष् धातुभ्यां 'हेतुमति च' इति णिच्, चकार इत्। 'चुटू' इति णकार इत्। ततः 'सनाद्यन्ताः' इति धातुत्वात् क्विपि 'णेरनिटि' इति णिलोपे, क्विपि लुप्ते, तक्ष्, रक्ष् इति षकारान्ते रूपे। ततः सुलोपे सति संयोगान्तलोपापवादः। 'स्कोः संयोगाद्योः' इति ककारस्य लोपः, न प्रवर्तते इत्यर्थः। णिलोपस्येति। 'णेरनिटि' इति णिलोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वादित्यर्थः। तस्य दोष इति। तस्मादिति। 'स्कोः' इत्यस्याप्रवृत्तेरित्यर्थः। सति च षकारस्य संयोगान्तलोपे ककारस्य जश्त्वचर्त्वे इत्यभिप्रेत्य,

तक्-तग्। गोरक्-गोरग्। 'स्कोः—' ( सू ३८० ) इति कलोपं प्रति कुत्वस्यासिद्धत्वात्संयोगान्तलोपः। पिपक्-पिपग्। एवं विवक्। दिधक्॥ इति षान्ताः॥ 'पिस् गतौ' सुष्ठु पेसतीति सुपीः, सुपिसौ, सुपिसः। सुपिसा, सुपीर्भ्याम्। सुपीःषु—सुपीष्षु। एवं सुतूः। 'तुस खण्डने'। विद्वान्, विद्वांसौ, विद्वांसः। हे विद्वन्। विद्वांसम्, विद्वांसौ। ( ४३५ ) **वसोः सम्प्रसारणम् ६।४।१३१॥** वस्वन्तस्य भस्य सम्प्रसारणं स्यात्। पूर्वरूपं, षत्वम्। विदुषः। विदुषा। 'वसु-

---

आह—तक्-तग्। गोरक्-गोरगिति। 'डुपचष् पाके' अस्मात् सनि 'सन्यङोः' इति द्वित्वम्, हलादिः शेषः। 'सन्यतः' इत्यभ्यासाकारस्य इत्वम्। 'चोः कुः' इति चकारस्य कुत्वम्। प्रत्ययावयवत्वात् सस्य षः। पिपक्ष् इति रूपम्। ततः सोर्लोपे 'स्कोः' इति ककारस्य लोपमाशङ्क्य आह—कुत्वस्यासिद्धत्वादिति। चकारस्थानिकस्येति शेषः। सति च षकारस्य संयोगान्तलोपे झल्परत्वनिवृत्त्या पूर्वप्रवृत्तककारस्य निवृत्तौ पदान्तत्वात् कुत्वे जश्त्वचर्त्वे इत्यभिप्रेत्य आह—पिपक्-पिपगिति। पिपक्षौ, पिपक्षः इत्यादि। एवं विवगिति। वक्तुमिच्छतीति विग्रहे 'वच परिभाषणे' इत्यस्माद् विवक्ष्शब्दः पिपक्ष्शब्दवदित्यर्थः। दिधगिति। दग्धुमिच्छतीत्यर्थे 'दह भस्मीकरणे' इत्यस्मात्सनि, द्वित्वे, हलादिशेषे, अभ्यासेत्वे, दिदह्स् इति स्थिते 'दादेर्धातोर्घः' इति हस्य घत्वे 'एकाचो बशः' इति दकारस्य धत्वे, दिधघ्स् इति घकारस्य चर्त्वेन ककारे प्रत्ययावयवत्वात् सस्य षत्वे ततः क्विपि अतो लोपे दिधक्ष् इति रूपम्। तस्मात् सुबुत्पत्तौ सोर्लोपे चर्त्वस्यासिद्धत्वात् 'स्कोः' इत्यभावे षकारस्य संयोगान्तलोपे खर्परत्वाभावात् पूर्वप्रवृत्तककारस्य निवृत्तौ पदान्तत्वात् जश्त्वचर्त्वे इति भावः। दिधक्षौ दिधक्षः इत्यादि। इति षान्ताः।

अथ सकारान्ता निरूप्यन्ते। सुपीरिति। 'र्वोरुपधायाः' इति दीर्घः। एवं सुतूरिति। विद्वानिति। 'विद् ज्ञाने' अदादिः, लटः शत्रादेशे 'विदेः शतुर्वसुः' शित्वात् सार्वधातुकत्वात् शप्, लुक्। 'सार्वधातुकमपित्' इति ङित्वान्न लघूपधगुणः। कृदन्तत्वात् प्रातिपदिकत्वं विद्वस्शब्दः। तस्मात् सुः, उगित्वान्नुम्, 'सान्तमहतः' इति दीर्घः, सुलोपः, सस्य संयोगान्तलोपः, तस्यासिद्धत्वान्नलोपो नेति भावः। सान्तत्वाभावात्। 'वसुस्रंसु' इति दत्वं न। विद्वांसाविति। सुटि नुमि कृते 'सान्तमहतः' इति दीर्घः, 'नश्च' इत्यनुस्वार इति भावः। शसादावचि विशेषमाह—वसोः सम्प्रसारणम्। प्रत्ययग्रहणपरिभाषया वसोरिति तदन्तग्रहणम्। भस्येत्यधिकृतम्। तदाह—वस्वन्तस्येति। पूर्वेति। शसि वकारस्य उत्वे विदु अस् इति स्थिते, 'सम्प्रसारणाच्च' इति पूर्वरूपे, विदुस् इति स्थिते, प्रत्ययावयवत्वात् सस्य षत्वमित्यर्थः। 'षत्वतुकोरसिद्ध'

संसु—' ( सू ३३४ ) इति दत्वम्। विद्वद्भ्याम् इत्यादि। सेदिवान्, सेदिवांसौ सेदिवांसः। सेदिवांसम्। अन्तरङ्गोऽपीडागमः सम्प्रसारणविषये न प्रवर्तते। 'अकृतव्यूहाः—' ( प ५७ ) इति परिभाषया। सेदुषः। सेदुषा, सेदिवद्भ्याम्

---

इति पूर्वरूपस्यासिद्धत्वं न शङ्क्यम्, पदान्तपदाद्योरेकादेश एव तत्प्रवृत्तेः। सुपि दत्वे चर्त्वम्। विद्वत्सु। सेदिवानिति। 'षद्लृ विशरणगत्यवसादनेषु' 'धात्वादेः षः सः', 'भाषायां सदवसश्रुवः' इति लिटः क्वसुः, उकावितौ, 'लिटि धातोः' इति द्वित्वम्, हलादिशेषः, 'अत एकहल्मध्ये' इत्येत्वाभ्यासलोपौ, 'वस्वेकाजाद्घसाम्' इति इट्। सेदिवस्शब्दः। ततः सुः, उगित्वान्नुम्, 'सान्तमहतः' इति दीर्घः, सुलोपः, सस्य संयोगान्तलोपः, तस्यासिद्धत्वान्नलोपो न। सान्तवस्वन्तत्वाभावान्न दत्वमिति भावः। सेदिवांसाविति। नुमि 'सान्तमहतः' इति दीर्घः। ननु उक्तरीत्या निष्पन्नात् सेदिवस्शब्दात् शसि 'वसोः सम्प्रसारणम्' इति वकारस्य उत्वे पूर्वरूपे इकारस्य यणि सेद्युषः इति स्यात्। ततश्च सेदुषः इति वक्ष्यमाणं रूपमयुक्तम्। न च शसि भविष्यति भविष्यत्सम्प्रसारणरूपकार्यं पर्यालोच्य पूर्वमेव इट् न प्रवर्तते। पदावधिकान्वाख्यानाभ्युपगमादिति वाच्यम्, एवमपि बहिर्भूतयजाद्यसर्वनामस्थानस्वादिप्रत्ययनिमित्तकभसञ्ज्ञापेक्षतया सम्प्रसारणस्याङ्गस्य बहिरङ्गत्वेन इडागमस्यैवान्तरङ्गत्वात् प्रथमं प्रवृत्तेः। परादन्तरङ्गस्य बलवत्त्वादित्यत आह—अन्तरङ्गोऽपीति। अकृतेति। भविष्यता सम्प्रसारणेन वलादित्वस्य विनाशोन्मुखत्वादिति भावः। वस्तुतस्तु प्रथममपि सेदिवस्शब्दादेव सुबुत्पत्तिरस्तु। तथापि वकारस्य सम्प्रसारणे, उत्वे कृते, यणि सत्यपि सम्प्रसारणस्य बहिरङ्गत्वेनासिद्धत्वात् 'लोपो व्योः' इति लोपे सेदुषः इति रूपं सिद्धम्। न च 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' इति निषेधः शङ्क्यः। उत्तरकालप्रवृत्तिके अजानन्तर्ये एव तत्प्रवृत्तेरभ्युपगमात्। इह च उत्तरकालप्रवृत्तिके वलि लोपे तदभावात्। किञ्च कृते इटि सम्प्रसारणप्रवृत्तावपि वलादित्वरूपनिमित्तनिवृत्त्या इटो निवृत्तौ सेदुषः इति निर्बाधम्, 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति न्यायात्। किञ्च पदावधिकान्वाख्यानेऽपि सेद्वस् अस् इति स्थिते इट्सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात् प्रथमं सम्प्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नास्तीति सेदुषः इति निर्बाधमित्याहुः। सेदुषा-सेदिवद्भ्यामित्यादीति। सेदिवत्सु। 'हिसि हिंसायाम्' इदित्वान्नुम्, सुपूर्वात्क्विप्, इदित्वान्नलोपो न, 'नश्च' इत्यनुस्वारः, सुहिंस्शब्दात्सोर्लोपः, सकारस्य संयोगान्तलोपः, तस्यासिद्धत्वान्नलोपो न। नापि 'सर्वनामस्थाने च' इति दीर्घः। निमित्तापायादनुस्वारनिवृत्तिः। सहिन् इति सौ रूपं वक्ष्यति। तत्र 'सान्तमहतः'

इत्यादि । 'सान्तमहतः—' ( सू ३१७ ) इत्यत्र सान्तसंयोगोऽपि प्रातिपदिकस्यैव गृह्यते, न तु धातोः । महच्छब्दसाहचर्यात् । सुष्ठु हिनस्तीति सुहिन्, सुहिंसौ सुहिंसः । सुहिन्भ्याम् इत्यादि । सुहिन्त्सु—सुहिन्सु । ध्वत्-ध्वद् ध्वसौ । ध्वसः । ध्वद्भ्याम् । एवं स्रत् । ( ४३६ ) पुंसोऽसुङ् ७।१।८९।। सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात् । असुङ उकार उच्चारणार्थः । 'बहुपुंसी' इत्यत्र, 'उगितश्च' ( सू ४५५ ) इति ङीबर्थं कृतेन 'पूञो डुम्सुन्' ( पातेर्डुम्सुन् ) इति

---

इति दीर्घमाशङ्क्य आह—सान्तेति । सुहिन्भ्यामिति । 'स्वादिषु' इति पदान्तत्वात् सस्य संयोगान्तलोपे निमित्तापायादनुस्वारनिवृत्तिरिति भावः । सुहिन्त्स्विति । संयोगान्तलोपे अनुस्वारनिवृत्तिः । सुपः सकारमाश्रित्य पुनरनुस्वारस्तु न, पदान्तत्वात् । ध्वदिति । 'ध्वंसु अवस्रंसने' कृतानुस्वारनिर्देशः । क्विप्, अनुस्वारस्यासिद्धत्वात् 'अनिदिताम्' इति नलोपः । सोर्लोपः । 'वसुस्रंसु' इति दत्वम् । 'वाऽवसाने' इति चर्त्वविकल्प इति भावः । एवमिति । 'स्रंसु अवस्रंसने' क्विबादि पूर्ववदिति भावः ।

'पूञ् पवने' अस्मात् 'पूञो डुंसुन्' इति उणादिसूत्रेण डुंसुन्प्रत्ययः । डकारो नकार उकारश्च इत् । डित्वसामर्थ्यादभस्यापि टेर्लोपः । पुंस्शब्दात् सुबुत्पत्तिः । तत्र सुटि विशेषमाह—पुंसोऽसुङ् । 'इतोऽत् सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इत्यनुवृत्तिमभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—सर्वनामस्थाने इति । पुंसः असुङ् स्यात् सर्वनामस्थाने इति फलितम् । ननु तत्पुरुषात् परमपुंस्शब्दात् सुटि असुङादेशात् प्रागेव 'समासस्य' इत्यन्तोदात्तत्वं पकारादुकारस्य स्यात् । सर्वनामस्थानोत्पत्तेः प्रागेव समासस्वरस्य अन्तरङ्गत्वात् प्राप्तेः । इष्यते तु असुङि कृते परमपुमस् इत्यत्र सकारादकारस्य । अत आह—विवक्षिते इति । 'पुंसोऽसुङ्' इत्यत्र सर्वनामस्थान इति न परसप्तमी किन्तु विवक्षिते इत्यध्याहृत्य सर्वनामस्थाने प्रयोक्तुमिष्टे सति ततः प्रागेव असुङित्यर्थः आश्रीयते । एवं च सर्वनामस्थानोत्पत्तेः प्रागेव असुङि कृते 'समासस्य' इत्यन्तोदात्तत्वं, परमपुमस् इत्यत्र मकारादकारस्य भवतीति न दोष इति भावः । न च परसप्तमीपक्षेऽपि सर्वनामस्थानोत्पत्तेः प्रागन्तरङ्गोऽपि समासस्वरः पकारादुकारस्य अकृतव्यूहपरिभाषया न भवति । असुङि कृते पकारादुकारस्य समासान्ततायाः प्रनङ्क्ष्यत्वादिति वाच्यम्, विवक्षित इत्यर्थाश्रयणेनैव सिद्धे अकृतव्यूहपरिभाषाया अस्वीकार्यत्वादिति भावः ।

अत्र असुङि उकार इत् उदित्कार्यार्थं इति प्राचीनमतं दूषयितुमाह—असुङ उकार उच्चारणार्थः इति । न त्वित्सञ्ज्ञकः । प्रयोजनाभावादिति भावः । ननु उदित्कार्यमस्ति प्रयोजनमित्यत आह—पूञो डुंसुन्निति प्रत्ययस्य उगित्त्वेनैव ।

प्रत्ययस्योगित्वेनैव नुम्सिद्धेः। पुमान्। हे पुमन्। पुमांसौ। पुमांसः। पुंसः। पुंसा, पुम्भ्याम्, पुम्भिः इत्यादि। पुंसि। पुंसु। 'ऋदुशन—' (सू २७६) इत्यनङ्। उशना, उशनसौ, उशनसः। 'अस्य सम्बुद्धौ वाऽनङ् नलोपश्च वा वाच्यः' (वा ५०२७)। हे उशनन्–हे उशन–हे उशनः। उशनोभ्यामित्यादि,

---

नुम्सिद्धेरिति। ननु विनिगमनाविरह इत्यत आह—बहुपुंसीत्यत्र उगितश्च इति ङीबर्थं कृतेनेति। बहवः पुमांसो यस्याम् इति बहुव्रीहौ सुब्लुकि निमित्तापायादसुङो निवृत्तौ बहुपुंस्शब्दादुगित्त्वात् ङीपि बहुपुंसीशब्दः। अत्र ङीपः असर्वनामस्थानत्वात्तस्मिन् विवक्षिते असुङः प्राप्तिरेव नास्ति। डुंसुन उगित्त्वादेव ङीप् वक्तव्यः। तदर्थं डुंसुन उगित्त्वमावश्यकम्। तेनैव नुमोऽपि सिद्धत्वाद् असुङ उकार उच्चारणार्थ इति भावः। यद्यप्युणादिषु 'पातेर्डुंसुन्' इति वक्ष्यते। तथापि पाठान्तरमिदं द्रष्टव्यम्। 'स्त्रियाम्' इति सूत्रभाष्यकैयटयोस्तु सूतेः सस्य पः, ऊकारस्य ह्रस्वः, म्सुन् प्रत्यय इत्युक्तम्। पुमानिति। डुंसुन् इति कृतानुस्वारनिर्देशः। ततश्च पुंस्शब्दात् सौ विवक्षिते असुङ्। ङकार इत्, उकार उच्चारणार्थः, 'ङिच्च' इत्यन्तादेशः। निमित्तापायादनुस्वारनिवृत्तौ पुमस् सु उगित्त्वान्नुम्, 'सान्तमहतः' इति दीर्घः, सोर्लोपः सस्य संयोगान्तलोपः तस्यासिद्धत्वान्नलोपो नेति भावः। हे पुमन्निति। 'सान्तमहतः' इत्यत्र 'असम्बुद्धौ' इत्यनुवृत्तेः न दीर्घ इति भावः। पुमांसाविति। असुङि पुमस् औ इति स्थिते नुमि 'सान्त' इति दीर्घः। 'नश्च' इति नुमोऽनुस्वार इति भावः। पुंसः। पुंसेति। शसादावसर्वनामस्थानत्वादसुङभावे रूपम्। यय्परत्वाभावान्न परसवर्ण इति भावः। पुम्भ्यामिति। सस्य संयोगान्तलोपे निमित्तापायादनुस्वारनिवृत्तौ भकारमाश्रित्य पुनरनुस्वारे परसवर्णे रूपमिति भावः। इत्यादीति। पुंसे। पुंसः, पुंसोः। पुंसीति। अत्र यय्परत्वाभावान्न परसवर्णः। नुम्स्थानिकानुस्वारस्यैवोपलक्षणात् 'नुम्विसर्जनीय' इति षत्वं नेति भावः।

'वश कान्तौ' अस्मात् 'वशेः कनसिः' इति कनसिप्रत्ययः ककार इत्। इकार उच्चारणार्थः। 'ग्रहिज्या' इति सम्प्रसारणम्। उशनस्शब्दः, तस्य सौ विशेषमाह-ऋदुशनेत्यनङिति। ङकार इत्, अकार उच्चारणार्थः, ङित्त्वादन्तादेशः। उशनन् स् इति स्थिते उपधादीर्घः, हल्ङ्यादिना सुलोपः, नलोपः। उशना इति रूपमिति भावः। यद्यपि वशधातुश्छान्दस इति लुग्विकरणे वक्ष्यते। तथापि तत् प्रायिकम्, 'वष्टि भागुरिः' इत्यादिनिर्देशात्, 'उशना भार्गवः कविः' इति कोशाच्च। अस्य सम्बुद्धाविति। एतच्च वृत्तौ पठितम्। वशधातौ माधवस्तु 'सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्' इति श्लोकवार्तिकमित्याह। भाष्यादृष्टत्वादिदमप्रामाणिकमेवेति प्रामाणिकाः। हे उशनन् इति। अनङि नलोपाभावे रूपम्। हे उश-

अनेहा, अनेहसौ, अनेहसः । हे अनेहः । अनेहोभ्यामित्यादि । वेधाः, वेधसौ । वेधसः । हे वेधः । वेधोभ्यामित्यादि । अधातोरित्युक्तेर्न दीर्घः । सुष्ठु वस्ते सुवः, सुवसौ, सुवसः । पिण्डं ग्रसते पिण्डग्रः, पिण्डग्लः । 'ग्रसु ग्लसु अदने' । (४३७) अदस औ सुलोपश्च ७ । २ । १०७ ॥ अदस औकारोऽन्तादेशः स्यात्सौ परे सुलोपश्च । 'तदोः सः सौ'—( सू ३८१ ) इति दस्य सः । असौ । 'औत्वप्रतिषेधः साकच्चकस्य वा वक्तव्यः सादुत्वं च' ( वा ४४८२ ) । प्रतिषेधसं-

---

नेति । अनङि नलोपे रूपम् । हे उशन इति । अनङभावे रूपम् । उशनोभ्यामिति । सस्य रुत्वे 'हशि च' इत्युत्वे 'आद्गुणः' । उशनःसु-उशनस्सु । अनेहेति । 'नञि हन एह च' इति नञि उपपदे हनधातोरसुन् , प्रकृतेरेहादेशश्च, उपपदसमासः, 'नलोपो नञः', 'तस्मान्नुडचि' अनेहस्शब्दः । ततः सुः, अनङ् , सुलोपः, उपधादीर्घः, नलोप इति भावः । हे अनेहः । अनेहोभ्यामित्यादि । वेधा इति । 'विधाञो वेध च' विपूर्वाद् धाञ्धातोरसुन् प्रकृतेर्वेधादेशश्च । असुनि उकार उच्चारणार्थः । उगित्वाभावान्न नुम् , ततः सुः, असन्तत्वाद् दीर्घः, सुलोपः, रुत्वविसर्गाविति भावः । 'वस आच्छादने' लुग्विकरणः । सुपूर्वादस्मात् क्विप् , सुवस्शब्दः, ततः सुः, हल्ङ्यादिलोपः, रुत्वविसर्गौ, सुव इति रूपं वक्ष्यति । अत्र 'अत्वसन्तस्य' इति दीर्घमाशङ्क्य आह—अधातोरित्युक्तेर्न दीर्घ इति । न च सुवस्शब्दस्य असन्तत्वादधातुत्वाच्च दीर्घो दुर्वार इति वाच्यम् , धात्ववयवभिन्नो यः अस् तदन्तस्य दीर्घ इत्याश्रयणात् । सुवोभ्यामित्यादि । 'वस निवासे' इति भौवादिकस्य तु नेदं रूपम् , तस्य यजादित्वेन सम्प्रसारणप्रसङ्गात् । पिण्डग्रस्शब्दः सुवस्शब्दवत् ।

अदस्शब्दात् सौ त्यदाद्यत्वे प्राप्ते । अदस औ । अदस इति षष्ठी । औ इत्यविभक्तिकनिर्देशः । 'तदोः सः सौ' इत्यतः सावित्यनुवर्तते । तदाह—अदस औकार इति । अन्तादेश इत्यलोऽन्त्यपरिभाषालभ्यम् । सकारस्य औत्वे कृते हलः परत्वाभावाद् हल्ङ्यादिलोपे अप्राप्ते सुलोपविधिः । दस्य स इति । उत्वापवाद इति भावः । असौ इति । अदस् स् इति स्थिते सकारस्य औत्वे, सुलोपे, दस्य सत्वे च रूपम् । अथ 'अव्ययसर्वनाम्नाम्' इत्यकचि अदकस्शब्दात् सौ विशेषमाह—औत्वप्रतिषेध इति । 'अदस औ सुलोपश्च' इत्यत्र अदश्शब्देन तन्मध्यपतितन्यायेन अदकस्शब्दस्यापि ग्रहणादौत्वे प्राप्ते विकल्पेन तत्प्रतिषेधो वक्तव्यः । 'तदोः सः सौ' इति दकारस्य सकारे कृते तस्मात् सकारात् परस्य अकारस्य उकारश्च वा वक्तव्य इत्यर्थः । ततश्च अदकस् स् इति स्थिते, औत्वाभावे, दस्य सत्वे सति, सकारात् परस्य अकारस्य उत्वे सति, त्यदाद्यत्वे, पररूपे, रुत्वे, विसर्गे, असुकः इति रूपम् ।

नियोगशिष्टमुत्वं तदभावे न प्रवर्तते। असकौ—असुकः। त्यदाद्यत्वं, पररूपम्, वृद्धिः। 'अदसोऽसेः—( सू ४१९ ) इति मत्वोत्वे। अमू। 'जसः शी' ( सू २१४ ) 'आद्गुणः' ( सू ६९ )। ( ४३८ ) एत ईद्बहुवचने। ८।२।८१॥ अदसो दात्परस्य एत ईत्स्याद्दस्य च मो बह्वर्थोक्तौ। अमी। 'पूर्वत्रासिद्धम्' ( सू १२ ) इति विभक्तिकार्यं प्राक्, पश्चादुत्वमत्वे। अमुम्, अमू, अमून्। मुत्वे कृते

---

औत्वप्रतिषेधाभावपक्षे अदकस् स् इति स्थिते, सकारस्य औत्वे, सुलोपे, दस्य सत्वे, असकौ इति रूपं वक्ष्यति। तत्र औत्वप्रतिषेधाभावपक्षे औत्वे कृते सकारादकारस्य उत्वविकल्पः कुतो न स्यादित्यत आह—प्रतिषेधेति। 'सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' इति न्यायादिति भावः। असुकः असुकशर्मा इत्यादि त्वसाध्वेवेत्याहुः। केचित्तु अदस्शब्दपर्यायः असुकशब्दः अव्युत्पन्न इत्याहुः। अदस् औ इति स्थिते प्रक्रियां दर्शयति—त्यदाद्यत्वमिति। पररूपमपि बोध्यम्। मत्वोत्वे इति। अदौ इत्यत्र दात् परस्य औकारस्य दीर्घ ऊकारः दस्य मत्वं चेत्यर्थः। जसि त्यदाद्यत्वं पररूपं च सिद्धवत्कृत्य आह—जसश्शीति। आद्गुणे अदे इति स्थितम्। तत्र दकारादेकारस्य ऊत्वे प्राप्ते। एत ईद्बहुवचने। 'अदसोऽसेर्दादु दो मः' इत्यस्मात् 'अदसो दादिति' 'दो मः' इति चानुवर्तते। तदाह—अदसः इत्यादिना। बह्वर्थोक्ताविति। सूत्रे बहुवचनशब्दो यौगिकः। पारिभाषिकस्य ग्रहणे तु अमीभिरित्यादिसिद्धावपि अमी इति न सिध्येत्, अदे इत्येकारस्य बहुवचनतया तत्परकत्वाभावादिति भावः। ननु औजसादिषु त्यदाद्यत्वे पररूपे च उत्वमत्वयोः कृतयोः अमुऔ अमुअः इत्यादि स्यात्। मुत्वस्यासिद्धत्वान्न यणित्याशङ्क्य आह—पूर्वत्रेति। विभक्तिकार्यमिति। त्यदाद्यत्वादिकमित्यर्थः।

यदि तु 'पूर्वत्रासिद्धम्' इत्यत्र कार्यासिद्धत्वमिष्येत, तर्हि अमू अमी इत्यादि न सिध्येत्। तथा हि 'पूर्वत्रासिद्धम्' इति सिद्धे असिद्धत्वारोप उच्यते। निरधिष्ठानश्चासिद्धत्वारोपो न सम्भवति। ततश्च कार्यासिद्धत्वपक्षे सूत्रोदाहरणसम्पत्त्यै परत्वाल्लक्ष्ये कार्यप्रवृत्तेरावश्यकतया परत्वात् त्रैपादिके मुत्वे कृते सति उत्वस्थानिनः अकारस्यापहारे सति, पश्चात् मुत्वे अभावप्रतियोगित्वारोपेऽपि, 'देवदत्तस्य हन्तरि हते सति देवदत्तस्य न पुनरुन्मज्जनम्' इति न्यायेन स्थानिभूतस्य दकारादकारस्याभावात् वृद्धिगुणादि न स्यात्। शास्त्रासिद्धत्वपक्षे तु यद्यत् त्रैपादिकं शास्त्रं प्रवृत्त्युन्मुखं तत्तच्छास्त्र एवाभावारोपसम्भवात् पूर्वशास्त्रप्रतिबन्धकस्य परशास्त्रस्य उच्छेदबुद्धौ सत्यां 'विप्रतिषेधे परं कार्यम्' इति न प्रवर्तते। तदुक्तं 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इति। ततश्च स्थानिन अकारस्य निवृत्त्यभावाद् वृद्धिगुणादिप्रवृत्तिर्निर्बाधा। एतच्च 'पूर्वत्रासिद्धम्' इत्यत्र 'अचः परस्मिन्' इत्यत्र 'षत्वतुकोरसिद्धः' इत्यत्र च भाष्ये स्पष्टम्। प्रपञ्चितं

घिसंज्ञायां नाभावः । ( ४३१ ) न मु ने ८।२।३। नाभावे कर्तव्ये कृते च मुभावो नासिद्धः स्यात् । अमुना, अमूभ्याम्, अमूभ्याम्, अमूभ्याम्, अमीभिः । अमुष्मै । अमीभ्यः । अमुष्मात् । अमुष्य, अमुयोः, अमी-

---

च शब्देन्दुशेखरे शब्दरत्ने च इत्यास्तां तावत् । अमुमिति । अदस् अम् इति स्थिते त्यदाद्यत्वं, पररूपम् 'अमि पूर्वः' उत्वमत्वे, इति भावः । अमू इति । द्वितीयाद्विवचनं प्रथमाद्विवचनवत् । अमूनिति । शसि, त्यदाद्यत्वं, पररूपं, पूर्वसवर्णदीर्घः, नत्वम्, उत्वमत्वे इति भावः ।

तृतीयैकवचने अदस् आ इति स्थिते त्यदाद्यत्वं, पररूपम्, उत्वमत्वे च सिद्धवत्कृत्य आह—मुत्वे कृते घिसंज्ञायां नाभाव इति । 'शेषो घ्यसखि' इति घिसंज्ञायाम् 'आङो नाऽस्त्रियाम्' इति नाभाव इत्यर्थः । ननु 'पूर्वत्रासिद्धम्' इति विभक्तिकार्यं प्राक् पश्चात् उत्वमत्वे इति प्रागुक्तम् । सम्प्रति तु मुत्वे कृते घिसंज्ञायां नाभाव इत्युच्यते । तदिदं पूर्वापरविरुद्धमिति चेत् सत्यम् । यद्विभक्तिकार्यं प्रति मुत्वं निमित्तं न भवति, तदेव विभक्तिकार्यं प्राक् भवति, न त्वन्यदिति विवक्षितम् । इह च नाभावं प्रति मुत्वं निमित्तमिति प्रथमं मुत्वप्रवृत्तेरविरोधः । 'न मु ने' इत्यारम्भसामर्थ्यादित्यलम् । ननु कृतेऽपि प्रथमं मुत्वे नाभावो न सम्भवति तस्मिन् कर्तव्ये मुत्वस्य असिद्धतया घेः परत्वाभावादित्यत आह—न मुने । असिद्धमित्यनुवर्तते । न च उश्चेति समाहारद्वन्द्वः, ने इति ना इत्यस्य सप्तम्येकवचनम् । विषयसप्तमी सत्सप्तमी च एषा । तथा च नाभावे कर्तव्ये कृते च इति लभ्यते । तदाह—नाभाव इत्यादिना । प्रकृते च नाभावे कर्तव्ये मुत्वस्यासिद्धत्वाभावात् घेः परत्वान्नाभावो निर्बाधः । यदि तु नाभावे कर्तव्ये मुभावो नासिद्ध इत्येवाश्रीयते, तर्हि प्रकृते नाभावे कृते 'सुपि च' इति दीर्घः प्रसज्येत । दीर्घे कर्तव्ये मुत्वस्याऽसिद्धतया अकारसत्त्वात् । अतः कृतेऽपीत्याश्रितम् । ततश्च प्रकृते नाभावे कृतेऽपि दीर्घे कर्तव्ये मुत्वस्यासिद्धत्वाभावादकाराभावात् न दीर्घ इति भावः । अमूभ्यामिति । त्यदाद्यत्वे पररूपे 'सुपि च' इति दीर्घे, दस्य मत्वम्, आकारस्य ऊत्वम् इति भावः । अमीभिरिति । त्यदाद्यत्वं, पररूपं 'नेदमदसोरकोः' इति ऐस्निषेधः, 'बहुवचने झल्येत्' इत्येत्वम्, 'एत ईद्बहुवचने' इति ईत्वमत्वे इति भावः । अमुष्मै इति । त्यदाद्यत्वं, पररूपं, ङेः स्मै, उत्वमत्वे, षत्वमिति भावः । अमीभ्य इति । त्यदाद्यत्वं, पररूपं, 'बहुवचने झल्येत्' इत्येत्वम्, ईत्वमत्वे इति भावः । अमुष्मादिति । त्यदाद्यत्वं, पररूपं ङसेः स्मात्, उत्वमत्वे, षत्वमिति भावः । अमुष्येति । त्यदाद्यत्वं, पररूपं, ङसः स्यादेशः, उत्वमत्वे, षत्वमिति भावः । अमुयोरिति । ओसि त्यदाद्यत्वं, पररूपम्, 'ओसि च' इत्येत्वम्, अयादेशः, उत्वमत्वे, इति भावः । अमीषामिति । आमि त्यदाद्यत्वं, पररूपम्, 'आमि

षाम्। अमुष्मिन्, अमुयोः, अमीषु ॥ इति सान्ताः ॥

इति हलन्तपुँल्लिङ्गप्रकरणम्।

## अथ हलन्तस्त्रीलिङ्गप्रकरणम् ॥ १२ ॥

(४४०) नहो धः ८।२।३४॥ नहो हस्य धः स्याज्झलि पदान्ते च। उपानत्-उपानद्, उपानहौ, उपानहः। उपानद्भ्याम्। उपानत्सु। उत्पूर्वात् 'ष्णिह प्रीतौ' (धा १२०१) इत्यस्मात् 'ऋत्विग्--' (सू २७३) आदिना क्विन्, निपातनाद्दलोपषत्वे। क्विन्नन्तत्वात्कुत्वेन हस्य घः, जश्त्वचर्त्वे। उष्णिक् उष्णिग्,

सर्वनाम्नः' इति सुट्, एत्वम् ईत्वं, मत्वं, षत्वमिति भावः। अमुष्मिन्निति। ङौ त्यदाद्यत्वं, पररूपं, ङेः स्मिन्नादेशः, उत्वमत्वे, षत्वमिति भावः। अमीष्विति। सुपि त्यदाद्यत्वं, पररूपम्, एत्वम्, ईत्वमत्वे, षत्वमिति भावः। इति सान्ताः।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां हलन्तपुँल्लिङ्गप्रकरणं समाप्तम्।

अथ हलन्तस्त्रीलिङ्गे हकारान्ता निरूप्यन्ते। 'णह बन्धने' 'णो नः' उपनह्यते इति विग्रहे उपपूर्वात् सम्पदादित्वात् कर्मणि क्विप्, 'नहिवृति' इत्यादिना पूर्वपदस्य दीर्घः। उपानह्शब्दः स्त्रीलिङ्गः, 'पादुका। पादूरुपानत्स्त्री' इत्यमरः। नहो धः। 'हो ढः' इत्यतो हः इत्यनुवर्तते। पदस्य इत्यधिकृतम्। 'स्कोः संयोगा-' इत्यतः अन्ते इत्यनुवर्तते। 'झलो झलि' इत्यतः झलि इत्यनुवर्तते। तदाह—नहो हस्येत्यादिना। 'हो ढः' इति ढत्वापवादः। उपानदिति। उपानहशब्दात् सोर्हल्ङ्यादिलोपः, हस्य धः, जश्त्वचर्त्वे इति भावः। अत्र दकार एव तु न विहितः। तथा सति नद्धमित्यत्र 'रदाभ्याम्' इति नत्वप्रसङ्गादित्यलम्। उपानद्भ्यामिति। हस्य धत्वे जश्त्वमिति भावः। उपानत्स्विति धत्वे 'खरि च' इति चर्त्वमिति भावः। उष्णिह्शब्दः छन्दोविशेषवाची स्त्रीलिङ्गः। तं व्युत्पादयितुमाह—ष्णिह प्रीतावित्यादिना। दलोपषत्वे इति। उदो दकारस्य लोपः सस्य षत्वं च निपात्यत इत्यर्थः। न च 'धात्वादेः षः सः' इति कृतसकारस्य 'आदेशप्रत्यययोः' इत्येव षत्वसिद्धेः किं तन्निपातनेन इति वाच्यम्, 'सात्पदाद्योः' इति निषेधबाधनार्थं षत्वनिपातनस्यावश्यकत्वात्। न च उष्णिह्शब्दात् समासात् सुबुत्पत्तेः पूर्वं स्निह् इत्येतत् न पदम्। नितरां सकारस्य पदादित्व-

उष्णिहौ, उष्णिहः । उष्णिग्भ्याम् । उष्णिक्षु ॥ इति हान्ताः ॥ द्यौः, दिवौ, दिवः । द्युभ्याम् । द्युषु ॥ इति वान्ताः ॥ गीः, गिरौ, गिरः । एवं पूः । चतुरश्चतस्रादेशः । चतस्रः । चतस्रः । चतसृणाम् ॥ इति रेफान्ताः ॥ किमः कादेशे टाप् । का, के, काः । सर्वावत् । (४४१) यः सौ ७।२।११०॥ इदमो दस्य यः स्यात्सौ । 'इदमो मः'

मिति वाच्यम् , पदादादिरिति पक्षे षत्वनिषेधप्रसक्तेरित्याहुः हस्य ष इति । घोषनादसंवारमहाप्राणसाम्यादिति भावः । न च 'क्विन्प्रत्ययस्य' इति कुत्वस्यासिद्धत्वात् 'हो ढः' इति ढत्वमेवोचितमिति वाच्यम् , षत्वापवादः कुत्वमिति कैयटादिमते तुल्यन्यायतया षत्वस्येव ढत्वस्यापि कुत्वेन बाधात् । जश्त्वचर्त्वे इति । न च जश्त्वे कर्तव्ये 'क्विन्प्रत्ययस्य कुः' इति कुत्वस्यासिद्धत्वं शङ्क्यम् , 'उष्णिगन्चु' इति निर्देशेन जश्त्वे कर्तव्ये कुत्वस्यासिद्धत्वाभावज्ञापनात् । वस्तुतस्तु । 'क्विन्प्रत्ययस्य कुः' इति कुत्वं षत्वापवादो न भवति, इति मूलकारमते तुल्यन्यायात् ढत्वस्यापि नापवादः । ततश्च तद्रीत्या ढडगका इति बोध्यम् । इति हान्ताः ।

अथ वकारान्ता निरूप्यन्ते । द्यौरिति । दिव्शब्दः स्त्रीलिङ्गः । 'द्यो दिवौ द्वे स्त्रियाम्' इत्यमरः । तस्मात् सुः, 'दिव औत्' इति वकारस्य औकारः, इकारस्य यण् रुत्वविसर्गौ, सुलोपस्य औत्त्वस्थानिभूतवकाराश्रयत्वेनाल्विधित्वात् स्थानिवत्त्वाभावात् न हल्ङ्याादिलोप इति भावः । द्युभ्यामिति । भ्यामादौ हलि 'दिव उत्' इत्युत्त्वमिति भावः । इति वान्ताः ।

अथ रेफान्ता निरूप्यन्ते । गीरिति । 'गॄ निगरणे' क्विप् , 'ॠत इद्धातोः' इति इत्त्वं, रपरत्वं, गिर्शब्दात् सुबुत्पत्तिः, सोर्लोपः, 'र्वोरुपधायाः' इति दीर्घः, रेफस्य विसर्ग इति भावः । भ्यामादौ तु हलि 'र्वोः' इति दीर्घः, गीर्भ्यामित्यादि । गीर्षु । एवं पूरिति । गीर्वदित्यर्थः । 'पॄ पालनपूरणयोः' क्विप् , 'उदोष्ठ्यपूर्वस्य' इत्युत्वं रपरत्वम् । पुर्शब्दात् सोर्लोपः, 'र्वोः' इति दीर्घः, रेफस्य विसर्ग इति भावः । चतुरश्चतस्रादेश इति । जश्शसोः स्त्रीलिङ्गस्य चतुर्शब्दस्य 'त्रिचतुरोः स्त्रियाम्' इत्यनेनेति भावः । चतस्रः इति । परत्वात् 'चतुरनडुहोः' इत्यामं बाधित्वा चतसृभावे यण् । चतसृभावे कृते आम् तु न 'विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायादिति स्थानिवत्सूत्रे भाष्ये स्पष्टम् । चतसृणामिति । 'न तिसृचतसृ' इति दीर्घनिषेधः । इति रेफान्ताः ।

अथ मकारान्ता निरूप्यन्ते । किम इति । किम् शब्दात् स्त्रीलिङ्गाद्विभक्तौ 'किमः कः' इति प्रकृतेः कादेशे कृते अदन्तत्वात् टाबित्यर्थः । सर्वावदिति । सर्वाशब्दवदित्यर्थः । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति न, शब्दस्वरूपपरस्य गौणतया कदाऽपि सर्वनामत्वाभावादिति भावः । अथ इदम्शब्दस्य स्त्रीत्वे विशेषमाह—यः सौ । 'इदमो मः' इत्यतः 'इदमः' इत्यनुवर्तते, 'दश्च' इत्यतः 'दः' इति च षष्ठ्यन्तमनु-

( सू २४२ )। इयम्। त्यदाद्यत्वं, टाप् 'दश्च' ( सू ३४५ ) इति मः। इमे, इमाः। इमाम्, इमे, इमाः। अनया। 'हलि लोपः' ( सू ३४७ )। आभ्याम्, आभ्याम्। आभ्याम्। आभिः। अस्यै। अस्याः, अनयोः, आसाम्। अस्याम्, अनयोः, आसु। अन्वादेशे तु एनाम्, एने, एनाः। एनया। एनयोः। एनयोः॥ इति मान्ताः॥ 'ऋत्विग्—' ( सू २७२ ) आदिना स्रजेः क्विन् अमागमश्च निपातितः।

---

वर्तते। तदाह—इदमो दस्येति। पुंसि तु नेदं प्रवर्तते, 'इदोऽय् पुंसि' इति विशिष्यविधेः। नापि क्लीबे, तस्य सोः लुका लुप्तत्वात्। ततश्च परिशेषात् स्त्रियामेवेदम्। इयमिति। इदम् स् इति स्थिते, दकारस्य यत्वे, इयम् स् इति स्थिते, त्यदाद्यत्वं बाधित्वा 'इदमो मः' इति मकारस्य मकारे कृते, हल्ङ्यादिना सुलोप इति भावः। इदम् औ इति स्थिते प्रक्रियां दर्शयति—त्यदाद्यत्वमिति। त्यदाद्यत्वे सति, पररूपे, अदन्तत्वात् टापि 'दश्च' इति दकारस्य मत्वे, इमा औ इति स्थिते, 'औङ आपः' इति शीभावे, आद्गुणे इमे इति रूपम्। इमा इति। जसि त्यदाद्यत्वं, पररूपम्, टाप्, 'दश्च' इति मः पूर्वसवर्णदीर्घः इति भावः। अत्र विभक्तौ सत्यां त्यदाद्यत्वं, पररूपं, टाप् च सर्वत्र भवन्तीति बोध्यम्। इमाः इत्यत्र इमा अस् इति स्थिते पूर्वसवर्णदीर्घः। 'जसः शी' इति तु न। टापि कृते अदन्तात् परत्वाभावात्। इमामिति। अत्वपररूपटाब्मत्वेषु कृतेषु 'अमि पूर्वः' इति भावः। इमे इति। औटि औवत्। इमा इति। अत्वपररूपटाब्मत्वेषु पूर्वसवर्णदीर्घः। स्त्रीत्वान्नत्वाभाव इति भावः। अनयेति। इदम् आ इति स्थिते, अत्वं, पररूपम्, टाप्, 'अनाप्यकः' इति इद् इत्यस्य अन् आदेशः। अन् आ आ इति स्थिते 'आङि चापः' इत्येत्वे, अयादेशः इति भावः। टाप्रभृत्यजादौ सर्वत्र अन् आदेश इति बोध्यम्। हलि लोपः इति। भ्यामादौ हलि इद् इत्यस्य लोप इत्यर्थः। आभ्यामिति। इदम् भ्याम् इति स्थिते, इदो लोपे, अत्वे पररूपे, टापि च रूपमिति भावः। आभिरित्यप्येवम्। अस्यै इति। इदम् ए इति स्थिते, अत्वपररूपटाप्सु स्याडागमे, ह्रस्वत्वे, इदो लोप इति भावः। अस्याः इत्यप्येवम्। अनयोरिति। इदम् ओस् इति स्थिते, इदमः इदः अनादेशे, अत्वपररूपटाप्सु 'आङि चापः' इत्येत्वे, अयादेश इति भावः। आसामिति। इदम् आम् इति स्थिते अत्वपररूपटाप्सु, सुटि, इदो लोप इति भावः। अस्यामिति। इदम् इ इति स्थिते, अत्वपररूपटाप्सु, ङेरामि, स्याडागमे, ह्रस्वत्वे, इदो लोपः इति भावः। आस्विति। इदम् सु इति स्थिते, अत्वपररूपटाप्सु, इदो लोप इति भावः। अन्वादेशे त्विति। 'द्वितीयाटौस्स्वेनः' इत्येनादेशे, टापि रमावद्रूपाणि इति भावः। इति मान्ताः।

अथ जकारान्ता निरूप्यन्ते। स्रज्शब्दं व्युत्पादयति। ऋत्विगिति। 'सृज विसर्गे' अस्मात् क्विन् ऋकारात् परः अमागमः, मकारः इत्, ऋकारस्य यण् रेफः, स्रज्शब्दः

स्रक्-स्रग्, स्रजौ, स्रजः। स्रग्भ्याम्। स्रक्षु॥ इति जान्ताः॥ त्यदाद्यत्वं टाप्। स्या, त्ये, त्याः। एवं तद्, यद्, एतद्॥ इति दान्ताः॥ वाक्-वाग्, वाचौ, वाचः। वाग्भ्याम्। वाक्षु॥ इति चान्ताः॥ अप्शब्दो नित्यं बहुवचनान्तः। 'अप्तृन्—' (सू २७७) इति दीर्घः। आपः। अपः। (४४२) अपो भि ७।४।४८॥ अपस्तकारः स्याद्भादौ प्रत्यये परे। अद्भिः। अद्भ्यः। अद्भ्यः। अपाम्। अप्सु। इति पान्ताः॥ दिक्-दिग्, दिशौ, दिशः। दिग्भ्याम्। दिक्षु। 'त्यदादिषु—' (सू ४२९) इति दृशेः क्विन्विधानादन्यत्रापि कुत्वम्। दृक्-दृग्,

स्त्रीलिङ्गः। 'माल्यं माला स्रजो मूर्ध्नि' इत्यमरः। स्रक् स्रगिति। 'क्विन् प्रत्ययस्य कुः' इति कुत्वं जश्त्वचर्त्वे इति भावः। इति जान्ताः।

अथ दकारान्ता निरूप्यन्ते। त्यद्शब्दस्य प्रक्रियां दर्शयति। त्यदाद्यत्वमिति। विभक्तौ, अत्वे, पररूपे, टापि, त्या इति रूपम्। सर्वत्र ततः सर्वावद्रूपाणि। सौ तु 'तदोः सः सौ' इति तकारस्य स इति विशेषः। एवमिति। तद् यद् एतद् एतेभ्यो विभक्तौ अत्वपररूपटाप्सु सर्वावद्रूपाणि। तच्छब्दस्य तु तकारस्य सत्वम्। एतच्छब्दस्य तु तकारस्य सत्वे 'आदेशप्रत्यययोः' इति षत्वमिति विशेषः॥ इति दान्ताः॥

अथ चकारान्ता निरूप्यन्ते। वागिति। वचेः 'क्विब्वचि' इत्यादिना क्विप् दीर्घश्च, 'वचिस्वपि' इति सम्प्रसारणाभावश्च, वाच् इति रूपम्। सुलोपः 'चोः कुः' जश्त्वचर्त्वे इति भावः॥ इति चान्ताः॥

अथ पकारान्ता निरूप्यन्ते। अप्शब्द इति। 'अप्सुमनस्समासिकतावर्षाणां बहुत्वं च' इति स्त्र्यधिकारे लिङ्गानुशासनसूत्रात् नित्यं बहुवचनान्तत्वं स्त्रीत्वं चेत्यर्थः। दीर्घ इति। जसीति शेषः। अप इति। 'अप्तृन्' इत्यत्र 'सर्वनामस्थाने चासम्बुद्धौ' इत्यनुवृत्तेः शसि न दीर्घ इति भावः। अपो भि। 'अच उपसर्गात्तः' इत्यस्मात् त इत्यनुवर्तते। अङ्गाधिकारस्थमिदम्। ततश्च अङ्गाक्षिप्तप्रत्ययो भि इति सहम्यन्तेन विशेष्यते, तदादिविधिः। तदाह—अपस्तकार इत्यादिना। प्रत्यये किम्, अब्भक्षः। अद्भिरिति। पकारस्य तकारे जश्त्वमिति भावः॥ इति पान्ताः॥

अथ शकारान्ता निरूप्यन्ते। दिगिति। 'दिश अतिसर्जने' ऋत्विगादिना क्विन्, सुलोपः, 'व्रश्च' इति षः, तस्य जश्त्वेन डः, तस्य 'क्विन्प्रत्ययस्य कुः' इति कुत्वेन गः, तस्य चर्त्वविकल्प इति भावः। दृश्यन्ते अर्था अनयेति विग्रहे सम्पदादित्वात् दृशेः क्विप्। ततः सुलोपे 'व्रश्च' इति षत्वमाशङ्क्य आह—त्यदादिष्विति। अन्यत्रापीति। त्यदाद्युपपदाभावेऽपीत्यर्थः। क्विन् प्रत्ययो यस्माद्विहित इति बहुव्रीह्याश्रयणादिति भावः। दृगिति। षडगकाः प्राग्वत्। इति शान्ताः॥

दृशौ, दृशः ॥ इति शान्ताः ॥ त्विट्—त्विड्, त्विषौ, त्विषः। त्विड्भ्याम्। त्विट्त्सु—त्विट्सु। सह जुषत इति सजूः, सजुषौ, सजुषः। सजूर्भ्याम्। सजूष्षु-सजूःषु। षत्वस्यासिद्धत्वाद्रुत्वम्। आशीः, आशिषौ, आशिषः। आशीर्भ्याम्। आशीर्भिः ॥ इति षान्ताः। असौ। त्यदाद्यत्वं, टाप्। औङः शी। उत्वमत्वे। अमू, अमूः। अमूम्, अमू, अमूः। अमुया, अमूभ्याम्, अमूभिः। अमुष्यै, अमूभ्याम्। अमूभ्यः। अमुष्याः। अमुष्याः, अमुयोः अमूषाम्। अमुष्याम्, अमुयोः, अमूषु ॥ इति सान्ताः ॥

इति हलन्तस्त्रीलिङ्गप्रकरणम् ॥



---

अथ षकारान्ता निरूप्यन्ते। त्विडिति। 'त्विष दीप्तौ' क्विप्, सुलोपः, जश्त्वचर्त्वे इति भावः। सजूरिति। 'जुषी प्रीतिसेवनयोः' क्विप्, 'सहस्य सः संज्ञायाम्' इति वा 'ससजुषोः' इति निपातनाद्वा सहस्य सभावः, सुलोपः, 'ससजुषो रुः' इति षस्य रुत्वं, 'र्वोरुपधायाः', इति दीर्घः। 'आङः शासु इच्छायाम्' क्विप्, 'आशासः क्वावुपसङ्ख्यानम्' इत्युपधाया इत्वं, 'शासिवसिघसीनां च' इति सस्य षः, आशिष्शब्दात् सोर्लोपः। एतावत् सिद्धवत्कृत्य आह—षत्वस्येति। आशीरिति। षस्य रुत्वे कृते 'र्वोरुपधायाः' इति दीर्घ इति भावः ॥ इति षान्ताः ॥

अथ सकारान्ता निरूप्यन्ते। असाविति। अदश्शब्दस्य स्त्रियामपि पुंवदेव सौ रूपमित्यर्थः। अदस् औ इति स्थिते प्रक्रियां दर्शयति—त्यदाद्यत्वमित्यादिना। अत्वे, पररूपे, टापि, औङः शीभावे, आद्गुणे, अदे इति स्थिते, एकारस्य दीर्घत्वादूत्वं दस्य मत्वं चेत्यर्थः। विभक्तौ सत्याम् अत्वं, पररूपं, टाबित्येतत् सर्वत्र ज्ञेयम्। अमूरिति। जसि, अत्वपररूपटाप्सु, पूर्वसवर्णदीर्घे, ऊत्वमत्वे। टापि सति अदन्तत्वाभावात् जसः शीभावो न। एकाराभावान्नेत्वम्। अमूमिति। पुंवत्, ऊत्वं तु विशेषः। अमू इति। औटि औवत्। अमूरिति। शसि जसीव रूपम्। स्त्रीत्वान्नत्वाभावः। अमुयेति। अदस् आ इति स्थिते, अत्वपररूपटाप्सु 'आङि चापः' इत्येत्वे, अयादेशे, उत्वमत्वे इति भावः। अमूभ्यामिति। अत्वपररूपटाप्सु, ऊत्वमत्वे इति भावः। एवममूभिरिति। अमुष्यै इति। अदस् ए इति स्थिते, अत्वपररूपटाप्सु, स्याड्ढ्रस्वौ, उत्वमत्वे, षत्वमिति भावः। अमूभ्यः इत्यपि भ्यांवत्। टापि अदन्तत्वाभावादेत्वं न। अमुष्या इति। ङसिङसोर्ङेवत् रुत्वविसर्गौ तु विशेषः। अमुयोरिति। ओसि अत्वपररूपटाप्सु, 'आङि चापः' इत्येत्वे, अयादेशे, मुत्वमिति भावः। अमूषामिति। आमि, अत्वपररूपटाप्सु, सुटि, ऊत्वमत्वे, सस्य षत्वमिति भावः। अमुष्यामिति। अदस् इ इति स्थिते,

## अथ हलन्तनपुंसकलिङ्गप्रकरणम् ॥ १३ ॥

स्वमोर्लुक्। दत्वम्। स्वनडुत्-स्वनडुद्, स्वनडुही। 'चतुरनडुहोः—' (सू ३३१) इत्याम्। स्वनड्वांहि। पुनस्तद्वत्। शेषं पुंवत्॥ इति हान्ताः॥ 'दिव उत्' (सू ३३७) अहर्विमलद्यु। अन्तर्वर्तिनीं विभक्तिमाश्रित्य पूर्वपदस्येवोत्तरखण्ड-

---

अत्वपररूपटाप्सु ङेरामि, स्याड्ढ्रस्वौ, मुत्वमिति भावः। अमूष्विति। सुपि अत्वपर-रूपटाप्सु, ऊत्वमत्वे, षत्वमिति भावः। इति सान्ताः॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां हलन्तस्त्रीलिङ्गप्रकरणं समाप्तम्॥



अथ हलन्तनपुंसकलिङ्गे हकारान्ता निरूप्यन्ते। सुशोभनाः अनड्वाहः यस्य कुलस्येति बहुव्रीहौ स्वनडुह्शब्दात् नपुंसकलिङ्गात् सुबुत्पत्तिः। ननु तत्र सौ परतः 'चतुरनडुहोः' इत्याम्, 'अम् संबुद्धौ' इत्यम्, 'सावनडुहः' इति नुम् च स्यात्। हल्ङ्यादिना सुलोपेऽपि प्रत्ययलक्षणसत्त्वादित्यत आह—स्वमोर्लुगिति। परत्वात् हल्ङ्यादिलोपं बाधित्वा 'स्वमोर्नपुंसकात्' इति लुक्। ततश्च लुका लुप्तत्वेन प्रत्ययलक्षणाभावादामादि न भवतीति भावः। दत्वमिति। 'वसुस्रंसु' इत्यनेनेति शेषः। दत्वविधेः पदाधिकारस्थत्वेन तदन्तेऽपि प्रवृत्तेरिति भावः। न च तत्रापि 'न लुमता' इति निषेधः शङ्क्यः। दत्वस्य सुबन्तत्वरूपपदत्वनिमित्तकतया अङ्गकार्यत्वाभावादित्याहुः। स्वनडुदिति। दत्वे चर्त्व-विकल्पः। 'उरःप्रभृतिभ्यः कप्' इति तु न शङ्क्यम्, तत्र गणे अनड्वानित्येकवचनस्यैव पाठादिति बहुव्रीह्यधिकारे मूल एव वक्ष्यते। स्वनडुही इति। 'नपुंसकाच्च' इत्यौङः शीभावः। स्वनड्वांहीति। 'जश्शसोः शिः' इति शिभावे, तस्य सर्वनामस्थानत्वात् 'चतुरनडुहोः' इत्यामि, 'नपुंसकस्य झलचः' इति नुमि 'नश्च' इत्यनुस्वार इति भावः। अत्र यद्वक्तव्यं तत्पुंल्लिङ्गनिरूपणे उक्तम्। इति हान्ताः।

अथ वकारान्ता निरूप्यन्ते। विमला द्यौः—आकाशं यस्य अह्नः इति बहुव्रीहौ, सुब्लुकि, विमलदिव्शब्दात् सोर्लुक्। एतावत् सिद्धवत्कृत्य आह—दिव उदिति। अहर्विमलद्यु इति। वस्य उत्वे इकारस्य यणिति भावः। अहर्ग्रहणं नपुंसकत्वसूचनार्थम्। ननु विमलदिव् औ इति स्थिते 'नपुंसकाच्च' इति शीभावे विमलदिवी इति रूपं वक्ष्यति।

स्यापि पदसंज्ञायां प्राप्तायाम् 'उत्तरपदत्वे चापदादिविधौ प्रतिषेधः' ( वा ४८० ) इति प्रत्ययलक्षणं न। विमलदिवी, विमलदिवि। 'अपदादिविधौ' किम्। दधिसेचौ। इह षत्वनिषेधे कर्तव्ये पदत्वमस्त्येव। चकारस्य कुत्वे तु न॥ इति वान्ताः॥

---

तदयुक्तम्, 'दिव उत्' इत्युत्वप्रसङ्गात्। न च विमलदिवी इति समुदायस्यैव सुबन्ततया पदत्वान्न वकारस्य दिव्शब्दरूपपदान्तत्वमिति वाच्यम् 'सुपो धातु' इति लुप्तां दिव्शब्दोत्तरां विभक्तिं प्रत्ययलक्षणेनाश्रित्य दिव् इत्यस्य पदत्वात्। न च लुका लुप्तत्वात् न प्रत्ययलक्षणमिति वाच्यम्, पदसंज्ञायाः सुबन्तधर्मतया अङ्गधर्मत्वाभावेन तत्र 'न लुमता' इति निषेधाप्रवृत्तेः। अन्यथा राज्ञः पुरुषः राजपुरुषः इत्यादौ पूर्वभागे नलोपादिकं न स्यादित्याशङ्क्य आह—अन्तर्वर्तिनीमित्यादि। उत्तरपदत्वे चेति। समासे उत्तरखण्डस्य पदसंज्ञायां कर्तव्यायाम् अन्तर्वर्तिविभक्तिलोपे प्रत्ययलक्षणप्रतिषेधो वक्तव्यः पदादिविधिं वर्जयित्वा इत्यर्थः। वार्तिकमेतत्। विमलदिवी इति। औङि रूपम्। विमलदिवि इति। शसि सति 'जश्शसोः शिः' इति शिभावे रूपसिद्धिः अझलन्तत्वान्न नुम्।

दधिसेचाविति। सिञ्चतेः क्विप्। दध्नः सेचौ दधिसेचौ। समासे पूर्वोत्तरपदावयवसुपोर्लुकि समासात् पुनः सुबुत्पत्तिरिति स्थितिः। तत्र उत्तरखण्डादुत्तरां विभक्तिं लुप्तां प्रत्ययलक्षणेनाश्रित्य सेच् इत्यस्य पदत्वेन तत्सकारस्य पदादितया 'सात्पदाद्योः' इति षत्वनिषेध इष्टः। उत्तरपदत्वे प्रत्ययलक्षणप्रतिषेधः' इत्येतावत्येवोक्ते तु सेच् इत्युत्तरखण्डस्य पदसंज्ञायां कर्तव्यायां प्रत्ययलक्षणप्रतिषेधः स्यात्। तथा च सेच् इत्यस्य सुबन्तत्वाभावेन अपदतया तत्सकारस्य पदादित्वाभावेन षत्वनिषेधो न स्यात्। अतः अपदादिविधावित्युक्तम्। षत्वनिषेधस्य पदादिविधितया तस्मिन् कर्तव्ये प्रत्ययलक्षणमाश्रित्य सेच् इत्यस्य पदत्वात् तत्सकारस्य 'सात्पदाद्योः' इति षत्वनिषेधो निर्बाधः। ननु सेच् इत्युत्तरखण्डस्य पदत्वे चकारस्य कुत्वं स्यादित्यत आह—चकारस्य कुत्वे तु नेति। कुत्वे कर्तव्ये तु सेच् इत्यस्य पदत्वं नास्त्येव, कुत्वस्य पदान्तविधित्वेन पदादिविधिभिन्नतया तस्मिन् कर्तव्ये प्रत्ययलक्षणप्रतिषेधसत्त्वेन पदत्वाभावादिति भावः। ननु दधि सिञ्चत इति सोपपदाद्विचि उपपदसमासे षत्वं दुर्वारम्, 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति वक्ष्यमाणत्वेन सेच् इत्यस्य अन्तर्वर्तिसुबभावेन अपदान्ततया 'सात्पदाद्योः' इति निषेधस्य तत्राप्रवृत्तेरिति चेत्, अत्र सोपपदात् सिचेः विचः अनभिधानमिति भाव इति कैयटः समाहितवान्। पदात् आदिः पदादिरिति पक्षे तु उपपदसमासेऽपि षत्वं सुपरिहरम्। न चैवमपि परमश्चासौ दण्डी च परमदण्डी सः प्रियः यस्य सः परमदण्डिप्रियः इत्यस्य अवान्तरतत्पुरुषस्य उत्तरखण्डे नलोपानुपपत्तिः 'उत्तरपदत्वे च' इति प्रत्ययलक्षणप्रतिषेधेन

वाः, वारी । अझलन्तत्वान्न नुम् । वारि । चत्वारि ॥ इति रेफान्ताः ॥ 'न लुमता—' (सू २६२ ) इति कादेशो न । किम् , के कानि । इदम् , इमे, इमानि । 'अन्वादेशे नपुंसके एनद्वक्तव्यः' ( वा १५६९ ) । एनत् , एने, एनानि । एनेन । एनयोः । एनयोः ॥ इति मान्ताः ॥ ब्रह्म, ब्रह्मणी ब्रह्माणि । 'सम्बुद्धौ नपुंसकानां

---

तस्य पदत्वाभावादिति वाच्यम् , मध्यपदत्वानाक्रान्तस्यैव उत्तरखण्डस्य विवक्षितत्वादित्यास्तां तावत् । इति वान्ताः ।

अथ रेफान्ता निरूप्यन्ते । वारिति । वार्शब्दो रेफान्तो नपुंसकलिङ्गः । 'आपः स्त्री भूम्नि वार् वारि' इत्यमरः । वार्शब्दात् स्वमोर्लुक् रेफस्य विसर्ग इति भावः । चत्वारीति । चतुर् शब्दो नित्यं बहुवचनान्तः, तस्य जश्शसोश्शिः, तस्य सर्वनामस्थानत्वात् , 'चतुरनडुहोः' इति प्रकृतेः आम् । स च मित्वादन्त्यादच उकारात् परः, उकारस्य यण् , अझलन्तत्वान्न नुम् इति भावः । इति रेफान्ताः ।

अथ मकारान्ता निरूप्यन्ते । किम्शब्दात् स्वमोर्लुकि प्रत्ययलक्षणमाश्रित्य विभक्तिपरकत्वात् कादेशमाशङ्क्य आह—न लुमतेति । सोरमश्चान्यत्र कादेशे सर्वशब्दवद्रूपाणीत्याह—के कानीति । इदमिति । स्वमोर्लुकि रूपम् । 'इदमो मः, दश्च' इत्यादिविधयो न भवन्ति, 'न लुमता' इति निषेधादिति भावः । इमे इति । औङि अत्वं, पररूपम् , 'दश्च' इति दस्य मः' 'नपुंसकाच्च' इति शीभावः, गुण इति भावः । इमानीति । जश्शसोश्शिः, अत्वं, पररूपं, 'दश्च' इति मः, 'नपुंसकस्य झलचः' इति नुम् , 'सर्वनामस्थाने च' इति दीर्घ इति भावः । अन्वादेशे नपुंसके एनद्वक्तव्य इति । 'इदमेतदोः' इति शेषः । इदं च अम्येव भवति । तथा च भाष्ये 'एनदिति नपुंसकैकवचने वक्तव्यम्' इति पठित्वा 'कुण्डमानय प्रक्षालयैनत्' इत्युदाहृतम् । औड्शसोः टायाम् ओसि च 'द्वितीयाटौस्स्वेनः' इत्येनादेश एव इति मत्वा आह—एने इत्यादि । वस्तुतस्तु 'द्वितीयाटौस्स्वेनत्' इत्येव सूत्र्यताम् । नपुंसके अमो लुकि एनदिति सिध्यति । एनम्, एनौ, एनान् । एनेन एनयोः, इति तु त्यदाद्यत्वेन सिद्धमिति भाष्ये स्थितम् । परमार्थतस्तु नपुंसकैकवचने अमि एनदादेशः । एनम् , एनौ इत्याद्यर्थं 'द्वितीयाटौस्स्वेनः' इत्यत्र एनादेशो विधातव्यः । येन नाप्राप्तिन्यायेन एनदादेशस्य त्यदाद्यत्वापवादत्वेन त्यदाद्यत्वासम्भवादिति शब्देन्दुशेखरे स्थितं भाष्यप्रदीपोद्द्योते प्रपञ्चितं च । इति मान्ताः ।

अथ नकारान्ता निरूप्यन्ते । ब्रह्मेति । वेदादौ वाच्ये ब्रह्मन्शब्दः नपुंसकलिङ्गः । 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्म विप्रः प्रजापतिः ।' इत्यमरः । स्वमोर्लुकि नलोप इति भावः । ब्रह्मणी इति । औङः शी, 'अट्कुप्वाङ्' इति णत्वम् । 'विभाषा ङिश्योः' इत्यल्लोपस्तु न, 'न संयोगाद्वमन्तात्' इति निषेधादिति भावः । ब्रह्माणीति । जश्शसोः शिः, तस्य

नलोपो वा वाच्यः । हे ब्रह्मन्-हे ब्रह्म । 'रोऽसुपि' ( सू १७२ )। अहर्भाति । 'विभाषा ङिश्योः' ( सू २२७ )। अह्नी-अहनी, अहानि । (४४३) **अहन्** ८।२।६८।। 'अहन्' इत्यस्य रुः स्यात्पदान्ते । अहोभ्याम्, अहोभिः । इह 'अहः' 'अहोभ्याम्' इत्यादौ रत्वरुत्वयोरसिद्धत्वान्नलोपे प्राप्ते 'अहन्' इत्यावर्त्य एकेन नलोपाभावं निपात्य द्वितीयेन रुर्विधेयः । तदन्तस्यापि रत्वरुत्वे । दीर्घाण्यहानि यस्मिन् स दीर्घाहा निदाघः । इह हल्ङ्यादिलोपे प्रत्ययलक्षणेन 'असुपि' इति

---

सर्वनामस्थानत्वात् नान्तलक्षणो दीर्घः । हे ब्रह्मन्निति । 'सम्बुद्धौ नपुंसकानाम्' इति नलोपविकल्प इति भावः । अथ अहन्शब्दात् स्वमोर्लुकि 'अहन्' इति रुत्वे प्राप्ते आह—रोऽसुपीति । लुका लुप्तत्वेन प्रत्ययलक्षणाभावादिति भावः । अहर्भातीति । अत्र रुत्वे तु 'हशि च' इत्युत्वे गुणे अहो भातीति स्यात् । रेफविधौ तस्य उत्वं न, रोरित्युकारानुबन्धग्रहणादिति भावः । अहानीति । जश्शसोः शि, सर्वनामस्थानत्वात् उपधादीर्घः, अल्लोपस्तु न, सर्वनामस्थानत्वादिति भावः । टादावचि अल्लोपः, अह्ना, अह्ने इत्यादि । भ्यामादौ हलि विशेषमाह—अहन् । 'ससजुषो रुः' इत्यतो रुरित्यनुवर्तते, 'स्कोः संयोगाद्योः' इत्यतः 'अन्त' इति च पदस्येत्यधिकृतम् । 'अहन्' इति लुप्तषष्ठीकम् । तदाह—अहन्नित्यस्येत्यादिना । अहोभ्यामिति । नकारस्य रुत्वे, 'हशि च' इत्युत्वे, गुण इति भावः ।

ननु अहः, अहोभ्यामित्यत्र रुत्वरुत्वयोरसिद्धत्वान्न लोपः स्यात् । न च रत्वरुत्वे नलोपापवादाविति वाच्यम्, 'न ङिसम्बुद्ध्योः' इति नलोपनिषेधस्थले हे अहरित्यत्र, दीर्घाणि अहानि यस्मिन् स दीर्घाहाः हे दीर्घाहो निदाघ इत्यत्र च नलोपे असत्यपि रत्वरुत्वयोरारम्भाद् इत्याशङ्क्य निराकरोति—इहेति एकेनेति । आवृत्तयोः प्रथमेन 'अहन्' इति सूत्रेण पदान्ते अहन्नित्येव स्यात्, न तु नलोप इत्यर्थकेनेत्यर्थः । द्वितीयेनेति । 'अहन्नित्यस्य रुः स्यात् पदान्ते' इत्यर्थकेनेत्यर्थः । एवं च अह्नो नलोपप्रतिषेधः' इति वार्तिकं न कर्तव्यमिति भावः । तदन्तस्यापीति । अहन्शब्दान्तस्यापि रत्वरुत्वे भवतः, पदाधिकारस्थत्वादिति भावः । 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति निषेधस्तु प्रत्ययविधिमात्रविषय इति 'असमासे निष्कादिभ्यः' इति सूत्रे भाष्यकैयटयोः स्पष्टम् । तदन्ते रुत्वप्रवृत्तिं दर्शयति—दीर्घाहा निदाघ इति । दीर्घाहन्शब्दात् पुँल्लिङ्गात् सौ परत्वादुपधादीर्घे कृते हल्ङ्यादिना सुलोपः । 'अहन्' इति रुत्वे, 'भोभगो' इत्यपूर्वत्वाद्यत्वे 'हलि सर्वेषाम्' इति यलोपे, रूपमिति भावः । ननु सुलोपे कृते 'रोऽसुपि' इति रत्वे तस्य यत्वं न भवति । यत्वविधौ रोः इत्युकारानुबन्धग्रहणात् । तथा च दीर्घाहार्निदाघ इत्येव युक्तमित्यत आह—इह हल्ङ्यादीत्यादि । ननु नान्तलक्षणदीर्घस्य परत्वेऽपि अकृतव्यूहपरिभाषया हल्ङ्यादिलोपात् प्राक् प्रवृ-

निषेधाद्रत्वाभावे रुः, तस्याद्धित्वाचान्तलक्षण उपधादीर्घः। सम्बुद्धौ तु हे दीर्घाहो निदाघ, दीर्घाहानौ, दीर्घाहानः। दीर्घाहा। दीर्घाहोभ्याम्। 'दण्डि, दण्डिनी, दण्डीनि। स्रग्वि, स्रग्विणी, स्रग्वीणि। वाग्मि, वाग्मिनी, वाग्मीनि। बहुवृत्रह, बहुवृत्रघ्नी-बहुवृत्रहणी, बहुवृत्रहाणि। बहुपूष, बहुपूष्णी-बहुपूषणी, बहुपूषाणि। बह्वर्यम्, बह्वर्यम्णी-बह्वर्यमणी, बह्वर्यमाणि॥ इति नान्ताः॥ असृजः पदान्ते

---

त्तिर्न सम्भवति। रुत्वेन नकारस्य विनाशोन्मुखत्वादित्यत आह—तस्यासिद्धत्वादिति। प्रवृत्तस्य रुत्वस्यासिद्धत्वान्नान्तलक्षणो दीर्घो निर्बाध इति भावः। वस्तुतस्तु अकृतव्यूहपरिभाषाया निर्मूलत्वादिह हल्ङ्यादिलोपात् पूर्वमेव परत्वादुपधादीर्घ इत्येवोचितमित्यलम्। सम्बुद्धौ त्विति। सोरत्र हल्ङ्यादिलोपात् प्रत्ययलक्षणमाश्रित्य असम्बुद्धौ इति प्रवृत्तेः। उपधादीर्घाभावे रुत्वे 'हशि च' इत्युत्वे, आद्गुणे, हे दीर्घाहो निदाघ इति रूपमित्यर्थः। अत्र 'रोऽसुपि' इति रत्वविधेस्तदन्तेऽपि प्रवृत्तौ फलं तु नपुंसके दीर्घाहर्निदाघजालमित्यादि बोध्यम्।

दण्डीति। दण्डोऽस्यास्तीत्यर्थे 'अत इनिठनौ' इति इनिः, दण्डिन्शब्दात् स्वमोर्लुक्, नस्य लोप इति भावः। दण्डिनी इति। औङश्शी। असर्वनामस्थानत्वात् 'इन्हन्' इति नियमाच्च न दीर्घ इति भावः। दण्डीनीति 'जश्शसोः शिः' 'इन्हन्' इति दीर्घ इति भावः। स्रग्वीति। 'अस्मायामेधास्रजो विनिः' इति स्रज्शब्दात् मत्वर्थीयो विनिः। स्रज् इत्यस्य अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वात् जस्य कुत्वं स्रग्विन्शब्दात् सुबुत्पत्तिः। दण्डिवद्रूपाणि। अत्र इनः अनर्थकत्वेऽपि 'इन्हन्' इत्यत्र ग्रहणं भवत्येव, 'अनिनस्मिन्' इति वचनादिति बोध्यम्। वाग्मीति। 'वाचो ग्मिनिः' इति ग्मिनिः। तद्धितत्वान्न गकार इत्, चकारस्य जश्त्वम्, कुत्वम्, वाग्मिन्शब्दात् सुबुत्पत्तिः, स्रग्विवद्रूपाणि। बहवः वृत्रहणो यस्मिन् मन्वन्तरे इति बहुव्रीहौ बहुवृत्रहन्शब्दात् स्वमोर्लुकि, नलोपे, बहुवृत्रहेति रूपम्। औङः श्याम्, अल्लोपे, 'हो हन्तेः' इति कुत्वे, वृतघ्नी इति रूपम्। 'अत्पूर्वस्य' इति नियमान्न णत्वम्। एतावत्सिद्धवत्कृत्य जश्शसोराह—बहुवृत्रहाणीति। शेः सर्वनामस्थानत्वेन तस्मिन् परे अल्लोपाभावात् 'इन्हन्' इत्युपधादीर्घे 'एकाजुत्तरपदे णः' इति णत्वमिति भावः। बहुपूषाणीति। बहवः पूषणो यस्मिन्निति बहुव्रीहिः। बहुपूष, बहुपूष्णी 'रषाभ्याम्' इति णत्वम्। जश्शसोस्तु शिः, शौ दीर्घः, 'अट्कुप्वाङ्' इति णत्वम्। बह्वर्यमाणीति। बहवः अर्यमणो यस्मिन्निति बहुव्रीहिः बहुपूषवद्रूपाणि। इति नान्ताः।

अथ जकारान्ता निरूप्यन्ते। शरीरं यदा उत्पद्यते तदैव येन सृज्यते न दन्तादिवन्मध्ये इत्यर्थे सृज्धातोः नञ्पूर्वात् सम्पदादित्वात् क्विप् उपपदसमासे 'नलोपो नञः'

कुत्वम्, सृजेः क्विनो विधानात् । विश्वसृडादौ तु न । सृजिदृशोः-' ( सू २४०५ ) इति सूत्रे 'रज्जुसृड्भ्याम्, इति भाष्यप्रयोगात् । यद्वा 'व्रश्च-' ( सू २९४ ) आदि-सूत्रे सृजियज्योः पदान्ते षत्वं कुत्वापवादः । स्रग्ऋत्विक्छब्दयोस्तु निपातनादेव कुत्वम् । असृक्छब्दस्तु अस्यतेरौणादिके ऋजप्रत्यये बोध्यः । असृक्-असृग्,

इति नकारलोपे असृज्शब्दः रक्तपर्यायो नपुंसकलिङ्गः । 'रुधिरासृग्लोहितास्ररक्त-क्षतजशोणितम्' इत्यमरः । तस्य स्वमोर्लुकि विशेषमाह—असृजः पदान्ते कुत्वमिति । 'क्विन्प्रत्ययस्य' इति कुत्वस्यासिद्धत्वात् 'चोः कुः' इति प्राप्तं कुत्वं बाधित्वा तदप-वादे व्रश्चादिषत्वे कृते, तस्य 'क्विन्प्रत्ययस्य' इति कुत्वेन खकारः, अघोषश्वासविवार-महाप्राणत्वसाम्यादित्यर्थः । न च षत्वस्य निरवकाशत्वं शङ्क्यम्, सृष्टमित्यादौ अप-दान्ते 'क्विन्प्रत्यस्य' कुः' इति कुत्वाभावस्थले षत्वस्य चारितार्थत्वात् । ननु क्विन्नन्त-त्वाभावादिह 'क्विन्प्रत्ययस्य' इति कुत्वं कुत इत्यत आह—सृजेः क्विनो विधानादिति । ऋत्विगादिसूत्रेण इति शेषः । तथा च क्विन् प्रत्ययो यस्मादिति अतद्गुणबहुव्रीह्या-श्रयणादिहापि कुत्वं निर्बाधमिति भावः । भाष्यप्रयोगादिति । न च रज्जुसृड्भ्याम् इति भाष्यप्रयोगात् विश्वसृडादौ कथं कुत्वाभाव इति वाच्यम्, ज्ञापकस्य सामा-न्यापेक्षत्वात् । न चैवं सति असृज्शब्देऽपि कुत्वं न स्यादिति वाच्यम्, अनव्यय-पूर्वपदस्यैव सृजेर्भाष्यप्रयोगतः कुत्वाभावबोधनादिति भावः । ननु उदाहृतभाष्यप्रयो-गात् विश्वसृड्रज्जुसृडादौ षत्वसिद्धावपि देवान् यजतीति देवेट् इत्यादौ 'चोः कुः' इति कुत्वस्यासिद्धत्वात् व्रश्चादिना षत्वे, तस्य 'क्विन्प्रत्ययस्य कुः' इति कुत्वं दुर्वार-मित्यस्वरसादाह—यद्वेति । षत्वं कुत्वापवाद इति । यद्यपि सृष्टमित्यादौ अपदान्ते षत्वं सावकाशम् । तथापि यजिसृज्योः' पूर्वोक्तरसाहचर्येण पदान्तेऽपि विशिष्यविहितत्वा-न्निरवकाशत्वाच्च पदान्तविषये षत्वं कुत्वापवादः । तथा च विश्वसृडादौ देवेडादौ च षत्वं निर्बाधम् । अत एव 'सृजिदृशोः' इति सूत्रे रज्जुसृड्भ्यामिति काम्यज्विधिसूत्रे उपयट्काम्यतीति च भाष्यप्रयोगः सङ्गच्छत इति भावः । नन्वेवं सति स्रगृत्विक्छ-ब्दयोरपि 'क्विन्प्रत्ययस्य' इति कुत्वं बाधित्वा व्रश्चादिना षत्वं स्यादित्यत आह—स्रगृत्विक्छब्दयोरिति । ऋत्विगादिसूत्रे ऋत्विक् स्रक् इति निपातनादेव कुत्वमित्यर्थः । न च स्रष्टा यष्टा इत्यादौ अपदान्ते निपातनात् कुत्वापत्तिरिति वाच्यम् । निपातनेन ह्यनयोः अपवादभूतषत्वस्य अप्रवृत्तिमात्रं बोध्यते । कुत्वं तु स्वशास्त्रेणैव यथायथं भवतीति न दोषः । ननु तर्ह्यसृक्छब्देऽपि कुत्वापवादः षत्वं स्यात्, ऋत्विगादिसूत्रे स्रक्शब्दस्यैव कुत्वनिपातनात् इत्यत आह—असृक्छब्दस्त्विति । 'असु क्षेपणे' इत्यस्मात् औणादिके ऋजप्रत्यये सति निष्पन्नस्य असृक्छब्दस्य 'व्रश्च' इति षत्वाविषयत्वात् 'चोः कुः' इति कुत्वे सति असृक्छब्दो बोध्य इत्यर्थः । असृञ्जीति । जश्शसोः शिः,

असृजी, असृञ्जि। 'पद्दन्नो—' ( सू २२८ ) इति वा । असन्, असानि। असृजा–अस्ना, असृग्भ्याम्–असभ्यामित्यादि । ऊर्क्–ऊर्ग्, ऊर्जी, ऊर्न्जि । नरजानां संयोगः । 'बहूर्जि नुम्प्रतिषेधः' ( वा ४२२१ )। 'अन्त्यात्पूर्वो वा नुम्' ( वा ४२२२ )। बहूर्जि–बहूर्ञ्जि वा कुलानि ॥ इति जान्ताः ॥ त्यत्–त्यद्, त्ये, त्यानि । तत्–तद्, ते, तानि । यत्–यद्, ये, यानि । एतत्–एतद्, एते, एतानि । अन्वादेशे तु एनत् । वेभिद्यतेः क्विप् । वेभित्–वेभिद्, वेभिदी । शाव-

झलन्तत्वान्नुम्, 'नश्च' इत्यनुस्वारः, तस्य परसवर्णो ञकार इति भावः । असानीति शसश्शिः, नान्तत्वाद्दीर्घ इति भावः । अस्नेति । तृतीयैकवचने असन्नादेशे अल्लोपः । असृग्भ्यामिति । असन्नादेशाभावे कुत्वे जश्त्वमिति भावः । असभ्यामिति । भ्यामादौ असन्नादेशे नलोप इति भावः ।

ऊर्गिति । 'ऊर्ज बलप्राणनयोः' क्विप्, स्वमोर्लुक्, कुत्वेन गः, तस्य चर्त्वविकल्प इति भावः । ऊर्न्जीति । जश्शसोः शिः, झलन्तत्वान्नुम्, स च मित्त्वादन्त्यादचः ऊकारात् परो भवति । तदाह–नरजानां संयोग इति । बहूर्क्छब्दोऽपि प्रायेण ऊर्ग्वदेव । जश्शसोः शिभावे कृते, झलन्तलक्षणनुमि ऊकारादुपरि प्राप्ते, बहूर्जि प्रतिषेधो वक्तव्यः । अन्त्यात् पूर्वं नुममेक इच्छन्ति' इति च वार्तिकं प्रवृत्तम् । तदेतदर्थतः संगृह्णाति—बहूर्जीति । बहूर्ज् शब्दे अन्त्यादच ऊकारात् उपरि नुमः प्रतिषेधो वक्तव्यः, किन्तु अन्त्याद्वर्णात् पूर्वो नुम् वा स्यादित्यर्थः । बहूर्जीति । जश्शसोर्नुमभावे रूपम् । बहूर्ञ्जीति । जकारात् पूर्वं रेफादुपरि नुमि कृते श्चुत्वस्यासिद्धत्वात् 'नश्च' इति तस्यानुस्वारे, तस्य परसवर्णे ञकारे रूपं बोध्यम् । अत्र 'बहूर्जि प्रतिषेधः' इति प्रथमवार्तिकं न कर्तव्यम्, 'नपुंसकस्य झलचः' इति सूत्रस्य अचः परो यो झल् तदन्तस्य क्लीबस्य नुम् स्यादिति व्याख्याने सति नुम एवात्राप्रसक्तेः । न चैवं सति वनानीत्यादावव्याप्तिः शङ्क्या, 'इकोऽचि विभक्तौ' इत्यतः अचीत्यनुवर्त्य अजन्तस्य क्लीबस्य सर्वनामस्थाने परे नुम् स्यादिति वाक्यान्तराश्रयणादिति भाष्ये स्थितम् । एवञ्च ऊर्क्छब्दे शौ 'नरजानां संयोगः' इति मूलं भाष्यविरुद्धत्वादुपेक्ष्यमेव, तत्र अचः परस्य झलः अभावेन नुमः अप्रसक्तेः । इति जान्ताः ॥

अथ दकारान्ता निरूप्यन्ते । त्यदिति । त्यत्, तद्, यद्, एतद् एषां स्वमोर्लुकालुप्तत्वाद् त्यदाद्यत्वं पररूपं, 'तदोः स सौ इति सत्वं च न भवति । इतरत्र तु सर्वत्र त्यदाद्यत्वे पररूपे च अदन्तवद्रूपाणि, सर्वनामकार्यं च इति बोध्यम् । अन्वादेशे-त्वेनदिति । अन्वादेशे नपुंसकैकवचने एनद्विधानादिति भावः । औङि जश्शसोश्च एने, एनानि । वेभिद्यतेरिति । श्तिपा निर्देशोऽयम् । वेभिद्य इति यङन्ताद्धातोरित्यर्थः । 'भिदिर् विदारणे' । अस्मात् यङि 'सन्यङोः' इति द्वित्वे, हलादिशेषे, अभ्यासे

ल्लोपस्य स्थानिवत्त्वादझलन्तत्वान्न नुम् । अजन्तलक्षणस्तु नुम् न । स्वविधौ स्थानिवत्त्वाभावात् । बेभिदि ब्राह्मणकुलानि । चेच्छिदि । इति दान्ताः ॥

गवाक्छब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः ।
असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ॥

---

चर्च' इत्यभ्यासभकारस्य जश्त्वेन बकारे, 'गुणो यङ्लुकोः' इति गुणे, बेभिद्य इति रूपम् । तस्मात् 'सनाद्यन्ताः' इति धातुत्वात् क्विप्, अतो लोपः, 'यस्य हलः' इति यलोपः । बेभिद्शब्दात् स्वमोर्लुक्, जश्त्वचर्त्वे बेभित् बेभिद् इति रूपमिति भावः । बेभिदीति । औङः श्यां रूपम् । जश्शसोश्शौ झलन्तलक्षणनुममाशङ्क्य आह—शाविति । स्थानिवत्त्वादिति । 'अचः परस्मिन्' इत्यनेनेति शेषः । न चात्र अल्लोपस्थानिभूतादचः पूर्वो दकार एव, न भिकारः, तस्य दकारेण व्यवधानात् तथा च तस्य नुम्विधिः स्थानिभूतादचः पूर्वस्य विधिर्नेति वाच्यम्, 'अचः परस्मिन्' इत्यत्र व्यवहितपूर्वस्यापि ग्रहणस्योक्तत्वात् । 'क्वौ लुप्तं न स्थानिवत्' इति तु न सार्वत्रिकमिति 'दीधीवेवीटाम्' इत्यत्र कैयटे स्पष्टम् । नन्वल्लोपस्य स्थानिवत्त्वात् झलन्तलक्षणनुमोऽभावेऽपि अजन्तलक्षणो नुम् दुर्वार इत्यत आह—अजन्तलक्षणस्तु नुम् नेति । कुत इत्यत आह—स्वविधौ स्थानित्वाभावादिति । अल्लोपस्य स्थानिवत्त्वमाश्रित्य मित्वादन्त्यादचः परः प्रवर्तमानो हि नुम् दकारोपरितनस्य अकारोपलक्षितदेशस्योपरि प्रवृत्तिमर्हति तथा च लोपस्थानिभूतस्य स्वस्यैवात्र नुम्विधिः । तस्मिन् कर्तव्ये अल्लोपस्य स्थानिवत्त्वं न सम्भवति, स्थान्यपेक्षया पूर्वस्यैव विधौ 'अचः परस्मिन्' इत्यस्य प्रवृत्तेः । स्थानिवत्सूत्रमपि स्थानिभूतस्य स्वस्य कार्यविधौ न प्रवर्तते, अनल्विधाविति निषेधादित्यर्थः । 'अचः परस्मिन्' इति सूत्रे पूर्वविधावित्यपनीय 'अपरविधाविति वक्तव्यं स्वविधौ स्थानिवत्त्वार्थम्' इति वार्तिकं तु भाष्ये प्रत्याख्यातमित्यदोषः । इति दान्ताः ।

अथ चकारान्ता निरूप्यन्ते ॥

जायन्ते नव सौ तथामि च नव भ्यांभिस्भ्यसां संगमे
षट्सङ्ख्यानि नवैव सुप्यथ जसि त्रीण्येव तद्वच्छसि ।
चत्वार्यन्यवचस्सु कस्य विबुधाः शब्दस्य रूपाणि त-
ज्जानन्तु प्रतिभास्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ॥'

इति प्राचीनस्य कस्यचित् प्रश्नस्य श्लोकद्वयेन उत्तरमाह—गवाक्छब्दस्येति । अर्चागतिभेदत इति । 'अनिदिताम्' इत्यञ्चेर्गतौ नकारस्य लोपः । पूजायां तु 'नाञ्चेः पूजायाम्' इति निषेधान्नस्य लोपो नेत्येवं गतिपूजात्मकार्थभेदनिबन्धननलोपतदभावा-

स्वमुसुप्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसोः ।
चत्वारि शेषे दशके रूपाणीति विभावय ॥

तथाहि । गामञ्चतीति विग्रहे 'ऋत्विग्—' ( सू. ३७३ ) आदिना क्विन् । गतौ नलोपः । 'अवङ् स्फोटायनस्य' ( सू. ८८ ) इत्यवङ् । गवाक्-गवाग् । 'सर्वत्र विभाषा—' ( सू० ८७ ) इति प्रकृतिभावे, गोअक्-गोअग् । पूर्वरूपे, गोऽक् गोऽग् । पूजायां, नस्य कुत्वेन ङः । गवाङ् गोअङ् गोऽङ् । अभ्यप्येता-

भ्यामिति यावत् । असन्धीति प्रकृतिभावो विवक्षितः । असंध्यवङ्पूर्वरूपैरित्यनन्तरं चशब्दोऽध्याहर्तव्यः । शतमित्यनन्तरमितिशब्दश्च । तथा च गत्यर्थपूजार्थभेदनिबन्धनलोपतदभावाभ्याम् असन्ध्यवङ्पूर्वरूपैश्च गवाक्छब्दस्य रूपाणि नवाधिकशतमिति मतं सम्मतमित्यर्थः । एतेन 'विंशत्याद्याः सदैकत्वे संख्यास्संख्येयसंख्ययोः' इति कोशात् शतशब्दस्य संख्यापरत्वे गवाक्छब्दस्य रूपाणामिति भाव्यम् , संख्येयपरत्वे तु मतमित्येकवचनानुपपत्तिरिति निरस्तम् । संख्येयपरत्वमाश्रित्य इतिशब्दमध्याहृत्य नवाधिकशतं रूपाणीति मतमित्यर्थाश्रयणात् । यद्वा शतशब्दस्य संख्येयपरत्वेऽपि शतमित्येकत्वाभिप्रायं मतमित्येकवचनमित्यदोषः । नवाधिकशतमित्येतत् प्रपञ्चयति—स्वम्सुप्सु नवेति । प्रत्येकमिति शेषः । रूपाणीति सर्वत्रान्वेति । षड् भादौ षट्के स्युरिति । भिसि भ्यांत्रये, भ्यसुद्वये च प्रत्येकं षडित्यर्थः । त्रीणि जश्शसोरिति । प्रत्येकमिति शेषः । चत्वारि शेषे दशक इति । प्रत्येकमिति शेषः । स्वम्सुप्सु नवेत्येतदुपपादयति—तथा हीति । गामञ्चतीति । गां गच्छति पूजयति वेत्यर्थः । क्विनि उपपदसमासे सुब्लुकि गो अञ्च् इति स्थिते प्रक्रियां दर्शयति—गतौ नलोप इति । गत्यर्थकत्वे 'अनिदिताम्' इति नस्य लोप इत्यर्थः । गवाक्-गवागिति । गो अच् स् गो अच् अम् इति स्थिते, स्वमोर्लुकि, अक्लीबस्येति पर्युदासात् सर्वनामस्थानत्वाभावेन 'उगिदचाम्' इति नुमभावे, ओकारस्य अवङादेशे सवर्णदीर्घः, जश्त्वचर्त्वे इति भावः । सर्वत्रेति । अवङादेशस्य वैकल्पिकत्वात्तदाभावपक्षे 'सर्वत्र विभाषा' इति प्रकृतिभावात् 'एङः पदान्तादति' इति पूर्वरूपस्याप्यभावे सतीत्यर्थः । पूर्वरूपे इति । अवङः प्रकृतिभावस्य चाभावेन 'एङः पदान्ता' इति पूर्वरूपे सतीत्यर्थः । तदेवं गत्यर्थकत्वे षड् रूपाणि ।

पूजायामिति । 'नाञ्चेः पूजायाम्' इति नलोपाभावात् गो अञ्च् इत्यस्मात् स्वमोर्लुकि चकारस्य संयोगान्तलोपे नकारस्य 'क्विन्प्रत्ययस्य कुः' इति कुत्वेन ङकारः । ततः अवङि प्रकृतिभावे पूर्वरूपे च, त्रीणि रूपाणीति भावः । पूर्वोदाहृतषड्रूपसङ्क-

४१५) इति नलोपः। पर्णध्वत्। अञ्चतेस्तु स्यादेव। प्राची, प्रतीची। (४५६) **वनो र च ४।१।७॥** वन्नन्तात्तदन्ताच्च प्रातिपदिकात्स्त्रियां ङीप्स्यात्, रश्चान्तादेशः। वन्निति ङ्वनिप्क्वनिब्वनिपां सामान्यग्रहणम्। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' ( प २४ )। तेन प्रातिपदिकविशेषणात्तदन्तान्तमपि लभ्यते। सुत्वानमतिक्रान्ता, अतिसुत्वरी। अतिधीवरी। शर्वरी। 'वनो न

---

इत्यमरः। 'स्रंसु ध्वंसु अवस्रंसने'। सुपीत्यनुवृत्तौ 'क्विप् च' इति क्विप् उपपदसमासः सुब्लुक् 'अनिदिताम्' इति नलोपः, हल्ङ्यादिना सोर्लोपः, 'वसुस्रंसु' इति दत्वमिति भावः। स्यादेवेति। ङीबिति शेषः। प्राचीति। प्रपूर्वात् अञ्चतेः 'ऋत्विक्' इत्यादिना क्विन्, 'अनिदिताम्' इति नलोपः, उगित्वात् ङीप्, 'अचः' इत्यकारलोपः, 'चौ' इति दीर्घः। एवं प्रतीची।

वनो र च। वनः र च इति छेदः। र इति लुप्तप्रथमाकम्, अकार उच्चारणार्थः, चकारात् ङीप् समुच्चीयते। वन इति पञ्चम्यन्तम्। तेन वन्प्रत्ययान्तं तदन्तं च विवक्षितम्। प्रातिपदिकादित्यधिकृतम्। तदाह—वन्नन्तादित्यादिना। अन्तादेश इति। प्रकृतेरिति शेषः। नान्तत्वादेव ङीप् प्राप्तः, तत्सन्नियोगेन रेफमात्रमिह विधेयम्। सामान्येति। अनुबन्धविनिर्मुक्तवन्ग्रहणस्य त्रिष्वपि साधारणत्वादिति भावः। ननु वन्ग्रहणेन वन्प्रत्ययान्तं तदन्तं च कथं लभ्यत इत्यत आह—प्रत्ययग्रहणे इति। यस्मात् प्रकृतिभूतात् शब्दात् यः प्रत्ययो विहितः तदादेः सः प्रकृतिभूतः शब्दः आदिर्यस्य तस्य, तदन्तस्य स प्रत्ययः अन्तो यस्य समुदायस्य, तस्य च ग्रहणम्। प्रकृतिप्रत्ययसमुदायस्य तन्मध्यवर्तिनश्च ग्रहणमित्यर्थः। 'तिङ्ङतिङः' इत्यत्र तिङ्ग्रहणेन शबादिविकरणस्यापि ग्रहणार्थं तदादिग्रहणम्। 'यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' इति सूत्रे इयं परिभाषा भाष्ये स्थिता। तेनेति। वन्नन्तेन प्रातिपदिकादित्यधिकृतस्य विशेषणात् पुनस्तदन्तविधिलाभादिति भावः। न चैवं सति वन्नन्तस्य कथं लाभ इति वाच्यम्, 'येन विधिस्तदन्तस्य' इत्यत्र 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इत्यतः स्वमित्यनुवर्त्य विभक्तिपरिणामेन स्वस्य चेति व्याख्यानादिति भावः। तदेतदपिशब्देन सूचितम्। वन्नन्तमेव व्यपदेशिवत्त्वेन वन्नन्तान्तमिति केचित्। 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति तु 'स्त्रियाम्' इत्यस्मिन् अधिकारे न प्रवर्तते, 'शूद्रा चामहत्पूर्वा जातिः' इत्यत्र अमहत्पूर्वेति लिङ्गात्। अथ वन्नन्तान्तमुदाहरति—सुत्वानमिति। 'षुञ् अभिषवे' 'सुयजोर्ङ्वनिप्' 'ह्रस्वस्य पिति कृति' इति तुक्। सुत्वन् शब्दः। सुत्वानमतिक्रान्ता इति विग्रहे 'अत्यादयः' इति समासः। सुब्लुकि, ङीप्, नकारस्य रत्वम्, अतिसुत्वरीति रूपम्। अतिधीवरीति। 'ड्डधाञ्

हश इति वक्तव्यम्' ( वा २४०५ )। हशन्ताद्धातोर्विहितो यो वन् तदन्तात्तदन्तान्ताच्च प्रातिपदिकान्ङीप् रश्च नेत्यर्थः। 'ओणृ अपनयने' वनिप्, 'विड्वनोः—' ( सू २९८२ ) इत्यात्त्वम्। अवावा ब्राह्मणी। राजयुध्वा। 'बहुव्रीहौ वा' ( वा २४०७ )। बहुधीवरी बहुधीवा। पक्षे डाब्वक्ष्यते। (४५७) पादोऽन्यतरस्या-

धारणपोषणयोः' 'आतो मनिन्क्वनिब्वनिपश्च', 'अन्येभ्योऽपि दृश्यते' इति भाषायामपि क्वनिप् 'घुमास्था' इति ईत्वम्। 'धीवानमतिक्रान्ता इति विग्रहे 'अत्यादयः' इति समासः। ङीप् रश्च, अतिधीवरीति रूपम्। भाष्ये तु ध्यायतेः क्वनिपि सम्प्रसारणे 'हलः' इति दीर्घ इति स्थितम्। शर्वरीति। 'शॄ हिंसायाम्', 'आतो मनिन्क्वनिब्वनिपश्च', 'अन्येभ्योऽपि दृश्यते'। इति भाषायामपि वनिप्, 'सार्वधातुकार्धधातुकयोः' इति गुणः, 'वनो र च' इति ङीप् रश्च। वन्नन्तस्योदाहरणमेतत्। अतिशर्वरीति पाठे तु इदमपि वन्नन्तान्तस्योदाहरणम्। सुत्वरी, धीवरी, शर्वरी इति वन्नन्तस्योदाहरणानि।

वनो नेति। पूर्ववत् वन्नन्तं वन्नन्तान्तं च गृह्यते। हश इति पञ्चमी, तेन च धातोरित्यधिकृत्य विहितेन वना आक्षिप्तं धातोरित्येतत् विशेष्यते, तदन्तविधिः। ङीबिति रश्चेति चानुवर्तते। तदाह—हशन्तादित्यादिना। विहितविशेषणस्य प्रयोजनं दर्शयन् वन्नन्तोदाहरणं दर्शयितुमाह—ओणृ इत्यादिना। वनिविति। 'अन्येभ्योऽपि दृश्यते' इत्यनेनेति शेषः। अवावेति। ओण—इत्यस्मात् वनिपि 'विड्वनोरनुनासिकस्यात्' इति णकारस्य आत्वे ओकारस्यावादेशे अवावन्शब्दः। स्त्रीत्वस्फोरणाय ब्राह्मणीति विशेष्यम्। अत्र ओण् इति धातोः हशन्तात् वन् विहितः, तदन्तत्वात् न ङीब्रत्वे, किन्तु राजवद्रूपम्। हशन्तात् धातोः परो यो वन् इति व्याख्याने तु आत्वे सति वनो हशः परत्वाभावात् निषेधो न स्यादिति भावः। वन्नन्तान्तमुदाहरति—राजयुध्वेति। राजानं योधितवतीत्यर्थः। भूते कर्मणि क्विवित्यनुवर्त्तमाने 'राजनि युधिकृञः' इति क्वनिप् कर्मीभूते राजनि उपपदे युधेः कृञश्च क्वनिविति तदर्थः। उपपदसमासे सुब्लुक्, राजयुध्वन्शब्दः। अत्र हशो विहितो वन्, तदन्तो युध्वन्शब्दः तदन्तो राजयुध्वन्शब्दः अतो न ङीब्रादेशावित्यर्थः। बहुव्रीहौ। इदं वार्तिकम्। 'वनो र च' इति विधिः बहुव्रीहौ वा स्यादित्यर्थः। 'अनो बहुव्रीहेः' इति निषेधस्यापवादः। बहुधीवरीति। बहवो धीवानो यस्या इति विग्रहः। बहुधीवेति। ङीब्रत्वयोरभावे राजवद्रूपम्। न च बहूनि पर्वाणि यस्याः सा बहुपर्वेत्यत्रापि ङीब्रत्वविकल्पः स्यादिति वाच्यम्, 'अल्लोपोऽनः' इति उपधालोपयोग्यस्थल एव एतद्वार्तिकस्य प्रवृत्तेः भाष्ये उक्तत्वात् बहुपर्वन्शब्दे च 'न संयोगाद्वमन्तात्' इत्यल्लोपनिषेधात्। पक्षे इति।

म् ४।१।८।। पाच्छब्दः कृतसमासान्तस्तदन्तात्प्रातिपदिकात् ङीब्वा स्यात्। द्विपदी—द्विपाद्। ( ४५८ ) टाबृचि ४।१।९।। ऋचि वाच्यायां पादन्ताट्टाप् स्यात्। द्विपदा ऋक्। एकपदा। 'न षट्स्वस्रादिभ्यः' ( सू ३०८ ) पञ्च। चतस्रः। 'पञ्च'

ङीब्रत्वाभावपक्षे 'डाबुभाभ्याम्' इति डाप् वक्ष्यत इत्यर्थः। डपावितौ बहुधीवन् आ इति स्थिते 'टेः' इति टिलोपे बहुधीवाशब्दात् सोर्हल्ङ्यादिलोपे बहुधीवा इति रमावद्रूपम्। ङीब्रत्वयोः डापश्चाभावे सौ बहुधीवेत्येव रूपम्। ङीब्रत्वयोः बहुधीवरीति। औजसादिषु तु बहुधीवर्यौ–बहुधीवे–बहुधीवानौ इत्यादि रूपत्रयमिति भावः।

पादो। कृतसमासान्त इति। अन्तलोपात्मके समासान्ते कृते परिशिष्टः पाद्शब्दः इह गृह्यत इत्यर्थः। तदन्तादिति। पाच्छब्दान्तादित्यर्थः। पाद् इति पञ्चम्यन्तेन 'प्रातिपदिकात्' इत्यधिकृतस्य विशेषणादिति भावः। ङीब्वा स्यादिति। 'ऋन्नेभ्यः' इत्यतः तदनुवृत्तेरिति भावः। द्विपदीति। द्वौ पादौ यस्या इति बहुव्रीहिः। 'सङ्ख्यासुपूर्वस्य' इति पादशब्दान्तस्याकारस्य लोपः। ङीपि भत्वात् 'पादः पत्' द्विपदीति रूपम्। ङीबभावे तु–द्विपादिति। टाबृचि। पादन्तादिति। प्रातिपदिकादिति शेषः। 'पादोऽन्यतरस्याम्' इत्यतः अनुवृत्तेन पाच्छब्देन प्रातिपदिकादित्यधिकृतस्य विशेषणादिति भावः। 'पादोऽन्यतरस्याम्' इति ङीपोऽपवादोऽयम्। द्विपदा ऋगिति। द्वौ पादौ यस्या इति विग्रहः। एकपदेति। एकः पादो यस्या इति विग्रहः। उभयत्रापि टापि, 'पादः पत्'। 'ङ्याप्प्रातिपदिकात्' इति सूत्रभाष्ये तु पादशब्दसमानार्थकं पदशब्दमवष्टभ्य प्रत्याख्यातमेतत्। न च ऋचि वाच्यायां द्विपदी द्विपादिति प्रयोगव्यावृत्तये एतत्सूत्रमिति वाच्यम्। एतद्भाष्यप्रामाण्येन तथाविधप्रयोगस्यापीष्टत्वादित्यलम्।

न षट्स्वस्रादिभ्य इति। इदमजन्ताधिकारे ऋकारान्तनिरूपणे व्याख्यातम्। पञ्चेति। इहान्तरङ्गत्वात् नान्तलक्षणङीपि प्राप्ते षट्त्वान्निषिद्धे 'षड्भ्यो लुक्' इति जश्शसोर्लुकि नलोप इति भावः। चतस्र इति। चतसृभावे सति ऋदन्तलक्षणङीब् न, स्वस्रादित्वात्। ननु 'न षट्स्वस्रादिभ्यः' इति ङीबेव प्रतिषिध्यताम्, किं टाबनुवृत्त्या। नान्तत्वात् टापः प्रसक्तेरभावेन तन्निषेधवैयर्थ्यादित्यत आह—पञ्चेत्यत्रेति। पञ्चेत्यत्र 'न षट्स्वस्रादिभ्यः' इति न टाबित्यन्वयः। अदन्तलक्षणष्टाबिति शेषः। नान्तलङ्णङीपि प्रतिषिद्धे सति जश्शसोर्लुकि नलोपे कृते अदन्तत्वात् प्राप्तस्य टापः प्रतिषेधार्थमिह टाबनुवृत्तिरावश्यकीति यावत्। न च नलोपस्यासिद्धत्वात् टापः प्रसक्तिरेव नेति वाच्यम्, सुप्स्वरसंज्ञातुग्विधिषु टाब्विधेरनन्तर्भावेन तस्मिन् कर्तव्ये नलोपस्यासिद्धत्वाभावात्। ननु 'न षट्स्वस्रादिभ्यः' इत्यत्र सत्यामपि टाबनुवृत्तौ कथमिह षट्संज्ञानिबन्धनस्तन्निषेधः, नलोपे कृते षट्संज्ञाविरहात्। न च टाब्निषेधे

इत्यत्र नलोपे कृतेऽपि 'ष्णान्ता षट्' ( सू ३६९ ) इति षट्संज्ञां प्रति 'नलोपः सुप्स्वर—' ( सू ३५२ ) इति नलोपस्यासिद्धत्वात् 'न षट्स्वस्रादिभ्यः' (सू० ३०८) इति न टाप्। ( ४५९ ) **मनः ४।१।११॥** मन्नन्तान्न ङीप्। सीमा। सीमानौ। ( ४६० ) **अनो बहुव्रीहेः ४।१।१२॥** अन्नन्ताद्बहुव्रीहेर्न ङीप्। बहुयज्वा। बहुयज्वानौ। ( ४६१ ) **डाबुभाभ्यामन्यतरस्याम् ४।१।१३॥** सूत्रद्वयोपात्ताभ्यां डाब्वा स्यात्। सीमा, सीमे-सीमानौ। दामा, दामे—दामानौ। 'न पुंसि दाम'

---

कर्तव्ये नलोपस्यासिद्धत्वं शङ्क्यम्, टाब्निषेधस्य सुप्स्वरसंज्ञातुग्विधिषु अनन्तर्भावादित्यत आह—नलोपे कृतेऽपीत्यादि असिद्धत्वादित्यन्तम्। टाब्निषेधविधिरयं षट्संज्ञामपि विधत्ते, कार्यकालपक्षाश्रयणात्। ततश्च तस्मिन् कर्तव्ये नलोपस्यासिद्धत्वेन षट्संज्ञाया निर्बाधतया षट्संज्ञानिबन्धनष्टाप्प्रतिषेधोऽत्र निर्बाध इति भावः। वस्तुतस्तु नलोपस्यासिद्धत्वेऽपि भूतपूर्वषट्संज्ञामाश्रित्य टाब्निषेध उपपद्यते। अत एव 'षट्संज्ञायां नलोपासिद्धत्वस्य न फलम्' इति 'नलोपः सुप्स्वर' इति सूत्रभाष्ये उक्तमित्याहुः।

मनः। 'न षट्स्वस्रादिभ्यः' इत्यतः नेति 'ऋन्नेभ्यः' इत्यतो ङीबिति चानुवर्तते। मन इति प्रत्ययग्रहणपरिभाषया तदन्तं गृह्यते। तदाह—मन्नन्तान्न ङीबिति। सीमेति। 'षिञ् बन्धने' औणादिको मनिन् प्रकृतेर्दीर्घश्च। सीमन्शब्दात् ङीपि निषिद्धे राजवद्रूपम्। ङीपि सति तु अल्लोपे सीम्नीति स्यादिति भावः। ननु वक्ष्यमाणडापि सीमेति सौ रूपसिद्धेः किं ङीब्निषेधेनेत्यत आह—सीमानाविति। डापि तु सति सीमे इत्येव स्यादिति भावः। अनो बहुव्रीहेः। अन इति बहुव्रीहेरित्यस्य विशेषणम्, तदन्तविधिः। नेति ङीबिति च पूर्ववदनुवर्तते तदाह—अन्नन्तादिति॥ बहुयज्वा, बहुयज्वानाविति। बहवो यज्वानो यस्या इति विग्रहः। नान्तलक्षणङीपः प्रतिषेधे राजवद्रूपाणि। 'न संयोगात्' इति निषेधान्नायमुपधालोपी। अतोऽत्र 'अन उपधालोपिनः' इति विकल्पो न प्रवर्तितुमर्हति। डाबुभाभ्याम्। उभाभ्यामित्येतद्व्याचष्टे—सूत्रद्वयोपात्ताभ्यामिति। 'मन' इति 'अनो बहुव्रीहेः' इति च सूत्रद्वयोपात्तात् मन्नन्तादन्नन्तबहुव्रीहेश्च इत्यर्थः। नन्विहान्यतरस्यां ग्रहणं व्यर्थम्। न च तदभावे डाब्नित्यः स्यादिति वाच्यम्, डापो नित्यत्वे तेनैव ङीपो निवृत्तिसम्भवेन ङीब्निषेधवैयर्थ्यात् एवं च ङीप्निषेधडापोर्वचनसामर्थ्यादेव विकल्पसिद्धेः अन्यतरस्यां ग्रहणं व्यर्थमिति चेत्, स्पष्टार्थमिति केचित्। भाष्ये तु 'अन्यतरस्याम्' इति योगविभागमाश्रित्य 'बहुव्रीहौ वा' इति वार्तिकं प्रत्याख्यातम्। सीमेति। सीमन्शब्दात् डापि, टिलोपे सीमाशब्दात् सोर्हल्ङ्यादिलोपः। डाबभावपक्षेऽपि 'मनः' इति ङीब्निषेधे सौ सीमे-

इत्यमरः। बहुयज्वा-बहुयज्वे—बहुयज्वानौ। (४६२) **अन उपधालोपिनोऽन्यतरस्याम् ४।१।२८॥** अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप्स्यात्। पक्षे डाब्ङीब्निषेधौ। बहुराज्ञी-बहुराजा। बहुराज्ञ्यौ-बहुराजे-बहुराजानौ। (४६३) **प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ७।३।४४॥** प्रत्ययस्थात्ककारात्पूर्वस्याकारस्येकारः स्यादापि परे, स आप् सुपः परो न चेत। सर्विका। कारिका। अतः।

---

त्येव राजवद्रूपम्। तर्हि डाब्विधेः किं फलमित्यत आह—सीमे सीमानाविति। मन्नन्तविषये उदाहरणान्तरमाह—दामेति। दाधातोरौणादिको मनिन्। 'हिरण्मयं दाम दक्षिणा' इत्यादौ दामशब्दस्य नपुंसकत्वदर्शनादाह—न पुंसीति। दामन्शब्दः पुंसि न, किन्तु स्त्रीनपुंसकयोरित्यर्थः, 'निषिद्धलिङ्गं शेषार्थम्' इति परिभाषितत्वात्। अन्नन्तबहुव्रीहेरुदाहरति-बहुयज्वेति। बहवो यज्वानो यस्या इति विग्रहः। डापि टिलोपे बहुयज्वाशब्दात् सोर्हल्ङ्यादिलोपः। ङीब्निषेधे सौ एतदेव राजवद्रूपम्। डापः फलमाह—बहुयज्वे, बहुयज्वानाविति। शसि बहुयज्वनः। अत्र अल्लोपस्तु न भवति, 'न संयोगाद्वमन्तात्' इति निषेधात्। अत एव 'अन उपधालोपिनः' इत्यस्य नायं विषयः।

अथ बहवो राजानो यस्या इति बहुव्रीहौ बहुराजन्शब्दात् 'अनो बहुव्रीहेः' इति ङीब्निषेधे 'डाबुभाभ्याम्' इति डापि च नान्तत्वमाकारान्तत्वं च प्राप्तम्, ङीबन्तत्वमपीष्यते, तदर्थमिदमारभ्यते—अन उपधा। इदं सूत्रं नात्र प्रकरणे पठितम्। किन्तु 'दामहायनान्ताच्च' इत्युत्तरं पठितं प्रसङ्गादत्रोपन्यस्तम्। बहुव्रीहेरूधसो ङीष्' इत्यतो बहुव्रीहेरित्यनुवर्तते, 'संख्याव्ययादेर्ङीप्' इत्यतो ङीबिति च। प्रातिपदिकादित्यधिकृतम् अन इत्यनेन विशेष्यते, तदन्तविधिः। तदाह—अन्नन्तादित्यादिना। पक्षे डाब्ङीब्निषेधाविति। कदाचित् ङीब्निषेधः कदाचित् डाप् चेत्यर्थः। अन्यतरस्यांग्रहणस्य प्रयोजनमिदम्। अकृते त्वन्यतरस्यांग्रहणे बहुयज्वादिशब्दे अनुपधालोपिनि सावकाशस्य 'अनो बहुव्रीहेः' इति ङीप्प्रतिषेधस्य 'डाबुभाभ्याम्' इति डापश्च बहुराजन्शब्दादावुपधालोपिनि अनवकाशेन ङीपा बाधः स्यात्। बहुराज्ञीति। ङीपि अल्लोपे सोर्हल्ङ्यादिलोप इति भावः। बहुराजेति। डापि ङीब्निषेधे च सौ रूपम्। बहुराज्ञ्याविति। ङीप्पक्षे औङि यण्। बहुराजे इति। डाप्पक्षे औङि रूपम्। बहुराजानाविति। ङीब्निषेधे औङि रूपम्।

प्रत्ययस्थात्। ककारादिति। क् इति वर्णादित्यर्थः। अकार उच्चारणार्थः। 'वर्णात्कारः' इत्युक्तेः। एवञ्च सूत्रे कादित्यत्र अकार उच्चारणार्थ इति सूचितम्। स आबिति। इत्वविधौ यः परनिमित्तत्वेनोपात्तः स आबित्यर्थः। सुपः परो न चेदिति। सूत्रे

किम्। नौका। प्रत्ययस्थात् किम्। शक्नोतीति शका। असुपः किम्। बहुपरिव्राजका नगरी। कात् किम्। नन्दना। पूर्वस्य किम्। परस्य मा भूत्। कटुका। अत इति तपरः किम्। राका। आपि किम्। कारकः। 'मामकनरकयोरुपसंख्या-

असुपः इति पञ्चम्यन्तम् असमर्थसमासः। आपि सुपः परस्मिन् सति इत्त्वं न भवतीत्यर्थो विवक्षित इति भावः। सर्विकेति। सर्वशब्दाट्टापि सवर्णदीर्घे सर्वाशब्दः, एकादेशस्य पूर्वान्तत्वेन ग्रहणात् सर्वनामकार्यम्। ततश्च 'अव्ययसर्वनाम्नाम्' इति टेः प्रागकच्। तत्र ककारादकार उच्चारणार्थः। चकार इत्। अक् इति ककारान्तः प्रत्ययः टेः प्राग्भवति। सर्वकाशब्देऽस्मिन् ककारात्पूर्वस्य अत इत्त्वे सर्विकेति रूपम्। ननु ककारात्पूर्वस्य अकारस्य कथमित्त्वम्। ककारेण व्यवहिततया आप्परकत्वाभावादिति चेत, न—'येन नाव्यवधानम्' इति न्यायेन तद्व्यवधानस्य अबाधकत्वात्, कारिकेति। कृञो ण्वुल्, अकादेशः 'अचो ञ्णिति' इति ऋकारस्य वृद्धिः, रपरत्वं कारकशब्दात् टाप्, सवर्णदीर्घः, कात्पूर्वस्य रेफादकारस्य इत्त्वम्। कादिति संघातग्रहणे तु एतिका इति न सिध्यति। 'एतच्छब्दे टेः प्रागकचि एतकद्शब्दात्। जसि, त्यदाद्यत्वे, पररूपे, अदन्तत्वाट्टापि, कात्पूर्वस्य इत्वे, एतिका इति रूपम्। अत्राकचि अकारस्य उच्चारणार्थतया प्रत्ययस्थकशब्दाभावात् इत्त्वं न स्यात्, ककारादुत्तरावर्णस्याकजनवयवत्वात्। न चाकचि अकारस्य नोच्चारणार्थत्वमिति शङ्क्यम्, एवं सति निरित्यव्यये अकचि नकिर् इति न स्यात्। अतः कादित्यनेन ककारादित्येव विवक्षितम्। यका सकेत्यत्र 'न यासयोः' इति इत्त्वनिषेधाल्लिङ्गाच्च। अन्यथा तत्र प्रत्ययस्थककाराभावेन इत्त्वस्याप्राप्तेः किं तन्निषेधेनेत्यलम्।

नौकेति नौशब्दात् स्वार्थिकः कः, टाप्। अत्र ककारात् पूर्वस्य औकारस्य इत्त्वनिवृत्त्यर्थमत इति वचनम्। शकेति। 'शक्लृ शक्तौ' पचाद्यच्, टाप्। अत्र ककारस्य धात्ववयवस्य प्रत्ययस्थत्वाभावान्न ततः पूर्वस्य इत्त्वम्। बहुपरिव्राजकेति। परिपूर्वाद्व्रजेः ण्वुल्। बहवः परिव्राजकाः यस्यामिति बहुव्रीहिः। सुपो लुकि बहुपरिव्राजकशब्दात् टाप्। अत्राकारस्य कात्पूर्वस्य इत्त्वं न, प्रत्ययलक्षणेन आपः सुबपेक्षया परत्वात्। 'न लुमता' इति निषेधस्तु न, तस्य लुमता लुप्ते प्रत्यये यदङ्गं तस्य कार्य एव प्रवृत्तेः। इत्त्वं तु टाप्यनाङ्गकार्यमिति नात्र तन्निषेधः। यदि तु 'असुपः' इति पर्युदास आश्रीयेत, तर्हि बहुपरिव्राजक इति समुदायस्य सुब्भिन्नत्वादापः ततः परत्वादित्त्वं दुर्वारं स्यादिति भावः। पूर्वस्य किमिति। एकादेशे कृते परस्य ह्रस्वस्याभावात् पूर्वस्येत्यर्थसिद्धमिति प्रश्नः। कटुकेति। कटुशब्दात् स्वार्थे कः, टाप्, सवर्णदीर्घः। पूर्वस्येत्यनुक्तौ अत्र सवर्णदीर्घात् पूर्वं वार्णादाङ्गस्य बलीयस्त्वादपवादत्वाच्च द्वितीयककारादुत्तरस्य अकारस्य आपि परे इत्त्वं स्यादिति भावः। अत इति तपरः किम्—राका

नम्' इति (वा ४५२४)। मामिका। नरान्कायतीति नरिका। 'त्यक्त्यपोश्च' (वा ४५२५)। दाक्षिणात्यिका। इहत्यिका। (४६४) न यासयोः ७।३।४५॥ यत्तदोरस्येन्न स्यात्। यका। सका। यकाम्। तकाम्। 'त्यकनश्च निषेधः' (वा

---

इति। 'कृदाधारार्चिकलिभ्यः कः' इति राधातोः औणादिकः कप्रत्ययः। 'उणादयो बहुलम्' इति बहुलग्रहणात् 'केऽणः' इति ह्रस्वो न, ककारस्य च नेत्त्वम्। टाप्, स्त्रीत्वं लोकात्। 'कलाहीने सानुमतिः पूर्णे राका निशाकरे' इत्यमरः। अत्र ककारात् पूर्वस्य दीर्घाकारत्वान्नेत्त्वमिति भावः।

मामकेति। मामकनरकशब्दयोः कात्पूर्वस्य इत्त्वं वक्तव्यमित्यर्थः। मामिकेति। ममेयमिति विग्रहे 'युष्मदस्मदोरन्यतरस्यां खञ् च' इत्यणि, 'तवकममकावेकवचने' इति ममकादेशे आदिवृद्धिः, टाप् 'टिड्ढाणञ्' इत्यादिना ङीप्तु न, 'केवलमामक' इत्यादिना सञ्ज्ञाच्छन्दसोरेव मामकशब्दात् ङीब्नियमात्। ततश्चात्र ककारस्य प्रत्ययस्थत्वाभावात् 'प्रत्ययस्थात्' इत्यप्राप्तौ वचनमिदम्। नरानिति। कैशब्दे 'आदेच उपदेशे' इत्यात्वे 'आतोऽनुपसर्गे कः' इति कप्रत्यये 'आतो लोप इटि च' इति आलोपः उपपदसमासः, सुपो लुक्, टाप्। अत्रापि ककारस्य प्रत्ययस्थत्वाभावात् 'प्रत्ययस्थात्' इत्यप्राप्तौ वचनम्। त्यक्त्यपोश्चेति। त्यगन्ते त्यबन्ते च प्रत्ययस्थात्कात्पूर्वस्याकारस्य इत्त्वं वक्तव्यमित्यर्थः। 'उदीचामातः स्थाने' इति विकल्पस्यापवादः। दाक्षिणात्यिकेति। दक्षिणस्यां दिशि अदूरे इति। विग्रहे 'दक्षिणादाच्' इत्याच्, 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वम्। दक्षिणाशब्दात् भवाद्यर्थे 'दक्षिणापश्चात्पुरसस्त्यक्' इति त्यक्, 'किति च' इत्यादिवृद्धिः, दाक्षिणात्यशब्दात् टाप्। ततः स्वार्थिकः कः, 'केऽण' इति टापो ह्रस्वः, पुनष्टाप्, इत्त्वमिति भावः। 'दक्षिणस्यां दिशि भवेति विग्रहे दक्षिणाशब्दात् टाबन्तादेव त्यकन्' इति मतं तु प्रौढमनोरमायां दूषितम्। इहत्यिकेति। 'अव्ययात्त्यप्' इति त्यप्, टाप्, स्वार्थिकः कः 'केऽणः' इति ह्रस्वः, पुनः टाप्।

न यासयोः। नात्र कृतटापोः प्रथमान्तयोर्निर्देशः। यत्तदोरित्येव विवक्षितमिति भाष्ये स्पष्टम्। 'प्रत्ययस्थात्' इत्यतः अत इति इदिति चानुवर्तते। तदाह—यत्तदोरिति। यका। सका। इति। 'अव्ययसर्वनाम्नाम्' इति यत्तच्छब्दयोष्टेः प्रागकचि सौ त्यदाद्यत्वं, पररूपं, टाप्, हल्ङ्यादिना सुलोपः। तच्छब्दे 'तदोः सः सौ' इति तकारस्य सकारः। उभयत्रापि 'प्रत्ययस्थात्' इति प्राप्तमित्त्वमत्र सूत्रे निषिध्यते। अथ 'न यासयोः' इत्यस्य प्रथमान्तानुकरणत्वे किं बाधकमित्यत आह—यकाम्। तकामिति। त्यकनश्च निषेध इति। त्यकन्प्रत्ययान्तस्यापि 'प्रत्ययस्थात्' इति इत्त्वप्रतिषेधो वक्तव्य

४५२६ ) उपत्यका । अधित्यका । 'आशिषि वुनश्च न' ( वा ४५२८ )। जीवका । भवका । 'उत्तरपदलोपे न' ( वा ४५२९ )। देवदत्तिका—देवका । 'क्षिपकादीनां च न' ( वा ४५३० ) । क्षिपका । ध्रुवका । कन्यका । चटका । 'तारका ज्योतिषि' ( वा ४५३१ ) अन्यत्र तारिका । 'वर्णका तान्तवे' ( वा ४५३२ )

---

इत्यर्थः । उपत्यका अधित्यकेति । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्, टाप्, सोऽर्हल्ङ्यादिलोपः । 'उपत्यकाऽद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः । ननु त्यकन्विधौ अकारस्य उच्चारणसामर्थ्यादेव इत्त्वं न भवति । अन्यथा त्यिकनमेव विदध्यात् 'अतः किं तन्निषेधेनेति चेत्, मैवम् पञ्चोपत्यको ग्राम इत्यत्र अकारश्रवणार्थत्वादित्यलम् । आशिषीति । आशिषि यो वुन्, तस्य योऽयमकादेशः तदकारस्य 'प्रत्ययस्थात्' इति इत्त्वं नेति वक्तव्यमित्यर्थः । जीवका । भवकेति । जीवतात् भवतादित्यर्थः । जीवधातोः भूधातोश्च 'आशिषि च' इति वुन्, 'युवोरनाकौ' इति तस्य अकादेशः, 'सार्वधातुकार्धधातुकयोः' इति भूधातोरूकारस्य गुणः अवादेशश्च । उत्तरपदेति । उत्तरपदलोपेऽपि इत्त्वं नेति वक्तव्यमित्यर्थः । देवकेति । देवदत्तशब्दात् स्वार्थे कः । ठाजादावूर्ध्वं द्वितीयादचः' 'अनजादौ च विभाषा लोपो वक्तव्यः' इति दत्तशब्दलोपः । देवकशब्दात् । टाप् । देवदत्तिकेति तु दत्तपदस्य लोपाभिव्यक्तये उपन्यस्तम् । क्षिपकादीनां चेति । क्षिपकादिशब्दानामित्त्वं नेति वक्तव्यमित्यर्थः । क्षिपकादिगणं पठति—क्षिपकेति । क्षिप प्रेरणे । 'इगुपधज्ञाप्रीकिरः कः' । कित्वान्न लघूपधगुणः, क्षिपाशब्दात् स्वार्थे कः, 'केऽणः' इति ह्रस्वः, पुनष्टाप् । ध्रुवकेति । 'ध्रुव स्थैर्ये' कुटादिः, क्षिपकेतिवद्रूपम् । यद्वा 'ध्रु स्थैर्ये' पचाद्यच् 'गाङ्कुटादिभ्यः' इति ङित्त्वान्न गुणः, उवङ्, ध्रुवशब्दात् टाप्, ततः स्वार्थिकः कः, केऽणः' इति ह्रस्वः पुनष्टाप् । कन्यकेति । कन्याशब्दात् कः, 'केऽणः' इति ह्रस्वः, पुनष्टाप् । चटकेति । 'चट भेदने' । पचाद्यच्, टाप् स्वार्थे कः, 'केऽणः' इति ह्रस्वः, पुनष्टाप् । क्षिपकादिराकृतिगणः । तेन अलका इष्टका इत्यादि ।

तारका ज्योतिषीति । वार्तिकमिदम् । ज्योतिषि वाच्ये तारकेति भवति, इत्त्वं न भवतीति यावत् । 'तॄ प्लवनसन्तरणयोः' ण्वुल्, अकादेशः ऋकारस्य वृद्धिः रपरत्वम्, टाप् । ज्योतिरित्यनेन नक्षत्रम् अक्ष्णः कनीनिका च विवक्षिते । 'नक्षत्रमृक्षं भं तारं तारकाऽपि' इति 'तारकाऽक्ष्णः कनीनिका' इति चामरः । अन्यत्रेति । ज्योतिषोऽन्यत्र वाच्ये तारिकेत्येव भवतीत्यर्थः । वर्णका तान्तव इति । इदमपि वार्तिकम् । तान्तवे वाच्ये वर्णकेति भवति, इत्त्वं नेत्यर्थः । तन्तूनां विकारस्तान्तवम् । 'ओरञ्' । वर्णकेति प्रावरणविशेषः । 'वर्ण वर्णक्रियाविस्तारगुणवचनेषु' चुरादिः । ण्यन्तात् ण्वुल्,

अन्यत्र वर्णिका । 'वर्तका शकुनौ प्राचाम्' (वा ४५३३) । उदीचां तु वर्तिका । 'अष्टका पितृदेवत्ये' (वा ४५३४) । अष्टिकान्या । 'सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम्' (वा ४५३५) । इह वा अ इति छेदः । कात्पूर्वस्याकारादेशो वेत्यर्थः । तेन पुत्रिकाशब्दे ङीनः इवर्णस्य पक्षेऽकारः । अन्य-

अकादेशः, णिलोपः, टाप् । अन्यत्रेति । तान्तवादन्यत्र वर्णिकेति इत्वमित्यर्थः । वर्णिका स्तोत्रीत्यर्थः । वर्णिकेति ग्रन्थविशेषस्य संज्ञा वा । वर्तका शकुनौ प्राचामिति । इदमपि वार्तिकम् । शकुनिः पक्षी, तत्र गम्ये प्राचां मते वर्तकेति भवति इत्वं न भवतीत्यर्थः । प्राचां ग्रहणस्य प्रयोजनमाह—उदीचां त्विति । उदीचां मते तु शकुनौ गम्ये वर्तिकेति इत्वं भवतीत्यर्थः । वर्तयतेर्ण्वुल्, अकादेशः, णिलोपः, स्वार्थे कः, टाप् । 'कोयष्टिकटिट्टिभको वर्तको वर्तिकादयः' इत्यमरः । शकुनेरन्यत्र तु नित्यमेवेत्वम् । अष्टका पितृदेवत्ये इति । इदमपि वार्तिकम् । पितरश्च ता देवताश्च पितृदेवताः तदर्थं पितृदेवत्यम् । 'देवतान्तात् तादर्थ्ये यत्' इति यत् । पित्रर्थे कर्मणि वाच्ये अष्टकेति भवति 'प्रत्ययस्थात्' इति इत्वं नेत्यर्थः । अश्नन्ति पित्रर्थे ब्राह्मणाः यस्यामिति विग्रहे 'अश भोजने' इत्यस्मात 'इष्यशिभ्यां तकन्' इति तकन् प्रत्ययः, 'व्रश्च' आदिना शस्य षः, तकारस्य ष्टुत्वेन, टः, अष्टकशब्दात् टाप् । अष्टिकान्येति । अष्टौ अध्यायाः परिमाणमस्या अष्टिका पाणिनीयाष्टाध्यायी, 'संख्यायाः अतिशदन्तायाः कन्' इति सूत्रेण अष्टौ इति सुबन्तात् कन् प्रत्ययः, सुबन्तात्तद्धितोत्पत्तेः सिद्धान्तयिष्यमाणत्वात् । ततस्तद्धितान्तत्वेन प्रातिपदिकत्वात् 'सुपो धातुप्रातिपदिकयोः' इति जसो लुकि निमित्तापायात् अष्टन आत्वनिवृत्तौ, अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नकारलोपे, अष्टकशब्दात् टापि 'प्रत्ययस्थात्' इति इत्वं भवत्येव । न चान्तर्वर्तिसुपः परत्वं टापः शङ्क्यम्, ककारेण व्यवधानात् । असुपः इत्यस्य बहुपरिव्राजकानगरी इत्यत्र अव्यवहिते सुपः परे टापि चरितार्थत्वात् । अत एव 'क्षिपकादीनां न' इति निषेधोऽर्थवान् । अन्यथा क्षिपाशब्दात् । सुबन्तात् स्वार्थिके कप्रत्यये सुपो लुकि अन्तर्वर्तिनीं विभक्तिमाश्रित्य टापः सुबपेक्षया परत्वादसुपः इति निषेधसिद्धेः किं तेनेत्यलम् ।

'वा सूतकापुत्रिकावृन्दारकाणाम्' इति वार्तिकमर्थतः पठति—सूतकेति । अत्र पुत्रिकाशब्दः इकारमध्यः न त्वकारमध्यः, स्त्रियां पुत्रशब्दस्य शार्ङ्गरवादित्वेन ङीनन्तत्वादिति कैयटः । अत्रेत्वविकल्पभ्रमं वारयति—इह वा अ इति । सवर्णदीर्घे सति वा इति निर्देश इति भावः । अत्र अ इति लुप्तप्रथमाकं, कात्पूर्वस्येत्यनुवर्तते, अत इति निवृत्तम्, पुत्रिकाशब्दे अतोऽभावात् । तदाह—कात्पूर्वस्येति । नन्वत्र इत्वविकल्प एव कुतो न विधीयत इत्यत आह—तेनेति । अत्वविधानेनेत्यर्थः । पुत्रशब्दात्

त्रेत्वबाधनार्थमकारस्यैव पक्षेऽकारः। सूतिका—सूतका इत्यादि। ( ४६५ ) **उदीचामातः स्थाने यकपूर्वायाः ७।३।४६॥** यकपूर्वकस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्य कात्पूर्वस्येद्वा स्यादापि परे। 'केऽणः' (सू ८३४) इति ह्रस्वः। आर्यका—आर्यिका। चटकका—चटकिका। आतः किम्। साङ्काश्ये भवा

---

शार्ङ्गरवादित्वात् ङीनि, स्वार्थिके कप्रत्यये, 'केऽणः' इति ह्रस्वे, टापि, पुत्रिकाशब्दः। अत्र इकारस्य इत्त्वविकल्पविधौ पुत्रिका पुत्रीकेति इन्मध्यः ईन्मध्यश्च स्यात्। अत्वविधौ तु पुत्रका पुत्रिकेति अकारमध्यः इकारमध्यश्च भवतीति भावः। ननु सूतकाशब्दे बृन्दारकाशब्दे च कात्पूर्वस्याकारस्य अकारविधिः किमर्थमित्यत आह—अन्यत्रेति। सूतकाशब्दे बृन्दारकाशब्दे च 'प्रत्ययस्थात्' इति नित्यमित्वे प्राप्ते तद्विकल्पार्थमित्यर्थः। 'पूञ् प्राणिगर्भविमोचने' धात्वर्थेनोपसङ्ग्रहादकर्मकः। 'गत्यर्थाकर्मक' इत्यादिना कर्तरि क्तः, टाप्, स्वार्थिकः कः, 'केऽणः' इति ह्रस्वः, पुनष्टाप्। अत्राकारस्य अत्वाभावपक्षे 'प्रत्ययस्थात्' इति इत्वम्। बृन्दमस्यास्तीति मत्वर्थे 'शृङ्गबृन्दाभ्यामारकन्' इति आरकन्प्रत्ययः। अमरेण तावत् देवतावाची बृन्दारकशब्दः 'अमरा निर्जरा देवाः' इत्यादिना पुंल्लिङ्गेष्वनुक्रान्तः। रूपिवाची मुख्यवाची च त्रिलिङ्गः। 'त्रिपूत्तरे' इत्युपक्रम्य 'बृन्दारकौ रूपिमुख्यौ' इत्यमरः। स्त्रियां टाप्। अत्राप्यकारस्य अत्वाभावपक्षे इत्वम्।

उदीचामातः। 'प्रत्ययस्थात्' इति सूत्रमनुवर्तते। यश्च कश्च यकौ तौ पूर्वौ यस्या इति विग्रहः। यकेति वर्णग्रहणम्, अकारावुच्चारणार्थौ। यकपूर्वाया इत्येतत् आत इत्यस्य विशेषणम्। तेन अर्थगतं स्त्रीत्वमाकारे आरोप्य यकपूर्वाया इति स्त्रीलिङ्गनिर्देशः। तेन आकारस्य स्त्रीवाचकत्वं लभ्यते। तदाह—यकपूर्वस्येत्यादिना। उदीचां ग्रहणं विकल्पार्थमेव। न तु देशतो व्यवस्थार्थम्' इति 'न वेति विभाषा' इति सूत्रे भाष्ये स्पष्टम्। न च 'षष्ठी स्थानेयोगा' इत्येव सिद्धेरिह स्थानेग्रहणं व्यर्थमिति वाच्यम्, अनुवादे परिभाषाणामनुपस्थितेः। तत्र च इदमेव स्थानेग्रहणं ज्ञापकम्। अत एव 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इत्यत्र यस्यादिः वृद्धिरित्यनुवादे इक्परिभाषा न प्रवर्तते। तत्प्रवृत्तौ तु शालाशब्दस्य वृद्धसंज्ञा न स्यात्, शकारादाकारस्य इक्स्थानिकत्वाभावात्। ततश्च शालीय इति 'वृद्धाच्छः' इति छः न स्यात्, औपगवीय इत्यादावेव स्यादित्यलम्। केऽण इति ह्रस्व इति। आर्याशब्दात् स्वार्थिके कप्रत्यये यकाराकारस्य 'केऽणः' इति ह्रस्व इत्यर्थः। पुनष्टापि आर्यकाशब्दः। तत्र यकारादकारस्य आकारस्थानिकत्वादित्त्वविकल्पः। 'प्रत्ययस्थात्' इति नित्यस्य इत्त्वस्यापवादः। तदाह—आर्यका आर्यिकेति। यकारपूर्वस्य उदाहरणमिदम्। अथ ककारपूर्वस्य उदाहरति—चटकका चटकिकेति। चटकाशब्दात् स्वार्थे कः, 'केऽणः' इति

साङ्काशियका। यक इति किम्। अश्विका। स्त्रीप्रत्यय इति किम्। शुभं यातीति शुभंया। अज्ञाता शुभंया। शुभंयिका। 'धात्वन्तयकोस्तु नित्यम्' (वा ४५३६) सुनयिका। सुपाकिका। (४६६) **भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ७।३।४७॥** स्वेत्यन्तं लुप्तषष्ठीकं पदम्। एषामत इद्वा स्यात्।

ह्रस्वः, पुनष्टाप् इत्वविकल्प इति भावः। साङ्काशियकेति। सङ्काशेन निर्वृत्तं नगरं साङ्काश्यम्। 'वुञ्छणकठच्' इत्यादिना साङ्काशादिभ्यो ण्यः, आदिवृद्धिः, 'यस्येति च' इत्यकारलोपः। साङ्काश्यशब्दात् भवार्थे 'धन्वयोपधाद् वुञ्' अकादेशः, 'यस्येति च' इत्यकारलोपः' टाप्, 'प्रत्ययस्थात्' इति नित्यमित्वम्। इह यकारादकारस्य आकारस्थानिकत्वाभावादित्वविकल्पो न भवतीति भावः। ननु स्त्रीबोधकस्य अत इद्वा स्यादित्येवास्तु, आत इति मास्तु। साङ्काश्यकाशब्दे यकारादकारस्य वुञादेशावयवत्वेन स्त्रीबोधकत्वाभावादिति चेत्, तर्ह्यात इति स्पष्टार्थमित्याहुः।

अश्विकेति। अश्वाशब्दात् कः, 'केऽणः' इति ह्रस्वः, पुनष्टाप्, अश्वकाशब्दः। अत्र अकारस्य आकारस्थानिकत्वेऽपि यकपूर्वकत्वाभावादित्वविकल्पो न, किन्तु 'प्रत्ययस्थात्' इति नित्यमित्वमिति भावः। स्त्रीप्रत्यय इति किमिति। यकपूर्वाया इति स्त्रीलिङ्गनिर्देशलब्धं स्त्रीप्रत्ययस्येति किमर्थमिति प्रश्नः। शुभंयिकेति। शुभमिति मान्तमव्ययम्। तस्मिन्नुपपदे 'या प्रापणे' इति धातोः 'अन्येभ्योऽपि दृश्यते' इति विच् शुभंयाशब्दात् स्वार्थे कः 'केऽणः' इति ह्रस्वः, टाप्, शुभंयकाशब्दः। अत्र यकारादकारस्य धात्ववयवस्य स्त्रीवाचकत्वाभावादित्वविकल्पो न, किन्तु 'प्रत्ययस्थात्' इति नित्यमेवेत्वमिति भावः। 'यकपूर्वे धात्वन्तप्रतिषेधः' इति वार्तिकमर्थतः संगृह्णाति—धात्वन्तयकोस्तु नित्यमिति। यश्च कश्चेति विग्रहः। धात्वन्तयकारककारयोः परि विद्यमानस्य अकारस्य नित्यमित्वम्, न तु विकल्प इत्यर्थः। सुनयिकेति। णीञ् धातोः पचाद्यच्। 'सार्वधातुकार्धधातुकयोः' इति गुणे अयादेशे नयशब्दः। सु शोभनः नयः यस्याः सा सुनया ततः स्वार्थे कः, 'केऽणः' इति ह्रस्वः पुनष्टाप्, सुनयकाशब्दः। अत्र यकारस्य धात्वन्तत्वात् ततः परस्याकारस्य नेत्वविकल्पः, किन्तु 'प्रत्ययस्थात्' इति नित्यमित्वमिति भावः। सुपाकिकेति। पच धातोर्घञि 'चजोः कु घिण्ण्यतोः' इति चकारस्य कुत्वे उपधावृद्धौ पाकशब्दः। सु शोभनः पाको यस्याः सा सुपाका। स्वार्थे कः। 'केऽणः' इति ह्रस्वः, पुनष्टाप्, सुपाककाशब्दः। अत्र ककारस्य धात्वन्तत्वात् ततः परस्याकारस्य नेत्वविकल्पः, किन्तु 'प्रत्ययस्थात्' इति नित्यमित्वमिति भावः।

भस्त्रैषा। यकपूर्वत्वाभावात् 'उदीचाम्' इत्यप्राप्तौ वचनमिदम्। स्वेत्यन्तमिति। भस्त्रा, एषा, अजा, ज्ञा द्वा, स्वा एषां षण्णां द्वन्द्वः ततः षष्ठ्या आर्षो लुक्।

तदन्तविधिनैव सिद्धे नञ्पूर्वाणामपीति स्पष्टार्थम् । भस्त्राग्रहणमुपसर्जनार्थम् । अन्यस्य तूत्तरसूत्रेण सिद्धम्। एषा द्वा एतयोस्तु सपूर्वयोर्नेत्वम्। अन्तर्वर्तिनीं

भस्त्रैषाजाज्ञाद्वास्वानामिति विवक्षितमिति भावः। एषामिति । भस्त्रादीनामित्यर्थः। अत इद्वेति । पूर्वसूत्रादुदीचां ग्रहणस्य 'प्रत्ययस्थात्' इति सूत्रात् इदित्यस्य चानुवृत्तेरिति भावः। नञ्वाङ्गत्वात्तदन्तविधौ भस्त्रादिशब्दान्तानामिति लभ्यते, व्यपदेशिवत्त्वेन केवलानामपि लभ्यते। एवं च नञ्पूर्वाणां तद्भिन्नपूर्वाणां केवलानां च सिद्धे नञ्पूर्वाणामपीति व्यर्थमित्यत आह—तदन्तविधिनैवेति। ननु तदन्तविधिना भस्त्रादिशब्दानां नञ्पूर्वाणामनञ्पूर्वाणां च प्राप्तौ, नञ्पूर्वाणामेवेति नियमार्थं नञ्पूर्वग्रहणम्। तथा सति केवलानां भस्त्रादिशब्दानां ग्रहणव्यावृत्तिः स्यादित्यपिशब्द इति व्याख्यातुमुचितमिति चेत्, न। एवं सति निर्भस्त्रिकेत्याद्यसिद्धेः। तस्मात् नञ्पूर्वाणामिति स्पष्टार्थमेवेति भाष्ये स्पष्टम्। ननु भस्त्राशब्दस्य नित्यस्त्रीलिङ्गतया 'अभाषितपुंस्काच्च' इत्युत्तरसूत्रेणैव इत्त्वविकल्पसिद्धेरिह भस्त्राग्रहणं व्यर्थमित्यत आह—भस्त्राग्रहणमुपसर्जनार्थमिति। निर्भस्त्रिका इत्युपसर्जनत्वे त्रिलिङ्गतया भाषितपुंस्कत्वेन तत्र 'अभाषितपुंस्काच्च' इत्यस्य अप्रवृत्तेरिति भावः। अन्यस्य त्विति। उपसर्जनादन्यस्य भस्त्राशब्दस्य तु भस्त्रिका परमभस्त्रिकेत्यत्र नित्यस्त्रीलिङ्गतया 'अभाषितपुंस्काच्च' इत्युत्तरसूत्रेणैव पाक्षिकमित्त्वं सिद्धम्। अतः 'भस्त्रैषा' इत्यत्र भस्त्राग्रहणं तदर्थं न भवतीत्यर्थः।

ननु अनेषका, परमैषका, अद्वके, परमद्वके इत्यत्रापि पाक्षिकमेतदित्त्वं स्यादित्यत आह—एषा द्वेति। एषा द्वा एतयोस्तु पूर्वपदसहितयोरिदं पाक्षिकमित्त्वं नेत्यर्थः। कुत इत्यत आह—अन्तर्वर्तिनीमिति । 'इदाप्यसुपः' इत्यनुवर्तते । इह तु टाप् सुपः पर इति भावः। ननु टावत्र सुपः परो न भवति। तथाहि—एतच्छब्दस्य टेः प्राक् 'अव्ययसर्वनाम्नाम्' इत्यकचि, एतकद्शब्दात् सौ 'तदोः सः सौ' इति तकारस्य सत्वे, 'आदेशप्रत्यययोः' इति षत्वे, त्यदाद्यत्वे, पररूपे, स्त्रियामदन्तत्वात् टापि, सवर्णदीर्घे, हल्ङ्यादिलोपे, एषकेति रूपम्। ततः न एषकेति विग्रहे नञ्तत्पुरुषे कृते, 'नलोपो नञः' इति नञो नकारस्य 'लोपे, 'तस्मान्नुडचि' इति नुटि, अनेषकेतिरूपम्। तथा परमा एषकेति कर्मधारये, परमैषकेति रूपम्। अत्र सौ परे प्रवृत्तत्यदाद्यत्वसिद्धमदन्तत्वमाश्रित्य प्रवृत्तष्टाप् कथं सुपः परः स्यात्। न च नञ्तत्पुरुषे सोः सामासिके लुकि सति, सत्वत्यदाद्यत्वटाब्निवृत्तौ, समासात् पुनः सौ, सत्वत्यदाद्यत्वटाप्सु कृतेषु, हल्ङ्यादिलोपे, अनेषकेत्यत्र समासात् प्राक् प्रवृत्तात् सुपः पर एव टाबिति वाच्यम्, सामासिकलुगपेक्षया हल्ङ्यादिलोपस्यैवान्तरङ्गत्वात् प्रवृत्तेः। ततश्च लुप्तेऽपि सौ प्रत्ययलक्षणसत्त्वेन निमित्तानपायात् पूर्वप्रवृत्तसत्वत्यदाद्यत्वटापां निवृ-

विभक्तिमाश्रित्य 'असुपः' इति प्रतिषेधात्। अनेषका। परमैषका। अद्धके। परमद्धके। स्वशब्दग्रहणं संज्ञोपसर्जनार्थम्। इह हि 'आतः स्थाने' इत्यनुवृत्तं स्वशब्दस्यातो

---

त्तिर्नास्ति। स च टाप् न सुपः पर इति चेत्, अत्र ब्रूमः—अन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाध्यते' इति परिभाषया 'सुपो धातुप्रातिपदिकयोः' इति सुब्लुग्विषये अन्तरङ्गोऽपि हल्ङ्यादिलोपो न प्रवर्तते। अतः राजकुमारीत्यादौ श्रूयमाणे एव सुपि समासः प्रवर्तते। एवं च गोमान् प्रियो यस्य सः गोमत्प्रियः इत्यत्र गोमच्छब्दात् सोर्लुका लुप्तत्वात् 'उगिदचाम्' इति नुमुपधादीर्घादिकं न इति 'प्रत्ययोत्तरपदयोश्चे'ति सूत्रभाष्ये स्थितम्। 'कृत्तद्धित' इति सूत्रे प्रौढमनोरमायां परिष्कृतमेतत्। एवञ्च नञ् सु एतकद् सु इति स्थिते, नञ्तत्पुरुषे कृते, 'अन्तरङ्गानपि' इति' न्यायेन त्यदाद्यत्वप्रवृत्तेः प्रागेव सामासिकलुकि, अनेतकद्शब्दात् समासात्पुनः सौ, सत्वे, त्यदाद्यत्वे पररूपे, टापि, सवर्णदीर्घे, सोर्हल्ङ्यादिलोपे, अनेषकेति भवति। अत्र सवर्णदीर्घप्रवृत्तेः प्राक्समासात्पूर्वोत्पन्नसुपः पर एव टाप् भवतीत्यास्तां तावत्। अद्धके इति। न सु द्धकि औ इति स्थिते, नञ्तत्पुरुषे 'अन्तरङ्गानपि' इति न्यायेन त्यदाद्यत्वप्रवृत्तेः प्रागेव समासे औङो लुकि कृते, अद्धकिशब्दात् समासात्पुनरौङि, त्यदाद्यत्वे पररूपे, टापि, औङश्शीभावे, आद्गुणे, अद्धके इति भवति। अत्रापि समासात्पूर्वोत्पन्नादौङः सुपः पर एव टाबिति भावः। एवं परमद्धके इत्यत्रापि।

स्यादेतत्—आत्मात्मीयज्ञातिधनवाची स्वशब्दः। तत्र ज्ञातावात्मनि च पुंल्लिङ्ग एव, आत्मीये तु विशेष्यनिघ्नः स्त्रीलिङ्गः। धने तु पुंनपुंसकलिङ्गः, 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने।' इति कोशात् यदा तु स्त्रीव्यक्तिविशेषस्य स्वशब्दः संज्ञा, तदापि स्त्रीलिङ्गः। तत्र 'स्वमज्ञातिधनाख्यायाम्' इत्युक्तेः ज्ञातिधनवाचित्वे सर्वनामत्वं नास्ति। आत्मात्मीयवाचिन एव सर्वनामता, साप्यनुपसर्जनस्यैव भवति, 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इत्युक्तेरिति स्थितिः। तत्रात्मीयायां वाच्यायां सर्वनामत्वात् अकचि, टापि, 'प्रत्ययस्थात्' इति नित्यमित्त्वे, स्विकेत्येवेष्यते। तत्तु न युज्यते। 'भस्त्रैषा' इत्यादिना इत्त्वविकल्पस्य दुर्वारत्वात्। न चात्र अकजकारस्य आत्स्थानिकत्वाभावान्नायमित्त्वविकल्प इति वाच्यम्, एषामत इद्वा स्यादिति विवरणवाक्ये आतः स्थाने इत्यनुवृत्तेरदर्शनादित्यत आह—स्वशब्दग्रहणं संज्ञोपसर्जनार्थमिति। स्वशब्दस्य संज्ञाभूतस्य सर्वनामत्वाभावादकजभावे, स्त्रियां टापि, सौ कृते, स्वार्थिककप्रत्यये, उक्तरीत्या 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाधते' इति परिभाषया हल्ङ्यादिलोपं बाधित्वा प्रातिपदिकावयवत्वात् सोर्लुकि, 'केऽणः' इति ह्रस्वे, कप्रत्ययान्तात् पुनष्टापि, स्वकाशब्दः। निर्गता

विशेषणम्। न तु द्वैषयोरसम्भवात्। नाप्यन्येषाम्, अव्यभिचारात्। स्वशब्द-स्त्वनुपसर्जनमात्मीयवाची अकजर्हः। अर्थान्तरे तु न स्त्री। संज्ञोपसर्जनीभूतस्तु

---

स्वस्या इति विग्रहे 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासे सुब्लुकि, 'गोस्त्रियोः' इति ह्रस्वे, टापि, सुपि, स्वार्थिके कप्रत्यये, 'केऽणः' इति ह्रस्वे, पुनष्टापि निस्वकाशब्दः। एतद्द्वयमेव 'भस्त्रैषा' इति स्वशब्दस्य उदाहरणम्। आत्मीयायां तु स्वशब्दो न संज्ञाभूतः, नाप्युपसर्जनीभूत इति नोदाहरणमित्यर्थः। कुत इत्यत आह—इह हीति। इह 'भस्त्रैषा' इति सूत्रे 'उदीचाम्' इति पूर्वसूत्रात् आतः स्थाने इत्यनुवृत्तम्, तच्च स्वशब्दस्यैव अतो विशेषणम्। एवं च स्वशब्दस्य आत्स्थानिकस्य अत इद्वा स्यादिति लभ्यते। एतद्विशेषविवक्षयैव एषामत इद्वा स्यादिति विवरणवाक्ये आतः स्थाने इत्यस्यानुवृत्तिर्न प्रदर्शितेति भावः। न तु द्वैषयोरिति। द्वा एषा इत्येतयोस्तु विषये आतः स्थान इति न सम्बध्यत इत्यर्थः। कुत इत्यत आह—असम्भवादिति। एषा द्वेति सर्वाद्यन्तर्गणत्यदादित्वप्रयुक्तसत्वात्वनिर्देशेन सर्वनामत्वावश्यकत्वादकच्। तदकारस्य आत्स्थानिकत्वस्याप्रसक्तेरित्यर्थः। नाप्यन्येषामिति। भस्त्राजाज्ञाशब्दानामपि आतः स्थान इति विशेषणं नेत्यर्थः। कुत इत्यत आह—अव्यभिचारादिति। भस्त्राजाज्ञाशब्दानां सर्वनामत्वाभावेनाकजनर्हतया। कप्रत्ययान्ततया तेषु 'केऽणः' इति ह्रस्वसम्पन्नस्य अतः आत्स्थानिकत्वनियमेन तद्विशेषणवैयर्थ्यादित्यर्थः।

ननु आतः स्थाने इत्यनुवृत्तम् स्वशब्दस्य अतो विशेषणमस्तु, तावता आत्मीयायां स्विका इत्यत्र इत्त्वविकल्पशङ्कायाः किमायातमित्यत आह—स्वशब्दस्त्विति। अनुपसर्जनात्मीयवाची स्वशब्दस्तु सर्वनामत्वादकजर्हः। अतस्तदकारस्य आत्स्थानिकत्वाभावान्न प्रकृतसूत्रेणेत्त्वविकल्पशङ्का किन्तु 'प्रत्ययस्थात्' इति नित्यमेव इत्त्वमित्यर्थः। ननु स्वशब्दस्य आत्मात्मीयज्ञातिधनवाचिनः आत्मीयायामुदाहरणत्वाभावेऽपि आत्मज्ञातिधनवाचिनस्तस्य उदाहरणत्वसम्भवात् स्वशब्दग्रहणं संज्ञोपसर्जनार्थमित्यनुपपन्नमित्यत आह—अर्थान्तरे तु न स्त्री इति। आत्मज्ञातिधनेषु स्वशब्दो न स्त्रीलिङ्गः। उदाहृतकोशरीत्या आत्मज्ञातिवाचिनः स्वशब्दस्य नित्यपुँल्लिङ्गत्वात् धनवाचिनस्तस्य पुंनपुंसकलिङ्गत्वाच्चेत्यर्थः। तथा च टापि परे इत्यस्याभावान्नोदाहरणत्वप्रसक्तिः। 'प्रत्ययस्थात्' इत्यतः आपीत्यनुवृत्तेरिति भावः। इदमुपलक्षणम्। आत्मनि वाच्ये, स्वशब्दस्य सर्वनामत्वेन अकजर्हतया तदकारस्य आत्स्थानिकत्वाभावाच्चेत्यपि द्रष्टव्यम्। ननु सञ्ज्ञोपसर्जनीभूतस्यापि स्वशब्दस्य कथमुदाहरणत्वम्? तस्याप्यकचि तदकारस्य आत्स्थानिकत्वाभावादित्यत आह—संज्ञोपसर्जनीभूतस्त्विति। सञ्ज्ञोपसर्जनीभूतस्य स्वशब्दस्य असर्वनामतया अकजनर्ह-

कप्रत्ययान्तत्वात्प्रत्युदाहरणम् । एवं चात्मीयायां स्विका । परमस्त्रिकेति नित्यमेवेत्वम्, निर्भस्त्रका-निर्भस्त्रिका । एषका-एषिका । कृतषत्वनिर्देशान्नेह विकल्पः, एतिके-एतिकाः । अजका-अजिका । ज्ञका-ज्ञिका । द्वके-द्विके । निःस्वका निःस्विका । ( ४६७ ) अभाषितपुंस्काच्च ७।३।४८॥ एतस्माद्विहितस्य आतः

---

त्वेन स्वशब्दात् सुबन्तात् स्वार्थिके कप्रत्यये, सुब्लुकि पुनष्टापि' 'केऽणः' इति ह्रस्वापन्नस्य अतः आत्स्थानिकतया भवत्युदाहरणत्वमित्यर्थः । न चान्तर्वर्तिसुपः परष्टाविति शङ्क्यम्, केन व्यवधानादिति भावः । तदेवम् 'भस्त्रैषा' इत्यत्र आतः स्थाने इत्यनुवृत्तस्य स्वशब्देऽन्वयलाभात् स्वशब्दावयवस्य आत्स्थानिकस्य अत इद्वा स्यादिति लब्धम्, तस्य प्रयोजनमाह—एवं चेति । उक्तरीत्या स्वशब्दे आत्स्थानिकस्यैवातः इत्त्वविकल्पलाभात् आत्मीयायां स्वशब्दस्य सर्वनामत्वादकचि तदाकारस्य आत्स्थानिकत्वाभावादित्त्वविकल्पाप्रवृत्तौ 'प्रत्ययस्थात्' इति नित्यमेवेत्त्वमित्यर्थः ।

तदेवं प्रत्युदाहरणान्युक्त्वा उदाहरणान्याह—निर्भस्त्रकेत्यादि । भस्त्राया निष्क्रान्तेति विग्रहे 'निरादयः क्रान्ताद्यर्थे' इति समासे, 'गोस्त्रियोः' इति ह्रस्वत्वे, पुनष्टापि, समासात् सौ, कप्रत्यये, 'केऽणः' इति ह्रस्वे, निर्भस्त्रकशब्दात् पुनष्टापि, सवर्णदीर्घे, निर्भस्त्रकाशब्दः । तत्र 'प्रत्ययस्थात्' इति नित्यमित्त्वे प्राप्ते अनेन इत्त्वविकल्पे निर्भस्त्रिका निर्भस्त्रकेति रूपद्वयम् । केन व्यवधानान्न सुपः परष्टाबिति भावः । एषका एषिकेति । अकचि एतकद्शब्दात् सुः । 'तदोः सः सौ' इति सत्वम्, षत्वम्, त्यदाद्यत्वम्, पररूपम्, टाप्, 'प्रत्ययस्थात्' इति नित्यमित्त्वं बाधित्वा इत्त्वविकल्प इति भावः । ननु अकचि एतकद्शब्दात् स्त्रियामौजसादिषु एतिके एतिकाः इत्यादौ नित्यमित्त्वमिष्यते । तद्बाधित्वा अनेन इत्त्वविकल्पः स्यादित्यत आह—कृतषत्वेति । 'भस्त्रैतज्ज्ञास्वा' इति वक्तव्ये एषेति कृतषत्वनिर्देशात् औजसादिषु षत्वाभावान्नेत्त्वविकल्प इत्यर्थः । अजका अजिकेति । अजाशब्दात् कः, ह्रस्वः, पुनष्टाप्, सवर्णदीर्घः इत्त्वविकल्पः । ज्ञका ज्ञिकेति । ज्ञाधातोः 'इगुपधज्ञाप्रीकिरः कः' इति कः, 'आतो लोप इटि च' इत्यालोपः । स्त्रियामदन्तत्वाट्टाप्, सवर्णदीर्घः । ज्ञाशब्दात् सुबन्तात् कः सुब्लुक्, 'केऽणः' इति ह्रस्वः, पुनष्टाप्, सवर्णदीर्घः, इत्त्वविकल्प इति भावः । द्वके द्विक इति । अकचि द्वकिशब्दात् स्त्रियामौङि, त्यदाद्यत्वम्, पररूपम्, टाप्, इत्त्वविकल्पः, औङश्शी, आद्गुणः । निःस्वका निःस्विकेति । स्वस्याः निष्क्रान्तेति विग्रहः । 'निरादयः' इति समासः । उपसर्जनह्रस्वः, टाप्, सुपि कः सुब्लुक्, कप्रत्ययान्तात् पुनष्टापि सवर्णदीर्घः' इत्त्वविकल्प इति भावः ।

अभाषितपुंस्काच्च । 'उदीचामातः स्थाने' इत्यनुवर्तते, अत इदिति च । अभा-

स्थाने अत इद्वा स्यात्। गङ्गका-गङ्गिका। बहुव्रीहेर्भाषितपुंस्कत्वात्ततो विहितस्य नित्यम्। अज्ञाता अखट्वा अखट्विका। शैषिके कपि तु विकल्प एव। ( ४६८ ) **आदाचार्याणाम् ७।३।४६॥** पूर्वसूत्रविषये आद्वा स्यात्। गङ्गाका। उक्त पुंस्कात्तु शुभ्रिका। (४६९) **अनुपसर्जनात् ४।१।१४॥** अधिकारोऽयम् 'यूनस्तिः'

---

षितः पुमान् येनेति विग्रहः। विहितस्येत्यध्याहार्यम्। तदाह—एतस्मादिति। अभाषितपुंस्कादित्यर्थः। अयकपूर्वार्थं वचनम्। गङ्गका गङ्गिकेति। गङ्गाशब्दात् कः। 'केऽणः' इति ह्रस्वः, इत्वविकल्पः। विहितविशेषणस्य फलमाह—बहुव्रीहेरिति। अविद्यमाना खट्वा यस्या इति विग्रहे 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः' इति बहुव्रीहौ कृते, विद्यमानपदलोपे नञो नलोपे, 'शेषाद्विभाषा' इति कबभावपक्षे, 'गोस्त्रियोः' इति ह्रस्वे अखट्वशब्दात् टापि, सुपि, अज्ञातादौ के, सुब्लुकि, 'केऽणः' इति ह्रस्वे, पुनष्टापि अभाषितपुंस्काद्विहितस्य आतः स्थाने अतः अभावान्नेत्वविकल्पः। किन्तु 'प्रत्ययस्थात्' इति नित्यमित्वमित्यर्थः। अभाषितपुंस्कात् परस्येति व्याख्याने तु तादृशखट्वशब्दात् परस्य आतः स्थाने अतः सत्त्वादित्वविकल्पः स्यादिति भावः। शैषिके कपि त्विति। न सु खट्वा सु इत्यवस्थायां कपि सुब्लुक्। प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात्। 'नञोऽस्त्यर्थानाम्' इति बहुव्रीहिसमासः। समासान्त इत्यन्वर्थसञ्ज्ञाबलात् कबन्तस्यैव समासत्वम्। ततश्च अखट्वाकशब्दे अखट्वा इत्यंशस्य उपसर्जनस्त्रीप्रत्ययान्तसमासरूपप्रातिपदिकत्वाभावात् 'गोस्त्रियोः' इति ह्रस्वो न भवति। नापि 'केऽणः' इति ह्रस्वः, 'न कपि' इति निषेधात्। किन्तु 'आपोऽन्यतरस्याम्' इति ह्रस्वविकल्पः। तत्र खट्वाशब्दात् विहितस्य कपः प्राग्वर्तिनः टापः अभाषितपुंस्काद्विहितत्वेन तत्स्थानिकह्रस्वाकारस्य अयम् इत्वविकल्पो भवत्येवेत्यर्थः। 'आपोऽन्यतरस्याम्' इति ह्रस्वाभावपक्षे तु अखट्वाकेत्येव बोध्यम्। आदाचार्याणाम्। पूर्वसूत्रविषय इति। अभाषितपुंस्काद्विहितस्यातः स्थाने अत इत्यर्थः। शुभ्रिकेति। शुभ्रशब्दो विशेष्यनिघ्नः अनियतलिङ्गः। ततः स्त्रियां टापि शुभ्राशब्दात् कः। 'केऽणः' इति ह्रस्वः, पुनष्टाप्। अत्र कात्पूर्ववर्तिनष्टापः अभाषितपुंस्काद्विहितत्वाभावात् तत्स्थानिकस्यातो नेत्वविकल्पः। किं तु 'प्रत्ययस्थात्' इति नित्यमित्वमित्यर्थः।

अनुपसर्जनादित्यधिकारस्य उत्तरावधिमाह—यूनस्तिरित्यभिव्याप्येति। 'यूनस्तिः' इत्यत्राप्ययमधिकारः न तु ततः प्रागित्यर्थः। अत्र च व्याख्यानमेव शरणम्। अत्र यद्वक्तव्यं तत् 'यूनस्तिः' इत्यत्र वक्ष्यते। ननु बहवः कुरुचराः यस्यां सा बहुकुरुचरा, नदमतिक्रान्ता अतिनदा, इत्यादिषु उपसर्जनेषु कुरुचरनदादिशब्देभ्यः 'टिड्ढाणञ्'

( सू ५३१ ) इत्यभिव्याप्य । अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति ।

( ४७० ) टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ४।१।१५॥ अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप् स्यात् । कुरुचरी । नदट्–नदी । उपसर्जनत्वान्नेह । बहुकुरुचरा । वक्ष्यमाणेत्यत्र टित्वादुगि-

इत्यादिना विधीयमानानां ङीबादिप्रत्ययानां प्रसक्तिरेव नास्ति, समासप्रत्ययविधौ तदन्तविधिप्रतिषेधात् । तस्मादनुपसर्जनाधिकारो व्यर्थ इत्यत आह—अयमेवेति । अनुपसर्जनादित्यधिकार एवायं स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयतीत्यर्थः । एतच्च भाष्ये स्पष्टम् । तत्फलं तु 'वनो र च' इत्यत्र वन्नन्तान्तलाभ इत्यादि ज्ञेयम् । ननु स्त्रीप्रत्ययेषु तदन्तविध्यभावेऽपि नद इवाचरति नदा स्त्री इत्यादिषु आचारक्विबन्त-प्रकृतिककर्तृक्विबन्तेषु ङीबादिनिवृत्तये अनुपसर्जनाधिकारस्यावश्यकत्वात् कथं तस्य स्त्रीप्रत्ययविधिषु तदन्तविधिज्ञापकतेति चेत्, न—अनुपसर्जनाधिकारस्य स्त्रीप्रत्ययविधिषु तदन्तविधिज्ञापनार्थत्वपरभाष्यप्रामाण्येन स्त्रियामाचारक्विबन्तप्रकृतिक-कर्तृक्विबन्तानामनभिधानोन्नयनादित्यलम् ।

टिड्ढाणञ् । टित्, ढ, अण्, अञ्, द्वयसच्, दघ्नच्, मात्रच्, तयप्, ठक्, ठञ्, कञ्, क्वरप्, एषां द्वादशानां समाहारद्वन्द्वात् पञ्चम्येकवचनम् । ढादयः एकादश प्रत्ययाः । प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् । टित्तु प्रत्ययः अप्रत्ययश्च । टिदादिभिश्च प्रातिपदिकादित्यधिकृतं विशेष्यते, विशेषणत्वात् तदन्तविधिः । ततश्च टिदन्तात् ढाणादिप्रत्ययान्तान्ताच्च प्रातिपदिकादिति लभ्यते । 'अजाद्यतष्टाप्' इत्यस्मादतः इत्यनुवृत्तम्, तेनापि प्रातिपदिकं विशेष्यते । तदन्तविधिः । 'अनुपसर्जनात्' इत्येतत् श्रुतेषु टिदादिष्वेवान्वेति, न तु तदन्तेषु । स्त्रियामित्यधिकृतम् । तदाह—अनुपसर्जनं यट्टिदादीत्यादिना । तदन्तमिति । टिदन्तं ढादिप्रत्ययान्तं चेत्यर्थः । टित् त्रिविधः । प्रत्ययः, प्रातिपदिकम्, धातुश्च । तत्राद्यमुदाहरति—कुरुचरीति । कुरुषु चरतीति अधिकरणे उपपदे 'चरेष्ट' इति कर्तरि टः । टकार इत् । उपपदसमासः । न च प्रत्ययस्यैवात्र टित्वात् प्रत्ययग्रहणपरिभाषया चरेत्येव टिदन्तम्, न तु कुरुचरशब्दः, तदादिनियमादिति वाच्यम्, नदट् देवट् इत्यादेरप्रत्ययस्यापि टितः सत्त्वेन तत्र प्रत्ययग्रहणपरिभाषाया अप्रवृत्तौ 'येन विधिः' इति टिदन्तत्वस्य कुरुचरशब्दे सत्त्वात् । अथ द्वितीयं टितमुदाहरति—नदडिति । पचादिगणे पठितं प्रातिपदिकमेतत् । तृतीयं तु कृदन्ते स्तनन्धयीत्युदाहरिष्यते । अनुपसर्जनत्वविशेषणस्य प्रयोजनमाह—उपसर्जनत्वान्नेहेति बहुकुरुचरेति । बहवः कुरुचराः यस्यामिति विग्रहः । बहुव्रीहिरयमन्यपदार्थप्रधानः । ततश्च टितः टप्रत्ययस्य उपसर्जनत्वान्न ङीप् । अनुपसर्जनत्वस्य प्रातिपदिकविशेषणत्वे तु ङीवत्र दुर्वारः । अत एव च आपिशलिना

त्वाच्च ङीप्प्राप्तः । यासुटो ङित्वेन 'लाश्रयमनुबन्धकार्यं नादेशानाम्' ( प ७० )

प्रोक्तमधीते आपिशला ब्राह्मणीत्यत्रापि न ङीप् । तत्र हि आपिशलिना प्रोक्तमित्यर्थे 'तेन प्रोक्तम्' इत्यणि आपिशलशब्दः । आपिशलमधीते इत्यर्थे 'तदधीते तद्वेद' इत्यणि 'प्रोक्ताल्लुक्' इति लुप्ते स्त्रियामदन्तत्वाट्टापि आपिशलेति रूपम् । अनुपसर्जनादित्यस्य प्रातिपदिकविशेषणत्वे प्रोक्ताणन्तस्यानुपसर्जनत्वात् स्त्रियां वर्तमानत्वाच्च अणन्तत्वनिबन्धनो ङीप् दुर्वारः स्यात् । तस्य च श्रुतटिदाद्यन्वये तु प्रोक्ताणः उपसर्जनत्वान्न दोषः । अध्येत्रण् तु लुप्तः, अणो योऽकारः इति व्याख्यानेन वर्णाश्रयतया प्रत्ययलक्षणाभावात् । न च 'स्त्रियाम्' इत्यस्य श्रुतटिदादिविशेषणत्वात् प्रोक्ताणश्च स्त्रियामवर्तनादेव न ङीपः प्रसक्तिरिति वाच्यम्, ज्ञापिते तदन्तविधौ प्राधान्यात् 'स्त्रियाम्' इत्यस्य ङीप्प्रकृतिविशेषणताया एव उचितत्वात्, अन्यथा अनुपसर्जनाधिकारवैयर्थ्याच्च । अत एव धीवानमतिक्रान्ता अतिधीवरीत्यादि सिद्धमित्यलम् ।

स्यादेतत्—'वच परिभाषणे' । अस्मात् कर्मणि 'लृट्', 'लृटः सद्वा' इति तस्य शानजादेशः, 'स्यतासी लृलुटोः' इति स्यः, कुत्वषत्वे, आने मुक्, णत्वम्, टाप्, वक्ष्यमाणेति रूपम् । अत्र लृडादेशस्य स्थानिवत्त्वेन टित्वादुगित्वाच्च 'टिड्ढाणञ्' इति 'उगितश्च' इति च ङीप् प्राप्नोति । न च स्थानिनो लृटष्टकारस्य ऋकारस्य च इत्त्वाश्रयणात् ङीब्विधेरल्विधित्वादनल्विधाविति निषेधः शङ्क्यः, घुमास्थागापाजहातिसां हलि' इति क्ङिति विहितस्य ईत्वस्य 'न ल्यपि' इति निषेधेन लिङ्गेन अनुबन्धकार्ये अनल्विधाविति निषेधाभावज्ञापनात् । अनुबन्धकार्येऽप्यनल्विधाविति निषेधप्रवृत्तौ हि क्त्वादेशस्य ल्यपः कित्वाप्रसक्तेस्तस्मिन् परतः ईत्वस्याप्रसक्त्या तन्निषेधवैयर्थ्यं स्पष्टमेव । अतो वक्ष्यमाणेत्यत्र स्थानिवत्त्वेन शानचष्टित्वादुगित्वाच्च ङीप् दुर्वार इत्याशङ्क्य परिहरति—वक्ष्यमाणेत्यादिना । वक्ष्यमाणेत्यत्र टित्वादुगित्वाच्च ङीप् प्राप्तो न भवतीत्यन्वयः । कुतो नेत्यत आह—यासुट इत्यादि ज्ञापनादित्यन्तम् । 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इति लिङादेशानां तिप्, तस्, झि इत्यादिपरस्मैपदानां यासुडागमस्य ङित्वं विहितम् । 'यदागमाः' इति न्यायेन यासुडागमो लिङादेशावयवः । ततश्च स्थानिवत्त्वेनैव ङित्वसिद्धेर्यासुटस्तद्विधिवैयर्थ्यं स्यात् । अतः 'लाश्रयमनुबन्धकार्यमादेशानां न' इति विज्ञायते । ततश्च वक्ष्यमाणेत्यत्र लृडादेशस्य शानचः टिदुगित्कार्ये ङीपि कर्तव्ये स्थानिवत्त्वाभावान्न ङीबित्यर्थः । ननु 'लाश्रयमनुबन्धकार्यमादेशानां न' इति ज्ञापनेऽपि ब्रूतादित्यत्र 'ब्रुव ईट्' इति पितो विधीयमान ईडागमो दुर्वारः । तस्य तिबाश्रयत्वेऽपि लाश्रयत्वाभावेन तस्मिन् कर्तव्ये तातङः स्थानिवत्त्वेन पित्वस्य निर्बाधत्वादित्यस्वरसा-

इति ज्ञापनाच्च भवति। श्नः शानचः शित्त्वेन क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेधज्ञापनाद्वा। सौपर्णेयी। ऐन्द्री। औत्सी। ऊरुद्वयसी–ऊरुदघ्नी–ऊरुमात्री।

---

दाह—श्नः शानच इति। श्ना इत्यस्मात् षष्ठ्येकवचने आल्लोपे श्न इति रूपम्, 'आतो धातोः' इत्यत्र आत इति योगविभागमाश्रित्य अधातोरपि क्वचिदाल्लोपाभ्युपगमात्। 'हलः श्नः शानज्झौ' इति श्नाप्रत्ययस्य शानजादेशो विधीयते। तत्र स्थानिवत्त्वेनैव सिद्धत्वात् शानचः शित्त्वं व्यर्थम्। न चानल्विधाविति निषेधः शङ्क्यः, 'न ल्यपि' इति लिङ्गेन अनुबन्धकार्ये अनल्विधाविति निषेधाभावस्यानुपदमेवोक्तत्वात्। एवं च क्वचिदनुबन्धकार्येऽपि अनल्विधाविति निषेधप्रवृत्तिर्विज्ञायते। तथा च वक्ष्यमाणेत्यत्र टिड्ढगित्कार्ये ङीपि 'अनल्विधाविति निषेधप्रवृत्त्या स्थानिवत्त्वाभावेन टित्त्वोगित्त्वयोरभावात् न ङीबित्यर्थः। वस्तुतस्तु 'लाश्रयमनुबन्धकार्यं नादेशानाम्' इत्यत्र यासुटो ङित्त्वं न ज्ञापकम्, तस्य तिप्सिब्मिबर्थत्वात्। नहि लिडादेशत्वेऽपि तिप्सिब्मिपां ङित्त्वं स्थानिवत्त्वलभ्यम्, 'हलः श्नः शानज्झौ' इति सूत्रे भाष्ये ङिच्च पिन्न, पिच्च ङिन्न' इति प्रपञ्चितत्वात्। तथा श्नश्शानचः शित्वमपि न लिङ्गम्, तत्र शित्त्वस्य भाष्ये प्रत्याख्यातत्वात् प्रत्युत शित्त्वस्य ज्ञापकत्वे 'सेर्ह्यपिच्च' इति हेरपित्त्वस्य तातङो ङित्त्वस्य च, वैयर्थ्यमिति भाष्ये दूषणाभिधानाच्च। तस्मात् वक्ष्यमाणेत्यत्र ङीबेव युक्तः, टाप् त्वसाधुरेव। अजादित्वाट्टाबिति वा कथञ्चित् समाधेयमित्यास्तां तावत्।

सौपर्णेयीति। सुपर्ण्याः अपत्यं स्त्री इत्यर्थे 'स्त्रीभ्यो ढक्' इति ढकि 'आयनेय्' इत्येयादेशः। 'यस्येति च' इतीकारलोपः, 'किति च' इत्यादिवृद्धिः। सौपर्णेयशब्दात् ङीप् 'यस्येति च' इत्याकारलोपः, सौपर्णेयीति रूपम्। न च 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषया 'शिलाया ढः' 'ढश्छन्दसि' इत्यनयोरेव ग्रहणमिति वाच्यम्, तयोः स्त्रियामप्रवृत्तेरगत्या सानुबन्धकस्य ढस्य ग्रहणादिति भाष्ये स्पष्टम्। ऐन्द्रीति। इन्द्रो देवता अस्या आमिक्षाया इति विग्रहः, 'साऽस्य देवता' इत्यणि, 'यस्येति च' इत्यकारलोपः, आदिवृद्धिः ऐन्द्रशब्दात् ङीप्, 'यस्येति च' इत्यकारलोपः। आदिवृद्धिः, ऐन्द्रशब्दात् ङीप्, 'यस्येति च' इत्यकारलोपः इन्द्रस्येयमिति वा विग्रहः, 'तस्येदम्' इत्यण्। औत्सीति। 'उत्सः प्रस्रवणं वारि' इत्यमरः। ऋषिविशेषो वा उत्सः। 'उत्सस्येयमिति विग्रहः। 'उत्सादिभ्योऽञ्' 'यस्येति च' ङीप्। उत्सस्यापत्यं स्त्री औत्सी इति तु नोदाहरणम्। जातेरिस्त्यनुवृत्तौ 'शार्ङ्गरवाद्यञो ङीन्' इत्येव सिद्धेः 'गोत्रं च चरणैः सह' इत्यपत्यप्रत्ययान्तस्य जातित्वादित्यलम्। ऊरुद्वयसी ऊरुदघ्ना ऊरुमात्राति। ऊरूः प्रमाणमस्या इति विग्रहः।

पञ्चतयी। आक्षिकी। लावणिकी। यादृशी। इत्वरी। 'ताच्छीलिके णेऽपि' (प ६८)। चौरी। 'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यानम्' (वा २४२५)। स्त्रैणी। पौंस्नी। शाक्तीकी। आढ्यङ्करणी। तरुणी-तलुनी। (४७१) यञश्च

'प्रमाणे द्वयसज्दघ्नञ्मात्रचः'। ङीप्। पञ्चतयीति। पञ्च अवयवा यस्या इति विग्रहः। 'सङ्ख्याया अवयवे तयप्' ङीप्। आक्षिकीति। अक्षैर्दीव्यतीति विग्रहः। 'तेन दीव्यति खनति जयति जितम्' इति ठक्, आदिवृद्धिः, 'यस्येति' च' इत्यकारलोपः। आक्षिकशब्दात् ङीप्, 'यस्येति च'। लावणिकीति। लवणं पण्यमस्या इति विग्रहः। 'लवणाट्ठञ्', 'ठस्येकः', आदिवृद्धिः, यस्येति च', लावणिकशब्दात् ङीप्, 'यस्येति च' ठेत्येव सिद्धे ठक्ठञोः पृथग्ग्रहणं तु ठनो ञिठस्य च व्यावृत्त्यर्थम्। दण्डोऽस्त्यस्याः दण्डिका 'अत इनिठनौ' काश्यां भवा काशिका 'काश्यादिभ्यष्ठञ्ञिठौ' इति ञिठः। यादृशीति। 'त्यदादिषु दृशः' इति यच्छब्दे उपपदे कञ्, 'आ सर्वनाम्नः' इति यच्छब्दस्याकारः ङीप्, 'यस्येति च'। इत्वरीति। 'इण् गतौ' 'इण्नशजिसर्तिभ्यः क्वरप्' 'ह्रस्वस्य पिति कृति' इति तुक्, इत्वरशब्दात् ङीप् 'यस्येति च' 'स्थेशभास' इति वरचो व्यावृत्तये ककारानुबन्धग्रहणम्। 'विन्यस्तमङ्गलमहौषधिरीश्वरायाः' इति भारविः। 'सैनमीश्वराप्रदह' इति वेदे। क्वरपि अन्यतरानुबन्धेनैव वरचो व्यावृत्तिसिद्धेः अनुबन्धद्वयोपादानं स्पष्टार्थम्। ईश्वरी तु ईश्वरशब्दात् ईश्वरस्य स्त्रीति पुंयोगे ङीष्। अथवा 'अश्नोतेराशुकर्मणि वरट् च' इति वरडन्तात् टित्वात् ङीप्। यद्वा 'आतो मनिन्क्वनिब्वनिपश्च' 'अन्येभ्योऽपि दृश्यते' इति क्वनिपि वनिपि च 'वनो र च' इति ङीब्रौ।

ताच्छीलिके णेऽपीति। तच्छीले भवस्ताच्छीलिकः। तच्छीलार्थक इति यावत्। तस्मिन् णप्रत्यये सति तदन्तादपि ङीप् भवतीत्यर्थः। ज्ञापकसिद्धमेतत्। तथाहि— शीलमित्यनुवृत्तौ 'छत्रादिभ्यो णः' इति विहिते णप्रत्यये अण्कार्यं भवति, 'कार्मस्ताच्छील्ये' इति ज्ञापकात्। कर्म शीलमस्येति विग्रहे छत्रादित्वात् णप्रत्यये, 'नस्तद्धिते' इति टिलोपे, कार्म इति भवति। न तु 'अन्' इति सूत्रेण अण्यन् प्रकृत्या स्यादित्यर्थकेन प्रकृतिभाव इति तदर्थः। अत्र अणि विहितस्य प्रकृतिभावस्य णप्रत्यये परतः प्रतिषेधात् ताच्छीलिके णप्रत्यये अण्कार्यं विज्ञायते। अतस्ताच्छीलिकणप्रत्ययान्तादण्कार्यं ङीप् भवतीति भावः। चौरीति। चुरा शीलमस्या इति विग्रहः। छत्रादित्वात् णः, आदिवृद्धिः 'यस्येति च' चौरशब्दात् ङीपि, 'यस्येति च'। नञ्स्नञ्। नञ्, स्नञ्, ईकक्, ख्युन्, तरुण, तलुन एतेषामपि ङीब्विधौ वचनं कर्तव्यमित्यर्थः। नञादयश्चत्वारः प्रत्ययाः, अतस्तदन्तविधिः। स्त्रैणी पौंस्नीति। 'स्त्रीपुंसाभ्याम्' इति नञ्स्नञौ। तत्र स्त्रीशब्दान्नञि, आदिवृद्धिः, णत्वम्, ङीप्, 'यस्येति च'।

४।१।१६॥ यञन्तात्स्त्रियां ङीप्स्यात् । अकारलोपे कृते । ( ४७२ ) **हलस्तद्धितस्य ६।४।१५०॥** हलः परस्य तद्धितयकारस्योपधाभूतस्य लोपः स्यादीति परे । गार्गी । 'अनपत्याधिकारस्थान्न ङीप्' (वा २४२६) द्वीपे भवा द्वैप्या । अधिकारग्रह-

---

पुंसूशब्दात् स्नञि, आदिवृद्धिः, ङीप् , 'यस्येति च' । शाक्तीकीति । शक्तिः आयुधविशेषः प्रहरणम् अस्या इति विग्रहः । 'शक्तियष्ट्योरीकक् , आदिवृद्धिः, ङीप् 'यस्येति च' । आढ्यङ्करणीति । अनाढ्यः आढ्यः क्रियते अनयेति विग्रहः । 'आढ्यसुभग' इत्यादिना ख्युन् । 'युवोः' इत्यनादेशः । 'अरुर्द्विषत्' इति मुम् , णत्वम् , ङीप् , 'यस्येति च' । तरुणी तलुनीति । यद्यप्यनयोः 'वयसि प्रथमे' इत्येव ङीप् सिद्धः । तथापि गौरादिषु पाठात् ङीषि प्राप्ते इदं वचनम् । गौरादिपाठात् ङीषि स्वरे विशेष इति भावः ।

यञश्च । यञ इति प्रत्ययत्वात्तदन्तग्रहणम् । 'ऋन्नेभ्यः' इत्यतो ङीबित्यनुवर्तते । स्त्रियामित्यधिकृतम् । तदाह—यञन्तादिति । यद्यपि 'टिड्ढाणञ्' इति पूर्वसूत्र एव यञ्ग्रहणं कर्तुमुचितम् । 'तथापि 'प्राचां ष्फ तद्धित' इत्युत्तरसूत्रे यञ एवानुवृत्तये पृथक् सूत्रमिति भावः । अकारलोपे कृते इति । गार्गीत्युदाहरणं वक्ष्यति । गर्गस्यापत्यं स्त्री इत्यर्थे 'गर्गादिभ्यो यञ्' इति यञ् आदिवृद्धिः, 'यस्येति च' इति गकारादकारस्य लोपः । गार्ग्यशब्दात् ङीपि 'हलस्तद्धितस्य' इति यकारलोपात् परत्वात् 'यस्येति च' इति यकारादकारस्य लोपे कृते सति प्रक्रिया वक्ष्यत इत्यर्थः । हलस्तद्धितस्य । हल इति दिग्योगे पञ्चमी । परस्येत्यध्याहार्यम् । यस्येति च' इति सूत्रात् ईतीत्यनुवर्तते, 'सूर्यतिष्यागस्त्य' इत्यतः 'उपधाया' इति, 'य' इति षष्ठ्यन्तं च 'ढे लोपोऽकद्र्वाः' इत्यतः 'लोप' इति च । तदाह—हलः परस्येत्यादिना । अकारलोपात् प्रागेव यकारलोपो न सम्भवति, अकारे सति यकारस्य ईकारपरकत्वाभावात् । ननु कृते अकारलोपे कथं यकारस्य उपधात्वम् । न च अल्लोपस्य स्थानिवत्त्वं शङ्क्यम् , यलोपविधौ तन्निषेधादिति चेत् , न—यलोपे कर्तव्ये अल्लोपस्याभीयत्वेनासिद्धतया यकारस्य उपधात्वसम्भवात् । उपधाग्रहणाननुवृत्तौ तु अल्लोपस्यासिद्धत्वाद्यकारस्य ईकारपरकत्वाभावात् लोपो न स्यात् । यदा तु सूत्रारम्भसामर्थ्यादेवाकारव्यवधानेऽपि यकारस्य लोपः सम्भवतीत्युच्यते, तदा उपधाग्रहणानुवृत्तिर्मास्तु । गार्गीति । इह 'गोत्रं च चरणैः सह' इति जातित्वेऽपि 'जातेरस्त्रीविषयात्' इति न ङीष् , योपधत्वात् ।

अनपत्याधिकारेति । 'तस्यापत्यम्' इत्यपत्याधिकारविहितभिन्नयञन्तान्न ङीबिति वक्तव्यमित्यर्थः । द्वैप्येति । द्वीपे भवेति विग्रहे 'द्वीपादनुसमुद्रं यञ्' इति यञ् । आदिवृद्धिः । 'यस्येति च' टापि, सवर्णदीर्घः । अस्य यञः अपत्याधिकारविहितत्वाभा-

णात् नेह देवस्यापत्यं दैव्या। 'देवाद्यञञौ' इति हि यञ् प्राग्दीव्यतीयः, न त्वपत्याधिकारपठितः। (४७३) प्राचां ष्फ तद्धितः ४।१।१७॥ यञन्तात्ष्फो वा स्यात्स्त्रियाम्, स च तद्धितः। (४७४) षः प्रत्ययस्य १।३।६॥ प्रत्ययस्यादिः ष इत्स्यात्। (४७५) आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ७।१।२॥ प्रत्ययादिभूतानां फादीनां क्रमादायन्नादय आदेशाः स्युः। तद्धितान्तत्वात्प्रातिपदिकत्वम्। षित्त्वसामर्थ्यात्ष्फेणोक्तेऽपि स्त्रीत्वे 'षिद्गौरा—' (सू ४९८) इति वक्ष्य-

---

वाच ङीञिति भावः। नन्वनपत्याञ्च ङीबित्येतावतैव द्वैप्येत्यत्रातिप्रसङ्गनिरासात्, अधिकारग्रहणं किमर्थमित्यत आह—अधिकारग्रहणादिति। इह नेति शेषः। देवस्यापत्यमिति विग्रहे 'देवाद्यञञौ' इति यञ्, आदिवृद्धिः, 'यस्येति च', दैव्यशब्दात् टाप्, सवर्णदीर्घः, दैव्येति रूपम्। अनपत्याञ्च ङीबित्युक्ते अस्य यञः आपत्यत्वात्, ङीब्निषेधो न स्यात्। अधिकारग्रहणे तु अत्रापि निषेधः स्यादेव, अस्य यञः आपत्यत्वेऽपि 'तस्यापत्यम्' इत्यधिकारबहिर्भूतत्वात्। तदेतदुपपादयति—देवादिति। 'देवाद्यञञौ' इति तु 'तस्यापत्यम्' इत्यधिकारात् प्रागेव 'प्राग्दीव्यतोऽण्' इत्यधिकारपठितः। स चापत्यादिविकारान्तार्थेषु साधारणत्वात् अपत्यार्थकोऽपि भवति, न त्वपत्याधिकारपठित इत्यर्थः। यद्यपि 'यञश्च' इति सूत्रे 'आपत्यग्रहणं कर्तव्यम्' इत्येव भाष्ये दृश्यते। तथापि तत्र आपत्यपदम् अपत्याधिकारविहितपरमिति मनोरमायां शब्दरत्ने च प्रपञ्चितम्। प्राचां ष्फ तद्धितः। यञ इत्यनुवर्तते, स्त्रियामित्यधिकृतम्। ष्फेति लुप्तप्रथमाकम्। तदाह—यञन्तादिति। षः प्रत्ययस्य। 'आदिर्ञिटुडवः' इत्यत आदिरित्यनुवर्तते। 'उपदेशेऽजनुनासिक इत्' इत्यत इदिति च। तदाह—प्रत्ययस्यादिरिति। षकारस्य इत्सञ्ज्ञायां तस्य लोपः। आयनेयीनीयियः। आयन्, एय्, ईन्, ईय्, इय्, एषां द्वन्द्वात् प्रथमाबहुवचनम्। फ, ढ, ख, छ, घ्, एषां द्वन्द्वात् षष्ठीबहुवचनम्। फादिष्वकार उच्चारणार्थः। यथासंख्यपरिभाषया क्रमेणान्वयः। तदाह—प्रत्ययादिभूतानामित्यादिना। आयनो नस्य इत्त्वे नित्स्वरोपयोगेऽपि नेत्त्वम्, फिनो नित्करणात् ज्ञापकात्। तत्साहचर्यादीनोऽपि नस्य नेत्त्वम्। एयादिषु च यस्य नेत्त्वम्, प्रयोजनाभावात्। ननु ष्फस्य तद्धितसंज्ञा किमर्थेत्यत आह—तद्धितान्तत्वादिति। ष्फान्तस्य प्रातिपदिकत्वे प्रयोजनमाह—षिद्गौरेति। वक्ष्यमाणो ङीषिति। 'षिद्गौरादिभ्यश्च' इत्यत्र प्रातिपदिकादित्यनुवृत्तम्, ततश्च ष्फान्तस्य प्रातिपदिकत्वाभावे ङीष् न स्यादिति भावः। ननु ष्फप्रत्ययेनैव स्त्रीत्वस्य द्योतितत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायादत्र कथं ङीषित्यत आह—षित्त्वसामर्थ्यादिति।

माणो ङीष्। गार्ग्यायणी। (४७६) **सर्वत्र लोहितादिकतन्तेभ्यः ४।१।१८॥** लोहितादिभ्यः कतशब्दान्तेभ्यो यञन्तेभ्यो नित्यं ष्फः स्यात्। लौहित्यायनी। कात्यायनी। (४७७) **कौरव्यमाण्डूकाभ्यां च ४।१।१९॥** आभ्यां ष्फः स्यात्। क्रमेण टाब्ङीषोरपवादः। 'कुर्वादिभ्यो ण्यः' (सू ११७५) कौरव्यायणी। 'ढक्च मण्डूकात्' (सू ११२२) इत्यण्। माण्डूकायनी। 'आसुरेरुपसङ्ख्यानम्'। (वा २४२३) आसुरायणी। (४७८) **वयसि प्रथमे ४।१।२०॥**

---

ष्फेण द्योतितेऽपि स्त्रीत्वे पित्करणसामर्थ्यात् ङीषित्यर्थः। गार्ग्यायणीति। गर्गस्यापत्यं स्त्री इति विग्रहः। गर्गादियञन्तात् गार्ग्यशब्दात् ष्फः, पकार इत्, फकारस्य आयन्नादेशः, 'यस्येति च' इति यकारादकारस्य लोपः, 'हलस्तद्धितस्य' इति तु न भवति। ईतीत्यनुवृत्तेः। 'आपत्यस्य च' इत्यपि न। अनातीति निषेधात्। पित्त्वात् ङीष्, णत्वमिति भावः।

सर्वत्र। लोहितादिः गर्गाद्यन्तर्गणः। लोहितः आदिः येषामिति, कतः अन्तो येषामिति च विग्रहः। कतन्तेत्यत्र शकन्ध्वादित्वात् पररूपम्। यञ इत्यनुवृत्तं बहुवचनान्ततया विपरिणम्यते। 'प्राचां ष्फ तद्धितः' इति सूत्रं प्राचां वर्जमनुवर्तते। सर्वत्रेति सर्वेषु मतेष्वित्यर्थः। नित्यमिति यावत्। तदाह—लोहितादिभ्य इत्यादिना। लौहित्यायनीति। लोहितस्यापत्यं स्त्री इति विग्रहः। लोहितशब्दात् गर्गादियञन्तात् ष्फः, ष इत्, फकारस्यायन्, 'यस्येति च' इति यकारादकारस्य लोपः, तद्धित इत्यप्यनुवृत्तेः पित्त्वात् ङीपिति भावः। कात्यायनीति। पूर्ववत् प्रक्रिया बोध्या। कौरव्यमाण्डूकाभ्यां च। आभ्यामिति। कौरव्यमाण्डूकाभ्यामित्यर्थः। क्रमेणेति। कौरव्यशब्दात् टापः माण्डूकशब्दात् ङीपश्चापवाद इत्यर्थः। कौरव्यशब्दस्य यञन्तत्वात्, माण्डूकशब्दस्य अणन्तत्वाच्च। ङीपोऽपवाद इत्युचितमिति भ्रमं वारयितुमाह—कुर्वादिभ्य इत्यादिना। कौरव्यायणीति। कुरोरपत्यं स्त्री इति विग्रहः। 'कुर्वादिभ्यो ण्यः' इति ण्यः। णकार इत्, 'ओर्गुणः,' आदिवृद्धिः, 'गोत्रं च चरणैस्सह' इति जातित्वेऽपि योपधत्वात् 'जातेरस्त्रीविषयात्' इति ङीषभावे टाप् प्राप्तः। तं बाधित्वा ष्फः, ष इत्, आयन्, यस्येति च' इत्यकारलोपः। पित्त्वात् ङीष्। 'यस्येति च' इति भावः। माण्डूकायनीति। मण्डूको नाम ऋषिः, तस्यापत्यं स्त्री इति विग्रहः। 'ढक् च मण्डूकात्' इत्यण्, आदिवृद्धिः, 'यस्येति च' 'गोत्रं च चरणैस्सह' इति जातित्वात् ङीष् प्राप्तः, तं बाधित्वा ष्फः, ष इत्, आयन्। 'यस्येति च,' पित्त्वात् ङीष्, 'यस्येति च' इति भावः। टाब्ङीषोरपवाद इति पाठस्तु प्रामादिकः। आसुरेरुपसङ्ख्यानमिति। ष्फस्येति। शेषः। आसुरायणीति। असुरस्यापत्यं स्त्री इति

प्रथमवयोवाचिनोऽदन्तात्स्त्रियां ङीप्स्यात्। कुमारी। 'वयस्यचरम इति वाच्यम्' (वा २४३५)। वधूटी। चिरण्टी। वधूटचिरण्टशब्दौ यौवनवाचिनौ। अतः किम्, शिशुः। कन्यायाः न। 'कन्यायाः कनीन च' (सू ११११) इति निर्देशात्। (४७९) **द्विगोः ४।१।२१॥** अदन्ताद् द्विगोर्ङीप्स्यात्। त्रिलोकी। अजादित्वा-त्त्रिफला। त्र्यनीका (सेना)॥ (४८०) **अपरिमाणविस्ताचितकम्बल्ये-**

---

विग्रहः 'अत इञ्', आदिवृद्धिः, ष्फः, ष इत्, आयन्, 'यस्येति च' षित्वात् ङीष्, 'यस्येति च', णत्वमिति भावः। वयसि प्रथमे। प्राणिनां कालकृतावस्थाविशेषो वयः। तच्च कौमारं यौवनं वार्धकं चेति त्रिधा।

'पिता रक्षति कौमारे भर्ता रक्षति यौवने॥
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥'

इति दर्शनात्। चतुर्विधं वय इत्यन्ये।

'आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम्।
तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति॥'

इति दर्शनात्। प्रथमे वयसीत्यनन्तरं विद्यमानादिति शेषः। 'अजाद्यतष्टाप्' इत्यत अत इत्यनुवृत्तेन प्रातिपदिकादित्यधिकृतं विशेष्यते। तदन्तविधिः। स्त्रिया-मित्यधिकृतम्। 'ऋन्नेभ्यः' इत्यतो ङीबित्यनुवर्तते। तदाह—प्रथमवयोवाचिन इत्या-दिना। कुमारीति। अप्रादुर्भूतयौवनेत्यर्थः। वृद्धकुमारीति तु वृद्धायामेव कुमारीत्वा-रोपाद् बोध्यः। वयस्यचरम इति। चरमम् अन्त्यं वयः, तद्भिन्नम् अचरमं, प्रथमे इत्य-पनीय अचरमे इति वक्तव्यमित्यर्थः। किमर्थमित्यत आह—वधूटी चिरण्टीति। अन-योर्द्वितीयवयोवाचित्वादप्राप्तिरिति भावः। अनयोर्द्वितीयवयसि अप्रसिद्धत्वादाह—वधूटचिरण्टशब्दौ यौवनवाचिनाविति। भाष्यप्रामाण्यादिति भावः। शिशुरिति। शिशु-शब्दस्य प्रथमवयोवाचित्वेऽपि अदन्तत्वाभावात् न ङीबिति भावः। कन्याया नेति। ङीबिति शेषः। कुत इत्यत आह—कन्यायाः कनीन चेति। न च द्विवर्षा स्त्री इत्यादा-वपि ङीप् शङ्क्यः, शालादावपि प्रयोगसत्त्वेन द्विवर्षेत्यादेः प्रथमवयोवाचित्वाभावात्, पदान्तरसमभिव्याहारप्रकरणादि अनपेक्ष्य यः वयोवाची तस्यैव विवक्षितत्वात्। द्विगोः। 'स्त्रिया'मिति 'अत' इति 'ङी'बिति चानुवर्तते। तदाह—अदन्तादिति। त्रिलोकीति। त्रयाणां लोकानां समाहार इति विग्रहः। 'तद्धितार्थोत्तरपदसमाहारे च' इति द्विगुसमासः। 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति स्त्रीत्वम्। त्रिलो-कशब्दाद् टाबपवादो ङीप्। 'यस्येति च' इति भावः। ननु त्रिफला त्र्यनीका इत्य-त्रापि ङीप् प्राप्नोतीत्यत आह—अजादित्वात् त्रिफला त्र्यनीकेति। भवतीति शेषः।

**श्यो न तद्धितलुकि ४।१।२२।** अपरिमाणान्ताद्विस्ताद्यन्ताच्च द्विगोर्ङीन्न स्यात्तद्धितलुकि सति । पञ्चभिरश्वैः क्रीता पञ्चाश्वा । आर्हीयष्ठक् । तस्य 'अध्यर्ध-' ( सू १६९२ ) इति लुक् । द्वौ विस्तौ पचति द्विविस्ता । द्व्याचिता । द्विकम्बल्या ।

---

त्रयाणां फलानां समाहार इति, त्रयाणामनीकानामिति च विग्रहे 'तद्धितार्थ' इति द्विगुः । 'अकारान्तोत्तरपदः' इति स्त्रीत्वम् , 'द्विगोः' इति ङीपं बाधित्वा अजादित्वाट्टाबिति भावः । अनीकशब्दः ऐन्द्रवायवाग्रत्वे शुक्राग्रत्वे आग्रयणाग्रत्वे च वर्तते इति त्र्यनीकाधिकरणे मीमांसकाः ।

अपरिमाण । 'द्विगोः' इति ङीबिति चानुवर्तते । प्रातिपदिकादित्यधिकृतमपरिमाणादिभिर्विशेष्यते । तदन्तविधिः । तदाह—अपरिमाणान्तादित्यादिना । अपरिमाणान्तमुदाहरति—पञ्चभिरिति । तद्धितलुकं दर्शयति—आर्हीयष्ठक् । अध्यर्धेति लुगिति । पञ्चभिरश्वैः क्रीतेति विग्रहे 'तद्धितार्थ' इति द्विगुः । 'आर्हादगोपुच्छसङ्ख्यापरिमाणाट्ठक्' इत्यधिकारे 'तेन क्रीतम्' इति ठक् 'अध्यर्धपूर्वाद्द्विगोर्लुगसंज्ञायाम्' इति तस्य लुक् । अत्र 'द्विगोः' इति ङीप् न भवति, अपरिमाणान्तद्विगुत्वात् । नन्वत्र 'द्विगोः' इति प्राप्तङीब्निषेधेऽपि 'टिड्ढाणञ्' इति ठञ्निमित्तको ङीप् दुर्वारः । द्वाभ्यां शताभ्यां क्रीता द्विशतेत्यत्र 'सङ्ख्याया अतिशदन्तायाः' इति कनः 'अध्यर्ध' इति लुकि 'अपरिमाण' इति निषेधस्य चरितार्थत्वात् इति चेत् , सत्यम् , 'टिड्ढाणञ्' इत्यत्र प्रत्यासत्त्या टिड्ढाणञादीनां यः अकारः तदन्तमिति विवक्षितम् । पञ्चाश्वशब्दश्चायं ठगवयवाकारान्तो न भवतीति न दोषः । न च प्रत्ययलक्षणेन ठगवयवाकारान्तत्वं शङ्क्यम् , वर्णाश्रये प्रत्ययलक्षणाभावात् । बिस्तादिशब्दानां तु परिमाणविशेषवाचित्वात् 'अपरिमाण' इत्यनेन अप्राप्तेः पृथगुपादानम् । द्वौ बिस्ताविति । 'सुवर्णबिस्तौ हेम्नोऽक्षे' इत्यमरः । 'गुञ्जाः पञ्चाद्यमाषकः । ते षोडशाक्षः' इति च । गुञ्जापञ्चकं माषपरिमाणम् । माषषोडशकम् अक्षपरिमाणम् , तच्च अशीतिगुञ्जात्मकम् । तस्मिन् हेमविषये अक्षपरिमाणे सुवर्णबिस्तशब्दावित्यर्थः । द्वौ बिस्तौ पचतीति विग्रहे 'तद्धितार्थ' इति द्विगुः । 'सम्भवत्यवहरति पचति' इति ठक् , तस्य 'अध्यर्ध' इति लुक् । 'द्विगोः' इति ङीपि अनेन प्रतिषिद्धे सति टापि द्विबिस्ता मूषा । द्विबिस्तपरिमाणकहिरण्यं द्रावयतीत्यर्थः । पचिरिह द्रावणे द्रष्टव्यः । द्व्याचितेति । 'आचितो दश भाराः' इति इत्यमरः । 'तुला स्त्रियां पलशतं भारः स्याद्विंशतिः पुमान्' इति च । द्वावाचितौ वहतीत्यर्थे 'आढकाचितपात्रात् खोऽन्यतरस्याम्' 'द्विगोष्ठंश्च' इति खठनोरभावे प्राग्वतीयष्ठञ् । 'अध्यर्ध' इति तस्य लुक् । अनेन 'द्विगोः' इति ङीपि निषिद्धे टापि द्व्याचिता शकटी । द्विकम्बल्येति । कम्बलस्य प्रकृतिभूतं द्रव्यं कम्बल्यम् ऊर्णापलशतम् । 'तदर्थं विकृतेः प्रकृतौ' इत्यर्थे कम्बलाच्च

परिमाणान्तात्तु द्वयाढकी । तद्धितलुकि किम् । समाहारे पञ्चाश्वी । (४८१) **काण्डान्तात् क्षेत्रे ४।१।२३॥** क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि । द्वे काण्डे प्रमाणमस्या द्विकाण्डा क्षेत्रभक्तिः । 'प्रमाणे द्वयसच्—' (सू १८३८) इति विहितस्य मात्रचः 'प्रमाणे लः, द्विगोर्नित्यम्' (वा ३१२९-३०) इति लुक् । क्षेत्रे किम्—द्विकाण्डी रज्जुः । (४८२) **पुरुषात्प्रमाणेऽन्यतरस्याम् । ४।१।**

---

संज्ञायाम्' इति यत् । द्वाभ्यां कम्बल्याभ्यां क्रीतेति विग्रहः, 'तेन क्रीतम्' इति ठञः, 'अध्यर्ध' इति लुक्, 'द्विगोः' इति ङीपि अनेन प्रतिषिद्धे टाप् । नन्वत्र 'न तद्धितलुकि' इत्येवास्तु, तावतैव पञ्चभिरश्वैः क्रीता पञ्चाश्वेति सिद्धेः 'अपरिमाण' इति मास्तु । एवं च द्विबिस्ता द्वयाचिता द्विकम्बल्येत्यपि सिद्धेर्बिस्तादिग्रहणमपि मास्त्विस्यत आह—परिमाणान्तात्त्विति ।

'गुञ्जाः पञ्च तु माषः स्यात्ते सुवर्णस्तु षोडश ।
पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम् ॥
पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम् ।
चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ॥' इति स्मृतिः ।

द्वावाढकौ पचतीति विग्रहे 'आढकाचितपात्रात् खोऽन्यतरस्याम्' 'द्विगोष्ठंश्च' इति खठनोरभावे प्राग्वतीयष्ठञ् । 'अध्यर्ध' इति लुक् । 'द्विगोः' इति ङीप् । द्वयाढकीति रूपम् । 'न तद्धितलुकि' इत्येतावत्येवोक्ते अत्रापि ङीपो निषेधः स्यात् । अतोऽपरिमाणान्न तद्धितलुकीति वक्तव्यम् । तावत्युक्ते द्विबिस्तेत्यादौ परिमाणत्वात् ङीब्निषेधो न स्यात् । अतो बिस्तादिग्रहणमपीति भावः ।

काण्डान्तात् क्षेत्रे । 'द्विगोः' इति, न तद्धितलुकीति चानुवर्तते । तदाह—क्षेत्रे य इत्यादि । द्वे काण्डे इति । षोडशारत्न्यायामो दण्डः काण्डमिति स्मृतिः । द्वे काण्डे प्रमाणमस्या इति विग्रहे 'तद्धितार्थ' इति द्विगुसमासे द्विकाण्डशब्दस्य क्षेत्रवर्तित्वे नपुंसकत्वशङ्काव्युदासाय क्षेत्रभक्तिरिति विशेष्योपादानम् । तद्धितलुकं दर्शयितुमाह—प्रमाणे द्वयसजिति । न च काण्डादित्यस्य प्रातिपदिकविशेषणतया तदन्तलाभादन्तग्रहणं व्यर्थमिति शङ्क्यम्, असति ह्यन्तग्रहणे क्षेत्र इत्येतत् काण्डस्यैव विशेषणं स्यात्, श्रुतत्वात् । क्षेत्रे यः काण्डशब्दः तदन्तादिति लभ्येत । एवं च द्विकाण्डा क्षेत्रभक्तिरित्यत्र द्विकाण्डशब्दस्यैव क्षेत्रवर्तित्वात् काण्डशब्दस्य प्रामाणवाचित्वात् ङीब्निषेधो न स्यात् । द्वाभ्यां काण्डाभ्यां काण्डप्रमितक्षेत्राभ्यां क्रीता द्विकाण्डी वडवेत्यत्रैव ङीब्निषेधः स्यात् । अतः अन्तग्रहणम् । द्विकाण्डी रज्जुरिति । पूर्ववत् मात्रचो लुकि 'द्विगोः' इति ङीप् । क्षेत्रवृत्तित्वाभावात् न तन्निषेध इति भावः । ननु 'अप-

२४॥ प्रमाणे यः पुरुषस्तदन्ताद् द्विगोर्ङीब्वा स्यात्तद्धितलुकि । द्वौ पुरुषौ प्रमाणमस्याः सा द्विपुरुषी-द्विपुरुषा वा परिखा । (४८३) ऊधसोऽनङ् ५।४।१३१॥ ऊधोऽन्तस्य बहुव्रीहेरनङादेशः स्यात् स्त्रियाम् । इत्यनङि कृते डाब्ङीब्निषेधेषु

---

रिमाण' इति पूर्वसूत्रे परिमाणशब्देन किं परिच्छेदकमात्रं विवक्षितम्, उत 'ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । 'आयामस्तु प्रमाणं स्यात्' इति वार्तिकानुसारेण परितः सर्वतः आरोहतः परिणाहतश्च येन मीयते तत् परिमाणमित्याढककुडवाद्येव आयामव्यावृत्तं विवक्षितम् ? नाद्यः, तथा सति द्वौ हस्तौ प्रमाणमस्या इति विग्रहे द्विहस्ता भित्तिरित्यत्र पूर्ववन्मात्रचो लुकि ङीब्निषेधो न स्यात् । न द्वितीयः, तथा सति काण्डशब्दस्यायामप्रमाणपरतया उक्तपरिमाणपरत्वाभावेन 'अपरिमाण' इत्यनेनैव द्विकाण्डा क्षेत्रभक्तिः इत्यत्रापि ङीब्निषेधलम्भवेन 'काण्डान्तात् क्षेत्रे' इति सूत्रारम्भवैयर्थ्यादित्युभयतः पाशा रज्जुरिति चेत्, सत्यम्—'अपरिमाण' इति पूर्वसूत्रे पारिभाषिकमेव परिमाणं विवक्षितं, न त्वायामोऽपि ततश्च द्विहस्ता भित्तिरित्यत्र 'अपरिमाण' इति ङीब्निषेधो निर्बाधः । काण्डान्तादिति सूत्रं तु काण्डान्तात् क्षेत्र एव ङीब्निषेधः, नान्यत्र द्विकाण्डी रज्जुरित्यादाविति नियमार्थमित्यन्यत्र विस्तरः ।

पुरुषात् । द्विगोरिति तद्धितलुकीति ङीबिति चानुवर्तते । तदाह—प्रमाणे य इत्यादिना । प्रमाणमायामः, 'आयामस्तु प्रमाणं स्यात्' इति वचनात् । द्वौ पुरुषाविति । पञ्चहस्तायामः पुरुष इत्युच्यते, 'पञ्चारत्निः पुरुषः' इति शुल्बसूत्रात् । द्वौ पुरुषौ प्रमाणमस्या इति विग्रहे 'तद्धितार्थ' इति द्विगुसमासः । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति विहितस्य मात्रचः 'प्रमाणे लः' 'द्विगोर्नित्यम्' इति लुक् । अत्र उक्तरीत्या पुरुषप्रमाणस्य आयामात्मकस्य 'अपरिमाण' इति नित्यं ङीब्निषेधे प्राप्ते विकल्पार्थमिदं वचनम् । अन्ये तु 'तदस्य परिमाणम्' इति ठकः ठञो वा 'अध्यर्ध' इति लुक् । तत्र हि उत्तरसूत्रानुरोधात् परिमाणशब्देन परिच्छेदकमात्रं गृह्यते इत्याहुरित्यास्तां तावत् । द्विपुरुषी द्विपुरुषा वा परिखेति । तिर्यक् द्विपुरुषायतेत्यर्थः । दुर्गं परितः तत्संरक्षणार्थो जलाशयः परिखा ।

अथ कुण्डमिव ऊधो यस्या इति बहुव्रीहौ कुण्डोधस्शब्दः । तत्र विशेषमाह—ऊधसोऽनङ् । 'बहुव्रीहौ सक्थ्यक्ष्णोः' इत्यतो बहुव्रीहावित्यनुवृत्तं षष्ठ्या विपरिणम्यते, ऊधसः, इत्यनेन विशेष्यते, तदन्तविधिः । तदाह—ऊधोऽन्तस्येति । समासान्तप्रकरणस्थत्वेऽपि ङित्वादस्यादेशत्वं बोध्यम् । इत्यनङि कृते इति । अनङि ङकार इत्, अकार उच्चारणार्थः, 'ङिच्च' इत्यन्त्यस्य सकारस्य अन्, पररूपम्, कुण्डोधन् इति स्थिते सतीत्यर्थः । डाब्ङीब्निषेधेष्विति । 'डाबुभाभ्याम्' इति वैकल्पिके डापि,

प्राप्तेषु । (४८४) बहुव्रीहेरूधसो ङीष् ४।१।२५॥ ऊधोऽन्ताद्बहुव्रीहेर्ङीष् स्यात्स्त्रियाम् । कुण्डोध्नी। स्त्रियाम् किम्—कुण्डोधो धैनुकम्। इहानङपि न। तद्विधौ 'स्त्रियाम्' (वा २३६७) इत्युपसङ्ख्यानात् (४८५) सङ्ख्याव्ययादेर्ङीप् ४।१।२६॥ ङीषोऽपवादः। द्व्यूध्नी। अत्यूध्नी। बहुव्रीहेरित्येव। ऊधोऽतिक्रान्ता अत्यूधाः। (४८६) दामहायनान्ताच्च ४।१।२७॥ सङ्ख्यादेर्बहुव्रीहेर्दामान्ताद्धायनान्ताच्च ङीप्स्यात्। दामान्ते डाप्प्रतिषेधयोः प्राप्त-

'अन उपधालोपिनः' इति वैकल्पिके ङीपि, तदुभयाभावे 'ऋन्नेभ्यः' इति प्राप्तस्य ङीपः 'अनो बहुव्रीहेः' इति निषेधे च प्राप्ते इत्यर्थः। बहुव्रीहेः। ऊधस इति बहुव्रीहेर्विशेषणम्, तदन्तविधिः, स्त्रियामित्यधिकृतम्। तदाह—ऊधोऽन्तादिति। कुण्डोध्नीति। अनङि कृते ङीषि 'अल्लोपोऽनः' इति भावः। 'ऊधस्तु क्लीबमापीनम्' इत्यमरः। ङीष्विधेस्तु स्वरे विशेषः फलम्। स्त्रियां किमिति। ङीष्विधौ स्त्रियामित्यनुवृत्तिः किमर्थेति प्रश्नः। कुण्डोधो धैनुकमिति। कुण्डमिव ऊधो यस्येति विग्रहः। नपुंसकत्वस्फोरणाय धैनुकमिति विशेष्यम्, धेनूनां समूह इत्यर्थः। 'अचित्तहस्तिधेनोष्ठक्' 'इसुसुक्तान्तात्कः' 'आदिवृद्धिः' क्लीबत्वं लोकात्। अत्र स्त्रीत्वाभावान्न ङीपित्यर्थः। ननु मास्तु ङीप्, अनङ् तु कुतो न स्यात्, समासान्तप्रकरणस्थे ऊधसोऽनङ्विधौ 'स्त्रियाम्' इत्यभावादित्यत आह—तद्विधाविति। ऊधसोऽनङ्विधौ 'स्त्रियाम्' इत्युपसङ्ख्यानादित्यर्थः। 'बहुव्रीहेः' किम्। ऊधः प्राप्तेति विग्रहे 'प्राप्तापन्ने च द्वितीयया' इति समासे प्राप्तोधाः।

सङ्ख्याव्ययादेर्ङीप्। सङ्ख्याव्ययादेरूधोऽन्तात् स्त्रियां ङीप् स्यादित्यर्थः। ङीषोऽपवाद इति। 'बहुव्रीहेरूधसो ङीष्' इत्यस्यापवाद इत्यर्थः। स्वरे विशेषः। सङ्ख्यादेरुदाहरति—द्व्यूध्नीति। द्वे ऊधसी यस्या इति विग्रहः। अनङि ङीपि अल्लोप इति भावः। अव्ययादेरुदाहरति—अत्यूध्नीति। अतिशयितमूधो यस्या इति विग्रहः। बहुव्रीहेरित्येवेति। बहुव्रीहेरित्यनुवर्तते एवेत्यर्थः। ऊधोऽतिक्रान्तेति। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासस्य अबहुव्रीहित्वान्न ङीप्। अत एव नानङ्, नापि ङीप्। दामहायनान्ताच्च। सङ्ख्यादेः ङीप् इति चानुवर्तते, तदाह—सङ्ख्यादेरिति। अव्ययग्रहणं तु नानुवर्तते अस्वरितत्वादिति भावः। बहुव्रीहिविशेषणत्वादेव सिद्धे अन्तग्रहणं स्पष्टार्थम्। दामान्ते इति। द्विदामन्शब्दे दामान्ते 'डाबुभाभ्याम्' इति डापि 'अन उपधालोपिनः' इति ङीपि, 'अनो बहुव्रीहेः' इति ङीप्प्रतिषेधे च प्राप्ते, द्विहायनीत्यत्रापि हायनान्ते अदन्तत्वाट्टापि प्राप्ते 'दामहायनान्ताच्च' इति वचनमित्यर्थः।

योर्हायनान्ते टापि प्राप्ते वचनम्। द्विदाम्नी। अव्ययग्रहणाननुवृत्तेरुद्दामा वडवेत्यत्र ङाब्ङिनषेधावपि पक्षे स्तः। द्विहायनी बाला। 'त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम्' (वा ५०३८)। 'वयोवाचकस्यैव हायनस्य ङीण्णत्वं चेष्यते' (वा २४४१) त्रिहायणी। चतुर्हायणी। वयसोऽन्यत्र द्विहायना, त्रिहायना, चतुर्हायना शाला। (४८७) **नित्यं संज्ञाछन्दसोः ४।१।२९॥** अन्नन्ताद्बहुव्रीहेरुपधालोपिनो ङीप्स्यात्सञ्ज्ञाछन्दसोः। सुराज्ञी नाम नगरी। अन्यत्र पूर्वेण विकल्प एव। वेदे तु शतमूर्ध्नी॥ (४८८) **केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ४।१।३०॥** एभ्यो नवभ्यो नित्यं ङीप्स्यात्सञ्ज्ञाछन्दसोः। 'अथो त इन्द्रः केवलीर्विशः' 'मामकी तनू'। भागधेयी। पापी। अपरी। समानी।

---

द्विदाम्नीति। द्वे दामनी यस्या इति विग्रहः। ङीपि 'अल्लोपोऽनः' इति भावः। ननु अव्ययग्रहणानुवृत्तौ किं बाधकमित्यत आह—अव्ययग्रहणेति। उद्दामेति। उत्क्रान्तं दाम यस्या इति विग्रहः। डाब्ङिनषेधावपीति। अपिना 'अन उपधा' इति ङीप् गृह्यते, अन्ग्रहणे अनर्थकस्यापि ग्रहणात्। अथ हायनान्तस्य उदाहरति—द्विहायनी बालेति। द्वौ हायनौ यस्या इति विग्रहः। अथ त्रिहायणीत्यत्र भिन्नपदत्वात् णत्वप्राप्तावाह—त्रिचतुर्भ्यामिति। नन्वेवमपि द्विहायना शाला इत्यत्रापि ङीप् स्यात्, त्रिहायना शालेत्यत्र तु ङीप् णत्वं च स्यातामित्यत आह—वयोवाचकस्येति। इष्यते इति। भाष्यकृतेति शेषः।

केवलमामक। 'नित्यं संज्ञाच्छन्दसोः' इति पूर्वसूत्रमनुवर्तते। एवं च 'अन उपधालोपिनोऽन्यतरस्याम्' इति अन्यतरस्यां ग्रहणं निवृत्तम्। 'संख्याव्ययादेर्ङीप्' इत्यतो ङीबित्यनुवर्तते। तदाह–एभ्य इति। केवल, मामक, भागधेय, पाप, अपर, समान, आर्यकृत, सुमङ्गल, भेषज इत्येतेभ्यो नवभ्य इत्यर्थः। छन्दस्युदाहरति—अथोत इन्द्रः केवलीरिति। मामकी तनू इति। मदीयायामित्यर्थः। 'युष्मदस्मदोरन्यतरस्यां खञ् च' इत्यणि 'तवकममकावेकवचने' इति प्रकृतेर्ममकादेशः, ङीप्, 'सुपां सुलुक्' इति सप्तम्या लुक्। 'मित्रावरुणयोर्भागधेयी स्थ', 'भागरूपनामभ्यो धेयः' इति स्वार्थिको धेय प्रत्ययः। भागशब्दस्य पुंल्लिङ्गत्वेऽपि 'स्वार्थिकाः प्रकृतेः क्वचिल्लिङ्गवचनान्यतिवर्तन्ते' इति स्त्रीत्वम्, ङीप्। 'तन्वः सन्तु पापीः।' पापमस्यास्तीत्यर्थे अर्श आद्यजन्तात् स्त्रीत्वे ङीप्। 'उत वापरीभ्यो मघवा विजिग्ये'। अपरशब्दः पवर्गमध्यः। 'समानीव आकूतिः।' आर्यकृतीति क्वचित् वेदे अन्वेषणीयम्। एवं सुमङ्गलीति च। 'सुमङ्गलीरियं वधूः' इत्यत्र 'छन्दसीवनिपौ' च इति मत्वर्थे ईप्रत्ययः। 'शिवा-रुद्रस्य भेषजी।' भेषजशब्दः रोगनिवर्तके औषधे प्रसिद्धः। अत एव सूत्रात् स्त्री-

आर्यकृती । सुमङ्गली । भेषजी । अन्यत्र केवला इत्यादि । मामकग्रहणं नियमार्थम् । अण्णन्तत्वादेव सिद्धेः । तेन लोकेऽसंज्ञायां मामिका । ( ४८६ ) **अन्तर्वत्पतिवतोर्नुक् ४।१।३२।।** एतयोः स्त्रियां नुक्स्यात् । 'ऋन्नेभ्यो ङीप्' ( सू ३०६ )। गर्भिण्यां जीवद्भर्तृकायां च प्रकृतिभागौ निपात्येते । तत्रान्तरस्त्यस्यां गर्भ इति विग्रहे अन्तश्शब्दस्याधिकरणशक्तिप्रधानतयाऽस्तिसामानाधिकरण्याभावादप्राप्तो मतुब्निपात्यते । 'पतिवत्नी' इत्यत्र तु वत्वं निपात्यते । अन्तर्वत्नी । पतिवत्नी । प्रत्युदाहरणं तु अन्तरस्त्यस्यां शालायां घटः । पतिमती पृथिवी । (४९०) **पत्युर्नो यज्ञसंयोगे ४।१।३३।।** पतिशब्दस्य नकारादेशः स्याद्यज्ञेन सम्बन्धे ।

---

त्वमपि । यद्वा भिषजः इयमित्यर्थे अणि इकारस्य एकारः, अत एव निपातनात् । सञ्ज्ञायामप्येवमेव सर्वत्र ङीबुदाहार्यः । सञ्ज्ञाच्छन्दोभ्यामन्यत्र तु केवला मामिका इत्यादि । नन्वण्णन्तत्वादेव 'टिड्ढाणञ्' इति ङीपि सिद्धे मामकग्रहणं व्यर्थमित्यत आह—मामकग्रहणमिति । लोके असञ्ज्ञायां च ङीब्निवृत्त्यर्थमिति भावः । एवं भेषजशब्दस्य अण्णन्तत्वेऽपि ज्ञेयम् । एतदर्थमेव वैदिकप्रक्रियायाम् इदं नोपन्यस्तम् ।

अन्तर्वत्पतिवतोर्नुक् । एतयोः स्त्रियां नुगिति । कित्त्वसामर्थ्याद् अयमागमः, न तु प्रत्यय इति भावः । कित्वादन्तावयवः, अन्तर्वत् न, पतिवत् न इति स्थिते आह—ऋन्नेभ्यो ङीबिति । गर्भिण्यामिति । गर्भिण्यां जीवद्भर्तृकायां च स्त्रियाम् अन्तर्वत् पतिवत् इति प्रकृतिभागौ नुक्सन्नियोगेन निपात्येते इत्यर्थः । वार्त्तिकमेतत् । कतरस्मिन् किं निपात्यत इत्यत आह—तत्रेति । तयोर्मध्य इत्यर्थः । अन्तरस्त्यस्यां गर्भ इति विग्रहे अप्राप्तो मतुप् निपात्यत इत्यन्वयः । कथमप्राप्तिर्मतुप इत्यत आह—अन्तश्शब्दस्येत्यादि अभावादित्यन्तम् । 'तदस्यास्त्यस्मिन्निति मतुप्' इति सूत्रेण अस्तिसमानाधिकरणात् कर्तृकारकप्रधानप्रथमान्तात् मतुप्प्रत्ययो विहितः । यथा गौरस्यास्तीति गोमानित्यादौ । प्रकृते तु प्रथमान्तः कर्तृकारकप्रधानो गर्भशब्द एवास्तिसमानाधिकरणः, न तु अन्तश्शब्दः, तस्याधिकरणकारकप्रधानतया अस्तिसामानाधिकरण्यासम्भवात् । अतोऽत्र अप्राप्तौ मतुब्निपात्यत इत्यर्थः । ततश्च 'मादुपधायाश्च मतोर्वः' इति मकारस्य वत्वे अन्तर्वत् इति प्रकृतिभावः सम्पद्यत इति भावः । वत्वमिति । पतिरस्या अस्तीति विग्रहे 'तदस्यास्त्यस्मिन्' इति मतुपो मकारस्य मादुपधात् परत्वाभावेन 'मादुपधायाः' इति वत्वमप्राप्तं निपात्यत इत्यर्थः । प्रत्युदाहरणं त्विति । गर्भिण्यामेव मतुब्निपातनादन्तरस्त्यस्यां शालायां घट इति विग्रहवाक्यमेव, न तु मतुबित्यर्थः । पतिमती पृथिवीति । जीवद्भर्तृकायामेव वत्वनिपातनादिह वत्वाभाव इति भावः । पत्युर्नो । पत्युरिति षष्ठी । न इत्यकार उच्चारणार्थः । स्त्रि-

वसिष्ठस्य पत्नी । तत्कर्तृकस्य यज्ञस्य फलभोक्त्रीत्यर्थः । दम्पत्योः सहाधिकारात् । **(४९१) विभाषा सपूर्वस्य ४।१।३४॥** पतिशब्दान्तस्य सपूर्वस्य प्रातिपदिकस्य नो वा स्यात् । गृहस्य पतिः गृहपतिः--गृहपत्नी । 'अनुपसर्जनस्य' इतीहोत्तरार्थमनुवृत्तमपि न पत्युर्विशेषणम् , किन्तु तदन्तस्य । तेन बहुव्रीहावपि । दृढपत्नी, दृढपतिः । वृषलपत्नी--वृषलपतिः । अत्र 'वृषलस्य पत्नी' इति व्यस्ते कथमिति

यामित्यधिकृतम् । तदाह—पतिशब्दस्येति । यज्ञेनेति । यज्ञसम्बन्धः यज्ञेन सह स्वामितया सम्बन्धः, यज्ञफलभोक्तृत्वमिति यावत् । तदाह—तत्कर्तृकस्येति । वसिष्ठकर्तृकस्येत्यर्थः । ननु वसिष्ठकर्तृकयज्ञस्य वसिष्ठ एव फलभोक्तेत्युचितम्, न तु तत्स्त्र्यपि, 'स्वर्गकामः' इत्यादिपुंल्लिङ्गशब्दैः पुंस एवाधिकारावगमात् इत्यत आह—दम्पत्योः सहाधिकारादिति । एतच्च प्रकृतसूत्रे भाष्ये स्पष्टम् । अत एव पूर्वमीमांसायां षष्ठस्य प्रथमपादे 'लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः' इत्यधिकरणे 'स्ववतोस्तु वचनादैककर्म्यं स्यात्' इत्यधिकरणे च दम्पत्योः सहाधिकारः सिद्धान्तितः । प्रपञ्चितं चैतदस्माभिरध्वरमीमांसाकुतूहलवृत्तौ ।

विभाषा सपूर्वस्य । पत्युर्न इत्यनुवर्तते । प्रातिपदिकादित्यनुवृत्तं षष्ठ्या विपरिणतं पत्युरित्यनेन विशेष्यते, तदन्तविधिः । सपूर्वस्येत्येतत् पतिशब्दान्तप्रातिपदिके अन्वेति । पूर्वावयवसहितस्येत्यर्थः । तदाह–पतिशब्दान्तस्येत्यादिना । यज्ञसंयोगाभावेऽपि अप्राप्तविभाषेयम् । गृहपतिः—गृहपत्नीति । नत्वपक्षे 'ऋन्नेभ्य' इति ङीप् । अत्र गृहपतिशब्दः पतिशब्दान्तो गृहशब्दात्मकपूर्वावयवसहितश्चेति भावः । न च 'ग्रहणवता प्रातिपदिकेन' इति निषेधः शङ्क्यः, 'शूद्रा चामहत्पूर्वा' इति लिङ्गेन तस्य स्त्रियामित्यधिकारे अप्रवृत्तेरुक्तत्वात् । ननु दृढः पतिः यस्या इति बहुव्रीहौ दृढपतिः, दृढपत्नीति नत्वविकल्प इष्यते, स तु न सम्भवति, 'अनुपसर्जना'दित्यधिकारात् , पतिशब्दस्यात्रोपसर्जनत्वात् । न च 'अनुपसर्जनात्' इति नात्र सम्बध्यते इति वाच्यम् , उत्तरत्रानुवृत्तये इहापि तदनुवृत्तेरावश्यकत्वादित्यत आह—अनुपसर्जनस्येत्यादि । किन्तु तदन्तस्येति । सपूर्वस्येति पत्यन्तस्य श्रुतत्वेन तद्विशेषणताया एव न्याय्यत्वात् । अवान्तरवाक्यार्थबोधोत्तरमेव अनुपसर्जनत्वविशेषणप्रवृत्त्या तत्काले सपूर्वस्य श्रुतत्वेन तेनैव सम्बन्धे जाते सति पश्चात् पतिशब्देऽपि पुनर्व्यापारे मानाभावादिति भावः । तेनेति । अनुसर्जनत्वस्य पत्यन्तविशेषणत्वेनेत्यर्थः । यज्ञसंयोगग्रहणमनुवर्त्य प्राप्तविभाषा कुतो न स्यादित्यत आह—वृषलपत्नीति । पाति रक्षतीति पतिः, वृषलस्य पतिः स्त्री इति विग्रहः । अपशूद्राधिकरणे शूद्राणां यज्ञाधिकारनिराकरणादिह यज्ञसंयोगाभावादप्राप्तमेव नत्वं विभाष्यत इति भावः ।

आक्षिपति—अथेति । आक्षेपारम्भद्योतकोऽथशब्दः, प्रश्नद्योतको वा । 'मङ्गला-

चेन्न। पत्नीव पत्नीत्युपचारात्। यद्वा। आचारक्विवन्तात्कर्तरि क्विप्। अस्मिंश्च पक्षे, पत्नियौ, पत्नियः। इतीयङ्विषये विशेषः। सपूर्वस्य किम्। गवां पतिः स्त्री। (४६२) नित्यं सपत्न्यादिषु ४।१।३५॥ पूर्वविकल्पापवादः। समानस्य सभावोऽपि निपात्यते। समानः पतिर्यस्याः सा सपत्नी। एकपत्नी। वीरपत्नी। (४६३)

---

नन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ।' इत्यमरः। व्यस्ते इति। विग्रहवाक्ये इत्यर्थः। ततश्च सपूर्वत्वाभावात् न प्रकृतसूत्रेण नत्वविकल्पः। यज्ञसंयोगाभावाच्च न पूर्वसूत्रेण। अतो वृषलस्य पत्नीत्यनुपपन्नमित्याक्षेपः। इति चेन्नेति। इत्याक्षिपसि चेत् नैतद्युक्तमित्यर्थः। पत्नीवेति। यज्ञसंयुक्तायां द्विजभार्यायां यः पत्नीशब्दो व्युत्पादितः, तस्यैव शूद्रस्त्रियामपि अयज्ञसंयुक्तायां पाणिग्रहणादिधर्मपुरस्कारेण गौण्या वृत्त्या प्रयोगः। यथा गङ्गायामिति स्त्रीलिङ्गस्य तीरे प्रयोगः। उक्तं च भाष्ये—'तुषजकस्य पत्नीत्युपमानात्सिद्धम्' इति। यद्वेति। प्रौढिवादमात्रमिदम्, स्त्रियामाचारक्विवन्तप्रकृतिकक्विवन्तशब्दाः न सन्तीति 'अनुपसर्जनात्' इत्यत्रोक्तत्वात्। सपूर्वस्येति किमिति। प्रातिपदिकविशेषणतया पतिशब्दस्य तदन्तलाभे सति पतिशब्दान्तस्य सपूर्वत्वाव्यभिचारात् सपूर्वस्येति किमर्थमिति प्रश्नः। गवां पतिः स्त्रीति। स्वामिनी रक्षित्री वेत्यर्थः। असमस्तत्वात् गवामित्यस्य न पूर्वावयवत्वमिति भावः। यद्यपि 'यत्र सङ्घाते पूर्वो भागः पदं तत्र चेत् प्रातिपदिकसञ्ज्ञा भवति तर्हि समासस्यैव' इति नियमेन गवां पतिः इति समुदायस्य पत्यन्तत्वेऽपि प्रातिपदिकत्वाभावादेवात्र नत्वविकल्पो न भवति। तथापि गवां पतिरित्यत्र पतिशब्दस्यैव व्यपदेशिवत्त्वेन तदन्ततया नत्वविकल्पप्राप्तौ तन्निवृत्त्यर्थं सपूर्वस्येति वचनमिति भावः। वस्तुतस्तु 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधादिह केवलपतिशब्दस्य पतिशब्दान्तत्वाभावादेव नत्वविकल्पनिवृत्तिसिद्धेः सपूर्वस्येति स्पष्टार्थमित्याहुः।

नित्यं सपत्न्यादिषु। विषयसप्तम्येषा। सपत्न्यादिविषये तत्सिद्ध्यर्थं नित्यं नत्वमित्यर्थः। पूर्वविकल्पेति। 'विभाषा सपूर्वस्य' इति विकल्पस्यापवाद इत्यर्थः। आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं स्पष्टार्थम्। ननु समानः पतिर्यस्याः सा सपत्नीति वक्ष्यति। तत्र समानशब्दस्य सभावोऽनुपपन्नः, अतः सदृशपर्यायेण सहशब्देनैव बहुव्रीहिराश्रयणीयः। एवं च 'वोपसर्जनस्य' इति वैकल्पिकः सभाव इत्यत आह—समानस्येति। इह गणे समान, एक, वीर भ्रातृ, पुत्र इति समानादयः पठिताः। अतः समानशब्देनैव बहुव्रीहिरुचितः। तस्य च निपातनादेव नित्यं सभाव इति भावः। समानः पतिरिति। अत्र समानशब्द एकपर्यायः, पतिशब्दस्तु विवाहनिबन्धनभर्तृशब्दपर्यायः। वीरपत्नीति। वीरः पतिर्यस्या इति विग्रहः। सपत्न्यादित्वान्नत्वम्।

**पूतक्रतोरै च ४।१।३६॥** अस्य स्त्रियामै आदेशो ङीप्च । 'इयं त्रिसूत्री पुंयोग एवेष्यते' ( वा २४४९ )। पूतक्रतोः स्त्री पूतक्रतायी। 'यया तु क्रतवः पूताः स्यात्पूतक्रतुरेव सा'। (४९४) **वृषाकप्यग्निकुसितकुसिदानामुदात्तः ४।१।३७।** एषामुदात्त ऐ आदेशः स्यान्ङीप्च । वृषाकपेः स्त्री वृषाकपायी । 'हरविष्णू वृषाकपी' इत्यमरः । 'वृषाकपायी श्रीगौर्योः' इति च । अग्नायी । कुसितायी-कुसिदायी । कुसिदशब्दो ह्रस्वमध्यो न तु दीर्घमध्यः। ( ४९५ ) **मनोरौ वा**

---

पूतक्रतोरै च । ऐ इति लुप्तप्रथमाकम् । पूतक्रतुशब्दात् स्त्रियां ङीप्स्यात् , प्रकृतेरैकारोऽन्तादेशश्चेत्यर्थः । इयं त्रिसूत्रीति । वार्तिकमिदम् । पूतक्रतोरित्यादिसूत्रत्रयं पुंयोगात् स्त्रियां वृत्तावेवेत्यर्थः । पूतक्रतायीति । पूतः क्रतुः येन सः पूतक्रतुः, तस्य स्त्रीत्यर्थे ङीप् , तकारादुकारस्य ऐकारः, तस्य आयादेश इति भावः । पुंयोग इत्यस्य प्रयोजनमाह—ययेति । वृषाकप्यग्नि । ऐ चेत्यनुवर्तते । तदाह—एषामिति । वृषाकपायीति । ङीप् , प्रकृतेरुदात्तः ऐकारोऽन्तादेशः, तस्य आयादेशः, तस्य एकारस्थानिकत्वात् तदाकारोऽप्युदात्तः 'अनुदात्तं पदमेकवर्जम्' इति अवशिष्टानामचामनुदात्तत्वम् । उदात्त इति किम् । 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति वृषाकपिशब्दो मध्योदात्तः—'नाहमिन्द्राणि रारण सख्युर्वृषाकपेः' इति यथा । अन्ते एकस्मिन् लघौ सति द्वयोर्वा लघ्वोः सतोः पूर्वः बह्वच्कस्य गुरुः उदात्तः स्यादिति तदर्थः । ततश्च पकारादाकारस्य उदात्तत्वे 'अनुदात्तं पदमेकवर्जम्' इत्यवशिष्टानामचामनुदात्तत्वमिति स्थितिः । तथा च पकारादिकारस्यानुदात्तत्वात् तत्स्थाने ऐकारः अनुदात्तः स्यात् । ततश्च तदादेशभूतायादेशाकारस्याप्यनुदात्तत्वं स्यात् । अतोऽत्र उदात्तत्वविधिः । अग्नायीति । 'अग्निर्मूर्धा' इत्यादौ अग्निशब्दः अन्तोदात्तः, ततो ङीप् , प्रकृतेरैकारोऽन्तादेशः, स च सवर्णान्तर्यादुदात्त एव भवति । अतस्तदादेशायादेशाकारस्य उदात्तत्वसिद्धेरुदात्त इत्येतदग्निशब्दे अन्वयं न लभते प्रयोजनाभावात् । कुसितायी कुसिदायीति । कुसितकुसिदे अव्युत्पन्नप्रातिपदिके देवताविशेषस्य नामधेये, फिट्स्वरेणान्तोदात्ते। ततो ङीप् ऐकारश्चान्तादेशः, स च भवर्णान्तर्यादुदात्त एवेति कुसितकुसिदशब्दयोरपि उदात्त इत्यस्य नान्वय इति वृत्त्यादिग्रन्थेषु स्थितम् । अत एवाह—कुसिदशब्दो ह्रस्वमध्यो न तु दीर्घमध्य इति । दीर्घमध्यत्वे इति 'लघावन्ते' इति मध्योदात्ततया शिष्टस्वरेण दकारादकारस्यानुदात्ततया तत्स्थाने ऐकारस्यानुदात्ततया तत्स्थाने आयाकारस्यानुदात्तत्वापत्त्या तन्निवृत्त्यर्थे तत्राप्युदात्तग्रहणस्यावश्यकत्वादुदाहृतवृत्त्यादिग्रन्थविरोधः स्पष्ट एवेति भावः ।

४।१।३८॥ मनुशब्दस्यौकारादेशः स्यादुदात्तैकारश्च वा। ताभ्यां सन्नियोगशिष्टो ङीप्च। मनोः स्त्री मनायी-मनावी-मनुः। (४६६) वर्णादनुदात्तात्तोपधात्तो नः ४।१।३९॥ वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद् वा ङीप्स्यात् तकारस्य नकारादेशश्च। एनी-एता। रोहिणी-रोहिता। 'वर्णानां

मनोरौ वा। ऐ चेति, उदात्त इति, ङीबिति चानुवर्तते। तदाह—मनुशब्दस्येति। उदात्तैकारश्च वेति। औकारः, उदात्त ऐकारश्च वा स्यादित्यर्थः। उदात्तैकार इति समासनिर्देशादुदात्त इत्यौकारेण न सम्बध्यत इति सूचितम्, एतच्च वृत्तिपदमञ्जर्योः स्पष्टम्। चकारात् ङीप् ऐकारौकाराभ्यां समुच्चीयते तदाह—ताभ्यामिति। ऐकारौकाराभ्यां समुच्चयेनैव विहित इत्यर्थः। ततश्च तदुभयाभावपक्षे ङीबपि नेति लभ्यते, 'सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' इति परिभाषावशादिति भावः। इयं तु परिभाषा 'पूतक्रतोरै च' इति सूत्रभाष्ये स्थिता। मनायीति। 'यद्वै किं च मनुरवदत्' इत्यादौ मनुशब्दः 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तः। 'धान्ये नित्' इत्यतो निदित्यनुवृत्तौ 'शॄस्वृस्निहि' इत्यादिना मनेरुप्रत्ययविधेः। ततश्च शिष्टस्वरेण नकारादुकारः अनुदात्तः। तस्य स्थाने उदात्त ऐकारः, तस्यायादेशः ङीप् चेति भावः। मनावीति। अत्रौकारोऽनुदात्त एव। मनुरिति। ऐकारस्य औकारस्य चाभावे तत्सन्नियोगशिष्टो ङीबपि नेत्युक्तमेव।

वर्णादनु। वेति ङीबिति चानुवर्तते। अनुदात्तादिति वर्णादित्यस्य विशेषणम्, तदन्तविधिः। तोपधादित्यपि वर्णादित्यत्रान्वेति, तकारः उपधा यस्येति विग्रहः। तकारादकार उच्चारणार्थः। वर्णादित्यस्य 'स्वं रूपं शब्दस्य' इति वर्णशब्दादिति नार्थः, तोपधत्वासम्भवात्। किं तु वर्णवाचिनः शब्दादित्यर्थो विवक्षितः। वर्णादित्येतत्प्रातिपदिकादित्यस्य विशेषणम्, तदन्तविधिः। त इति षष्ठी, तकारस्येत्यर्थः। न इत्यत्र नकारादकार उच्चारणार्थः, नकार इत्यर्थः। तदाह—वर्णवाचीत्यादिना। तदन्तादनुपसर्जनादिति। अनुपसर्जनादित्यनुवृत्तं वर्णान्ते अन्वेति, न तु वर्णादित्यत्रेति भावः। एनी एतेति। श्वेतेत्यर्थः। एतशब्दात् ङीप्, तकारस्य नकारश्च। ङीबभावे टाबेव। नत्वं तु न भवति, ङीपा संनियोगशिष्टत्वात्। एतशब्दः श्वेतपर्याय इति कल्पसूत्रव्याख्यातारो धूर्तस्वामिभवस्वामिरुद्रदत्तप्रभृतयो याज्ञिकाः। रोहिणी—रोहितेति। रोहितशब्दो रक्तवर्णपर्यायः। ङीपि णत्वे रोहिणीति। तदभावे टाप्। अनुदात्तान्तत्वं गमयितुमाह—वर्णानामिति। तान्तेत्यत्र तकारादकार उच्चारणार्थः। त, ण, ति, नि, त् इत्यन्तानाम् आदिरुदात्त इत्यर्थः। एतः शोणः शितिः, पृश्निः, पृषत् इति क्रमेणोदाहरणानि। प्रकृते एतशब्दे एकारस्य, रोहितशब्दे ओका-

तणतिनितान्तानाम्' (फि २३) इति फिट्सूत्रेणाद्युदात्तः। 'त्र्येण्या च शलल्या' इति गृह्यसूत्रम्। त्रीण्येतान्यस्या इति बहुव्रीहिः। अनुदात्तात् किम्। श्वेता। 'घृतादीनां च' (फि २१) इत्यन्तोदात्तोऽयम्। अत इत्येव। शितिः स्त्री। 'पिशङ्गादुपसङ्ख्यानम्' (वा २४५५)। पिशङ्गी–पिशङ्गा। 'असितपलितयोर्न' (वा २४५३)। असिता। पलिता। 'छन्दसि क्नमेके (वा २४५४) असिक्नी। पलिक्नी। अवदातशब्दस्तु

---

रस्य चोदात्तत्वे 'अनुदात्तं पदमेकवर्जम्' इति शिष्टस्वरेण अवशिष्टानामनुदात्तत्वाद-न्तानुदात्तत्वमित्यर्थः।

ननु 'अनुपसर्जनात्' इत्यनुवृत्तस्य श्रुतवर्णविशेषणत्वमेव युक्तम्, न तु तदन्तवि-धलभ्यवर्णान्तविशेषणत्वमित्यत आह—त्र्येण्येति। त्रीणि एतानि श्वेतानि अवयव-संस्थानानि यस्या इति बहुव्रीहौ त्र्येतशब्दः। तत्र एतशब्दस्य वर्णवाचिनः उपसर्ज-नत्वात् ङीब्नत्वे न स्याताम्। अनुपसर्जनादित्यस्य वर्णान्तविशेषणत्वे तु त्र्येतशब्द-स्यानुपसर्जनत्वान्न दोष इति भावः। शलल्येति। शल्यकाख्यमृगविशेषस्य अङ्गरुहा सूची शललीति याज्ञिकप्रसिद्धः। गृह्यमिति। गृह्यन्ते संगृह्यन्ते औपासनाग्निसा-ध्यकर्माण्यत्रेति व्युत्पत्त्या आपस्तम्बाश्वलायनादिप्रणीतकल्पसूत्रविशेष उच्यते। त्र्येण्येति णत्वमार्षम्। यजुर्वेदे तु 'त्रि एण्या शलल्या निवर्तयेत' इति पठितम्। तत्र त्रीणि एतानि श्वेतानि यस्या इति विग्रहः। यणभावो णत्वं च आर्षमिति वेदभाष्ये भट्टभास्करः। ननु 'वर्णानां तणति' इति श्वेतशब्दस्याद्युदात्तत्वात् शिष्टस्वरेणानु-दात्तान्तत्वमेवेत्यत आह—घृतादीनामिति। अत इत्येवेति। 'अजाद्यतष्टाप्' इत्यस्मादत इत्यनुवर्तत एवेत्यर्थः। शितिः स्त्रीति। 'शिती धवलमेचकौ' इत्यमरः। पिशङ्गीति। 'लघावन्ते' इति पिशङ्गशब्दस्य मध्योदात्ततया शिष्टस्वरेणानुदात्तान्तत्वेऽपि तोप-धत्वाभावात् अप्राप्तो ङीबुपसङ्ख्यायते। 'अन्यतो ङीष्' इति वक्ष्यमाणङीषोऽप-वादः। स्वरे विशेषः। असितेति। वार्तिकमेतत्। असितशब्दस्य कृष्णवाचकतया पलि-तशब्दस्य श्वेतवाचकतया च 'वर्णादनुदात्तात्' इति प्राप्ते ङीब्नत्वे निषिध्येते। छन्दसि क्नमेके इति। इदमपि वार्तिकम्। असितपलितयोस्तकारस्य ङीप्सन्नियोगेन क्नादेशम्। अन्ये आचार्या इच्छन्तीत्यर्थः। असिक्नीति। असितशब्दात् ङीप्, तकारस्य क्नादेशे पररूपे 'यस्येति च' इत्यकारलोपः। क्न् इति नकारान्त एवादेश इत्यन्ये। एवं पलिक्नीत्यपि। 'पलितं जरसा शौक्ल्यम्' इत्यमरः। ननु 'अवदातः सितो गौरः' इति कोशादवदातशब्दस्य वर्णवाचित्वात् 'लघावन्ते, इति मध्योदा-त्ततया अनुदात्तान्तत्वात्तोपधत्वाच्च 'वर्णादनुदात्तात्' इति ङीब्नत्वे स्यातामित्यत आह—अवदातशब्दस्त्विति। 'अवदातः सिते पीते शुद्धे' इति कोशात् 'दैप् शोधने'

न वर्णवाची, किं तु विशुद्धवाची। तेन अवदाता इत्येव। (४६७) **अन्यतो ङीष्** ४।१।४०॥ तोपधभिन्नाद्वर्णवाचिनोऽनुदात्तान्तात्प्रातिपदिकात्स्त्रियां ङीष्स्यात्। कल्माषी। सारङ्गी। 'लघावन्ते द्वयोश्च बह्वषो गुरुः' (फि ४२) इति मध्योदात्तावेतौ। अनुदात्तान्तात् किम्। कृष्णा। कपिला। (४६८) **षिद्गौरादिभ्यश्च** ४।१।४१॥ षिद्भ्यो गौरादिभ्यश्च ङीष्स्यात्। नर्तकी। गौरी। 'आमनडुहः स्त्रियां वा' (वा ४३७८)। अनडुही—अनड्वाही। 'पिप्पल्यादयश्च' (ग ४७)। आकृतिगणोऽयम्। (४६९) **सूर्यतिष्यागस्त्यमत्स्यानां**

---

इत्यस्मात् तप्रत्यये अवदातशब्दस्य व्युत्पत्तेश्चेति भावः। एतच्च 'पुंयोगादाख्यायाम्' इति सूत्रे भाष्ये स्पष्टम्। 'अवदातः सितो गौरः' इति कोशस्तु शुद्धत्वसाधर्म्याद् बोध्यः।

अन्यतो ङीष्। पञ्चम्यास्तसिः। वर्णादिति, अनुदात्तादिति तोपधादिति चानुवर्तते। तत्र कस्मादन्यत इत्यपेक्षायां तोपधादिति प्रतियोगित्वेनान्वेति—तोपधापेक्षया अन्यत इति। तदाह—तोपधभिन्नादिति। कल्माषीति। चित्रवर्णेत्यर्थः। 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः। सारङ्गीति। 'सारङ्गः शबले त्रिषु' इत्यमरः। 'फिषोऽन्त उदात्तः' इत्यन्तोदात्तत्वशङ्कां व्युदस्यति—लघाविति। एतत्सूत्रं 'वृषाकपी'ति सूत्रव्याख्यावसरे व्याख्यातम्। कृष्णा, कपिलेति। फिट्स्वरेणान्तोदात्ताविमाविति भावः। षिद्गौरादिभ्यश्च। ष् इत् येषां ते षितः, गौरः आदिः येषां ते गौरादयः, षितश्च गौरादयश्चेति द्वन्द्वः। नर्तकीति। 'नृती गात्रविक्षेपे' 'शिल्पिनि ष्वुन्' 'षः प्रत्ययस्य' इति षकार इत्, 'हलन्त्यम्' इति नकारश्च इत्, 'युवोरनाकौ' इति अकादेशः, लघूपधगुणः, रपरत्वम्। नर्तकशब्दाद् ङीष् टापोऽपवादः, 'यस्येति च' इत्यकारलोप इति भावः। गौरीति। श्वेतेत्यर्थः। फिट्स्वरेण अन्तोदात्तत्वाद् 'अन्यतो ङीष्' इत्यप्राप्तेरिह विधिरिति भावः संज्ञाशब्दो वायम्। 'उमा कात्यायनी गौरी' इत्यमरः। 'दशवर्षा भवेद् गौरी' इति स्मृतिः। अनुडुही—अनुड्वाहीति। अनडुहः स्त्रीत्यर्थः। अनो वहतीति यौगिको वा। गौरादिगणे निपातनादेव ङीषि आम्विकल्पः। एवं च 'अनुडुहः स्त्रियाम् आम् वेति वक्तव्यम्' इति वार्तिकं न कर्तव्यमिति भावः। पिप्पल्यादयश्चेति। अत्र गौर, मत्स्य, मनुष्य, शृङ्ग, गवय, हय, मुकय, गौतम, अनड्वाही, अनुडुही, तरुण, तलुन श्वन् इति पठित्वा 'पिप्पल्यादयश्च' इत्युक्त्वा पिप्पली, हरीतकी, कोशातकी, पृथिवी, मातामही इत्यादि पठितम्। तत्र पिप्पलीशब्दस्य जातिवाचित्वेऽपि नियतस्त्रीलिङ्गत्वाद् ङीषोऽप्राप्तेरिह पाठः। श्वन्शब्दस्य तु 'ऋन्नेभ्यः' इति ङीपि प्राप्ते ङीषर्थं इह पाठः। स्वरे विशेषः। आकृतिगणोऽयमिति। गौ-

**य उपधायाः ८।४।१४९॥** अङ्गस्योपधाया यस्य लोपः स्यात्स चेद्यः सूर्याद्यवयवः। 'मत्स्यस्य ङ्याम्' (वा ४१९८)। 'सूर्यागस्त्ययोश्छे च ङ्यां च' (वा ४१९९)। 'तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्' (वा ४२००)। मत्सी। 'मातरि षिच्च' (वा २७१०) इति षित्त्वादेव सिद्धे गौरादिषु मातामहीशब्दपाठादनित्यः षितां ङीष्। दंष्ट्रा। (५००) **जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ४।१।४२॥** एभ्य एकादशभ्यः प्राति-

---

रादिरित्यर्थः। 'पिप्पल्यादेरवान्तरगणत्वे प्रयोजनं चिन्त्यम्।

मत्स्यशब्दात् गौरादित्वात् ङीषि विशेषं दर्शयितुमाह—सूर्यतिष्यागस्त्य। 'ढे लोपोऽकद्र्वाः' इत्यतो लोप इत्यनुवर्तते। य इति षष्ठी अङ्गस्येत्यधिकृतमवयवषष्ठयन्तम्, तच्च उपधायामन्वेति। अङ्गस्य उपधाभूतो यो यकारः तस्य लोपः स्यादिति लभ्यते। सूर्यतिष्यागस्त्यमत्स्यानामित्यप्यवयवषष्ठयन्तं यकारेऽन्वेति, न त्वङ्गविशेषणम्। तदाह—अङ्गस्येत्यादिना। मत्स्यस्य ङ्यामिति। तेनेह न, मत्स्यस्येदं मात्स्यम्। सूर्यागस्त्ययोश्छे च ङ्यां चेति। सूरीयः। सूरी। अगस्तीयः। अगस्ती। नेह, सौर्यम्। आगस्त्यम्। तिष्येति। 'नक्षत्रेण युक्तः कालः', 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इति च विहिते नक्षत्रसम्बन्धिनि अणि परतः तिष्यपुष्ययोर्यलोप इत्यर्थः। तत्र तिष्यस्य यलोपो नियम्यते। पुष्यस्य त्वप्राप्तो विधीयते। तिष्येण युक्तः पूर्णमासः, तिष्ये भवो वा तैषः। एवं पौषः। नेह—तिष्यस्य पुष्यस्य वाऽयं तैष्यः। पौष्यः। मत्सीति। मत्स्यशब्दात् गौरादिङीषि यलोपः, 'यस्येति च' इत्यकारलोपः। ननु 'पितृव्यमातुलमातामहपितामहाः' इति सूत्रे मातुः पिता पितुः पितेति विग्रहे मातृपितृभ्यां डामहचि टिलोपे मातामहपितामहशब्दौ निपातितौ। तत्र मातुर्माता पितुर्मातेति विग्रहे डामहचः षित्त्वं विहितम्—'मातरि षिच्च' इति। ततश्च षित्त्वविधानादेव ङीष् सिद्धेः गौरादिषु मातामहीशब्दपाठो न कर्तव्यः। न च 'मातरि षिच्च' इति न क्रियतामिति वाच्यम्, पितामहीत्यत्र ङीषर्थं तस्यावश्यकत्वादित्यत आह—मातरीति। दंष्ट्रेति। दंशो 'दाम्नीशस' इति करणे ष्ट्रन्। अत्र षित्त्वे सत्यपि न ङीषिति भावः। सूर्यादीनामङ्गानामुपधाभूतस्य यकारस्य लोप इति तु न व्याख्यातम्। तथा सति सौरी बलाकेति न सिध्येत्। 'सूर्येणैकदिक्' इत्यर्थे 'तेनैकदिक्' इत्यणि तदन्ताद् ङीपि अण्णन्तमङ्गम्, न तु सूर्यशब्द इति तदसिद्धिः। वचनं तु सूरी कुन्तीत्यत्र चरितार्थमित्यन्यत्र विस्तरः।

जानपद। जानपदेत्यादि कबरादित्यन्तमेकं पदम्। समाहारद्वन्द्वात् पञ्चमी।

पदिकेभ्यः क्रमाद्वृत्त्यादिष्वर्थेषु ङीष् स्यात् । जानपदी वृत्तिश्चेत्, अन्या तु जानपदी । उत्सादित्वादञन्तत्वेन 'टिड्ढा—' ( सू ४७० ) इति ङीप्याद्युदात्तः । कुण्डी अमत्रं चेत्, कुण्डान्या । 'कुडि दाहे' । 'गुरोश्च हलः' ( सू ३२८० ) इत्यप्रत्ययः । यस्तु 'अमृते जारजः कुण्डः' इति मनुष्यजातिवचनस्ततो जातिलक्षणो ङीष् भवत्येव । अमत्रे हि स्त्रीविषयत्वादप्राप्तो ङीष् विधीयते, न तु नियम्यते । गौणी आवपनं चेत्, गोणान्या । स्थली अकृत्रिमा चेत्, स्थलाऽन्या । भाजी श्राणा चेत्, भाजान्या । नागी स्थूला चेत्, नागाऽन्या । गजवाची नागशब्दः

---

जानपदीति । जनपदे भवेत्यर्थः । वृत्तिश्चेदिति । जीविका गम्या चेदित्यर्थः । ननु उत्सादित्वादञि ङीपैव सिद्धे ङीष्विधिर्व्यर्थ इत्यत आह—उत्सादित्वादिति । अनुदात्तौ सुप्पितौ' इति ङीप्याद्युदात्तत्वम् । ङीषि तु प्रत्ययस्वरेणान्तोदात्तत्वमिति भेद इत्यर्थः । कुण्डीति । 'पिठरं स्थाल्युखा कुण्डम्' इत्यमरः । 'पात्राऽमत्रे च भाजनम्' इति च । कुण्डशब्दस्य स्त्रीत्वमपि ङीष्विधिसामर्थ्यात् । 'पिठरे तु न ना कुण्डम्' इति विश्वः । कुण्डाऽन्येति । दहनीयेत्यर्थः । तदेव विशदयति—कुडि दाहे इति । गुरोश्चेति । गुरुमतो हलन्ताद्धातोः अप्रत्ययः स्यात् भावकर्मणोः स्त्रियामिति तदर्थः । ननु 'अमृते जारजः कुण्डो मृते भर्तरि गोलकः ।' इति मनुष्यजातिविशेषवाची कुण्डशब्दोऽपि प्रत्युदाहरणं किं न स्यादित्यत आह—यस्त्विति । जातिलक्षण इति । 'जातेरस्त्रीविषयात्' इति । जातिनिमित्तक इत्यर्थः । ननु अमत्रेऽपि वाच्ये कुण्डशब्दात् जातिलक्षणङीषि सिद्धे तद्वचनं व्यर्थम् । न च अमत्र एव ङीषिति नियमार्थं तदिति वाच्यम्, एवं सति मनुष्यजातिविशेषवाचित्वे ङीषोऽनुपपत्तेरित्यत आह—अमत्रे हि स्त्रीविषयत्वादिति । 'जातेरस्त्रीविषयात्' इत्यनित्यस्त्रीलिङ्गात् ङीष् विहितः । अमत्रे कुण्डशब्दो नित्यस्त्रीलिङ्गः, 'पदान्तरं विना स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वम्' इति स्वीकारात् । 'कुण्डी कमण्डलौ जारात् पतिपत्नीसुते पुमान् ।' इति मेदिनीकोशाच्च । तथा च कुण्डशब्दात् जातिलक्षणङीष् प्राप्त एव विधीयते, न तु नियम्यते । अतो मनुष्यजातिवाचित्वेऽपि ङीष् निर्बाध इति भावः ।

आवपनं चेदिति । ओप्यते निक्षिप्यते अस्मिन्नित्यर्थे आङ्पूर्वाद्वपेर्ल्युट् । गोणाऽन्येति । कस्याश्चिदिदं नाम । अकृत्रिमा चेदिति । इदानीन्तनपुरुषपरिष्कृता भूमिः कृत्रिमा, तद्भिन्नेत्यर्थः । स्थलाऽन्येति । कृत्रिमेत्यर्थः । 'स्थलयोदकं परिगृह्णन्ति' इति यजुर्वेदे । भाजीति । भज्यते सेव्यते इति कर्मणि घञ् । 'घञजबन्ताः पुंसि' इति तु प्रायिकम् । श्राणा चेदिति । 'यवागूरुष्णिका श्राणा' इत्यमरः । भाजाऽन्येति । अश्राणेत्यर्थः । 'श्रा पाके' क्तः । 'संयोगादेरातो धातोर्यण्वतः' इति निष्ठानत्वम्, णत्वं च,

स्थौल्यगुणयोगादन्यत्र प्रत्युक्त उदाहरणम् । सर्पवाची तु दैर्घ्यगुणयोगादन्यत्र प्रयुक्तः प्रत्युदाहरणम् । काली वर्णश्चेत्, कालान्या । नीली अनाच्छादनं चेत, नीलान्या, नील्या रक्ता शाटीत्यर्थः । 'नील्या अन्वक्तव्यः' (वा २६८०) इत्यन् । अनाच्छादनेऽपि न सर्वत्र, किं तु 'नीलादोषधौ' ( वा २४५६ )। नीली । 'प्राणिनि च' ( वा २४५८ )। नीली गौः । 'संज्ञायां वा' ( वा २४५७ )। नीली-नीला । कुशी अयोविकारश्चेत्, कुशाऽन्या । कामुकी मैथुनेच्छा चेत्, कामुकाऽन्या । कवरी केशानां सन्निवेशश्चेत्, कवराऽन्या । चित्रेत्यर्थः । (५०१) शोणात्प्राचाम् ४।१।४३ ॥

पक्वेत्यर्थः नागशब्दस्य स्थौल्ये काप्यप्रसिद्धेराह—राजवाचीति । वर्णश्चेदिति । वर्णः प्रवृत्तिनिमित्तं चेदित्यर्थः । वर्णविशिष्टा चेदिति यावत् । अन्यथा कालशब्दस्य 'गुणे शुक्लादयः पुंसि' इति पुंस्त्वापातात् । सूत्रे वर्णा इति च्छेदः । अर्श आद्यजन्ताट्टाप् । कालान्येति । क्रौर्ययुक्तेत्यर्थः । संज्ञाशब्दो वा । अनाच्छादनं चेदिति । वस्त्रभिन्नं गवादिकमित्यर्थः । नीलाऽन्येति । नन्वत्राच्छादनस्य विशेष्यत्वे स्त्रीत्वानुपपत्तिः । पटीत्यस्य विशेष्यत्वेऽपि नीलवर्णवती पटीत्यर्थे ङीपः अप्रसक्तिरेव, 'नीलादोषधौ, प्राणिनि च' इति नियमस्य वक्ष्यमाणत्वादित्यत आह—नील्या रक्तेति । नील्या ओषध्या रागविशेषं प्राप्तेत्यर्थः । ननु कथमयमर्थो लभ्यत इत्यत आह—नील्या अनिति । 'तेन रक्तं रागात्' इत्यत्र इदं वार्तिकम् । नीलीशब्दादन्प्रत्यये सति 'यस्येति च' इति लोपे नीलशब्दः, तस्य नीलीरक्तवाचकस्य विशेषणांशे ओषधिवाचकत्वसत्त्वात् 'नीलादोषधौ' 'प्राणिनि च' इति नियमे सत्यपि ङीपः प्राप्तेस्तन्निवृत्त्यर्थमनाच्छादनग्रहणमिति भावः । ननु नीला कुण्डीत्यत्रापि अनाच्छादनत्वात् ङीप् स्यादित्याशङ्क्य आह—अनाच्छादनेऽपीति । 'नीलादोषधौ, प्राणिनि च' इति वार्तिकमेतत् । नीलात् अनाच्छादनेऽपि भवन् ङीप् ओषधौ प्राणिनि चैव स्यात्, न त्वन्यत्रेत्यर्थः । एवञ्च नीला कुण्डीत्यादौ न ङीपिति भावः । 'संज्ञायां वा' इत्यपि वार्तिकम् । संज्ञायामुक्तविषये तदन्यत्रापि ङीष् वा स्यादित्यर्थः । अयोविकारश्चेदिति । फाला इति प्रसिद्धः । कुशाऽन्येति । छन्दोगसूत्रे 'प्रस्तोता तु कुशाः कारयेद्यज्ञियस्य वृक्षस्य खदिरस्य दीर्घसत्रेष्वेके प्रादेशमात्रीः कुशपृष्ठास्त्वक्तस्समामज्जते' इति प्रसिद्धा । कामुकीति । कामयितुं शीलमस्या इति विग्रहे 'लषपत' इत्यादिना कमेरुकञ् । मैथुनेच्छावती चेदित्यर्थः । अर्शआद्यजन्ताट्टाप् । कामुकाऽन्येति । धनादीच्छावतीत्यर्थः । शोणात् प्राचाम् । 'रोहितो लोहितो रक्तः शोणः कोकनदच्छविः । इत्यमरः । 'वर्णानां तणतिनितान्तानाम्' इति शोणशब्दः आद्युदात्तः अनुदात्तान्तः । 'अन्यतो ङीष्' इति नित्यं ङीषि प्राप्ते विकल्पार्थमिदम् ।

शोणी-शोणा ( ५०२ ) वोतो गुणवचनात् ४।१।४४॥ उदन्ताद् गुणवाचिनो वा ङीप् स्यात्। मृद्वी—मृदुः। उतः किम्। शुचिः। गुण इति किम्। आखुः।

वोतो गुणवचनात्। प्रातिपदिकादित्यनुवृत्तम्। वा उत इति च्छेदः। उतो गुणवचनस्य प्रातिपदिकस्य विशेषणात् तदन्तविधिः। तदाह—उदन्तादिति। वा ङीविति। ङीषिति नात्रानुवर्तते। 'गुणवचनात् ङीबाद्युदात्तार्थः' इति वार्तिकादिति भावः। मृद्वीति। मृदुशब्दात् ङीपि यण्। अत्र—

सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः।'

इति भाष्ये गुणलक्षणमुक्तम्। सत्त्वं द्रव्यं समवायिकारणं तत्रैव निविशते समवैति यः स गुण इत्यन्वयः। द्रव्यमात्रसमवेत इति यावत्। मात्रपदात् सत्ताजातिर्व्यवच्छिद्यते, तस्याः द्रव्यगुणक्रियावृत्तित्वात्। अथ द्रव्यत्वे अतिव्याप्तिवारणाय आह—अपैतीति। कतिपयद्रव्येभ्योऽपगच्छतीत्यर्थः। द्रव्यत्वस्य सर्वद्रव्यवृत्तित्वान्नातिव्याप्तिरिति भावः। एवमपि गोत्वे अतिव्याप्तिवारणाय आह—पृथग्जातिषु दृश्यते इति। पृथक् भिन्नाः जातयः येषां ते पृथग्जातयः। भिन्नजातीयद्रव्यवृत्तिरिति यावत्। गोत्वस्य गोजातीयेष्वेव सत्त्वात् भिन्नजातीयेषु अश्वादिष्वसत्त्वान्नातिव्याप्तिरिति भावः। एवमपि क्रियायामतिव्याप्तिवारणाय आह—आधेयश्चाक्रियाजश्चेति। आधीयते उत्पाद्यते इत्याधेयः उत्पाद्यः अक्रियाजः अनुत्पाद्यः। उत्पाद्यत्वानुत्पाद्यत्वाभ्यां द्विविध इति यावत्। गुणो नित्यानित्यभेदेन द्विविधो भवति। नित्यगतानां गुणानां नित्यत्वात्, अनित्यगतानामनित्यत्वात्। क्रियायास्तु सर्वस्या अप्युत्पाद्यत्वान्नातिव्याप्तिरिति भावः। एवमपि द्रव्ये अतिव्याप्तिः, तस्य अवयवद्रव्यसमवेतत्वात् असमवायिकारणसंयोगनाशे ततोऽपायात् विजातीयपार्थिवाद्यवयवेषु सत्त्वात्, नित्यानित्यभेदसत्त्वाच्च। अत आह—असत्त्वप्रकृतिरिति। अद्रव्यस्वभाव इत्यर्थः। द्रव्यभिन्न इति यावत्। अत्र मात्रपदेन सत्ताजातेः, अपैतीत्यनेन द्रव्यत्वस्य, पृथग्जातिषु दृश्यते इत्यनेन गोत्वादिजातेश्च निरासात् तद्भिन्नत्वमिति लब्धम्। 'आधेयश्चाक्रियाजश्च' इत्यनेन क्रियानिरासात् क्रियाभिन्नत्वं लब्धम्। असत्त्वप्रकृतिः इत्यनेन द्रव्यस्य निरासात् द्रव्यभिन्नत्वं लब्धम्। तथा च जातिभिन्नत्वे सति क्रियाभिन्नत्वे सति द्रव्यभिन्नत्वे सति समवेतत्वं गुणलक्षणं निष्कृष्टं वेदितव्यम्। समवेतत्वाभावादभावनिरासः। अत्र 'नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता' एव इति तार्किकाभिमतविशेषपदार्थाङ्गीकारे तद्भिन्नत्वमपि निवेश्यम्। 'आकडारादेका संज्ञा' इति सूत्रभाष्ये तु 'समासकृदन्ततद्धितान्ताव्ययसर्वनामजातिसंख्यासंज्ञाशब्दव्यतिरिक्तमर्थवच्छब्दरूपं गुणवचनसंज्ञं भवति' इत्युक्तम्। तदिदं प्रकृतसूत्रभाष्यस्थलक्षणस्या-

'खरुसंयोगोपधान्न' ( वा २४६० ) । 'खरुः, पतिंवरा कन्या' । पाण्डुः ।
( ५०३ ) बह्वादिभ्यश्च ४।१।४५॥ एभ्यो वा ङीष्स्यात् । बह्वी—बहुः ।
'कृदिकारादक्तिनः' ( ग ५० ) । रात्रिः—रात्री । 'सर्वतोऽक्तिन्नर्थादित्येके' ( ग ५१ )
शकटिः—शकटी । अक्तिन्नर्थात् किम् । अजननिः । क्तिन्नन्तत्वादप्राप्ते विध्यर्थं

स्योक्तस्य प्रपञ्चनपरं वेदितव्यम् । परन्तु आकडारसूत्रभाष्ये संख्याशब्दभिन्नत्वमप्युपात्तम् । तदप्युक्तलक्षणे निवेश्यम् । न चैवमपि मृदुपट्वादिशब्दानां गुणविशिष्टद्रव्यवाचित्वात् गुणवचनत्वाभाव इति वाच्यम् । गुणवचनेत्यन्वर्थसंज्ञया गुणोपसर्जनद्रव्यवाचित्वस्यैव विवक्षितत्वात् । एवञ्च रूपशब्दस्य न गुणवचनता, तस्य प्राधान्येन रूपवाचितया रूपवति प्रयोगाभावात् । रूपादिशब्दस्यापि गुणवचनशब्देन ग्रहणे 'गुणवचनेभ्यो मतुपो लुगिष्टः' इत्यत्रापि रूपादिशब्दानां ग्रहणापत्तौ रूपो घटः इत्यादिप्रयोगापत्तेः । प्रपञ्चितं चैतदरुणाधिकरणेऽस्माभिरध्वरमीमांसाकुतूहलवृत्तौ ।

शुचिरिति । शुक्लेत्यर्थः । 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः ।' इत्यमरः । न च शुचिधातोः 'इगुपधात् कित्' इत्यौणादिके इप्रत्यये उत्पन्नस्य शुचिशब्दस्य आकडारसूत्रे भाष्ये कृदन्तस्य गुणवचनत्वपर्युदासादेवात्र ङीष् न भविष्यतीति वाच्यम्, उणादीनाम् अव्युत्पत्तिपक्षाश्रयणात् । आखुरिति । मूषिकेत्यर्थः । आखोस्तु जातिविशिष्टद्रव्यवचनत्वादुक्तगुणवचनत्वाभावान्न ङीप् । 'खरुसंयोगोपधान्न' इति वार्तिकम् । खरुश्च संयोगोपधश्चेति समाहारद्वन्द्वः । खरुशब्दात् संयोगोपधाच्च 'वोतो गुणवचनात्' इति ङीष् नेत्यर्थः । खरुशब्दमप्रसिद्धत्वात् व्याचष्टे—पतिंवरा कन्येति । पतिलाभोत्कण्ठावतीत्यर्थः । औत्कण्ठ्यलक्षणगुणोपसर्जनद्रव्यवाचितया गुणवाचित्वात् प्राप्तिः । पाण्डुरिति । श्वेतेत्यर्थः । संयोगोपधत्वात् न ङीष् । बह्वादिभ्यश्च । गुणवचनत्वादेव सिद्धे बहुग्रहणं व्यर्थमेवेति प्राञ्चः । वस्तुतस्तु अनुपदोदाहृताकडारसूत्रभाष्यरीत्या सङ्ख्याशब्दानां गुणवचनत्वाभावात् अप्राप्तस्य ङीषो विधानार्थं बहुग्रहणमित्याहुः । बह्वी बहुरिति । वैपुल्यवाची बहुशब्दोऽयम् । त्रित्वादिसमनियतसङ्ख्याविशेषवाचित्वे तु एकवचनानुपपत्तेः । वैपुल्यवाचित्वेऽपि 'बहुगणवतुडति सङ्ख्या' इति सङ्ख्याशब्दत्वात् न गुणवचनत्वमिति न वैयर्थ्यमिति भावः । 'कृदिकारादक्तिनः' इति बह्वाद्यन्तर्गणसूत्रम् । कृतो य इकारस्तदन्तात् प्रातिपदिकात् ङीष् वा स्यात्, न तु क्तिन्नन्तादित्यर्थः । रात्रिः रात्रीति । 'राशदिभ्यां त्रिप्' इति राधातोरौणादिकस्त्रिप् । गुणवचनत्वाभावात् उदन्तत्वाभावाच्चाप्राप्ते वचनम् । 'सर्वतोऽक्तिन्नर्थादित्येके' । इत्यपि बह्वाद्यन्तर्गणसूत्रमेव । कृदिकारान्तादकृदिकारान्तादपि ङीष् वा स्यात्, न तु क्तिन्नर्थकप्रत्ययान्तादित्यर्थः । शकटिः शकटीति । शकटिशब्दस्य अव्युत्पन्नप्रातिपदिकत्वात् कृदन्तत्वाभावात् सर्वत इति वचनम् । अव्युत्पत्तिपक्षे रात्रिशब्दोऽप्युदाहरणं

पद्धतिशब्दो गणे पठ्यते । 'हिमकाषिहतिषु च' (सू ९९४) इति पद्भावः । पद्धतिः-पद्धती । (५०४) **पुंयोगादाख्यायाम् ४।१।४८॥** या पुमाख्या पुंयोगात्स्त्रियां वर्तते ततो ङीष्स्यात् । गोपस्य स्त्री गोपी । 'पालकान्तान्न' (वा २४६१)

---

बोध्यम् । अजननिरिति । 'स्त्रियां क्तिन्' इत्यधिकारे 'आक्रोशे नञ्यनिः' इति नञि उपपदे जनेरनिप्रत्ययः, अक्तिन इत्युक्तौ अत्र निषेधो न स्यात् । अतः अक्तिन्नर्थादित्युक्तिरिति भावः । ननु हन्धातोः स्त्रियां कर्मणि क्तिनि 'अनुदात्तोपदेश' इत्यादिना नलोपे हतिशब्दः तस्य क्तिन्नन्तत्वात् कथं पद्धतिशब्दात् ङीपित्यत आह—क्तिन्नन्तत्वादिति । गणे इति । बह्वादिगण इत्यर्थः । ननु पादाभ्यां हतिरिति विग्रहे 'कर्तृकरणे कृता बहुलम्' इति तृतीयासमासे सुब्लुकि पाद हति इति स्थिते कथं पदादेशः, 'पादः पत्' इत्यत्र कृतसमासान्तलोपस्यैव पादशब्दस्य ग्रहणात् भत्वाभावाच्च । 'पादस्य पदाज्यातिगोपहतेषु' इत्यपि न सम्भवति, तस्य आज्यादिष्वेव परेषु प्रवृत्तेरित्यत आह—हिमकाषीति । हिमादिषु परेषु पादशब्दस्य पदादेशः स्यादिति तदर्थः ।

पुंयोगात् । पुंयोगादिति हेतौ पञ्चमी । आख्यायामिति पञ्चम्याः सप्तम्यादेशः, 'सुपां स्थाने सुपो भवन्तीति वक्तव्यम्' इत्युक्तेः । आख्येत्यनेन वाचकः शब्दो विवक्षितः, कस्य वाचकः इत्यपेक्षायां पुंयोगादित्युपस्थितत्वात् पुंस इति लभ्यते । तथा च आख्यायामित्यनेन पुंसि प्रसिद्धात् शब्दादिति लभ्यते । पुंयोगादिति स्त्रियामित्यत्रान्वेति । तथा च पुंयोगमाश्रित्य लक्षणया स्त्रियां वर्तमानादिति लभ्यते । तदाह—या पुमाख्येत्यादिना । ङीषिति । 'अन्यतो ङीष्' इत्यतस्तदनुवृत्तेरिति भावः । 'वोतो गुणवचनात्' इति पूर्वसूत्रे तु 'गुणवचनात् ङीबाद्युदात्तार्थः' इति वार्तिकात् ङीप् लब्ध इति न तत्रास्यानुवृत्तिः । गोपस्य स्त्रीति । गाः पातीति गोपः, 'आतोऽनुपसर्गे कः' । तज्जायायां तु गोरक्षणाभावेऽपि तद्भार्यात्वात् तद्व्यपदेशः । ततश्च पुंयोगमाश्रित्य लक्षणया स्त्रियां वर्तमानत्वात् ङीषि 'यस्येति च' इत्यकारलोप इति भावः । हरेः स्त्री, शम्भोः स्त्री इत्यादौ न ङीष्, स्त्रीप्रत्ययविधिप्रकरणे अत इत्यनुवृत्तेः । या तु स्वयमेव गाः पाति, न तु गोपस्य स्त्री, सा तु गोपा, तत्र गोपशब्दस्य स्वत एव स्त्रियां वृत्त्या पुंयोगादवृत्तेः । न च गोपस्य माता श्वश्रूः मातुलानी वा गोपीति स्यादिति वाच्यम्, 'अकुर्वती पापं भर्तृकृतान् वधबन्धादीन् यथा लभते एवं तच्छब्दमपि' इति भाष्यस्वारस्येन जायापत्यात्मकस्यैव पुंयोगस्य विवक्षितत्वात् । दुहितरि केकयी देवकी इत्यादयस्तु गौरादौ पाठ्या इति शब्देन्दुशेखरे स्थितम् । आख्याग्रहणं किम्-प्रसूता । अयं हि शब्दो जातप्रसवामाह । स च प्रसवः पुंयोगनिमित्तकः, तन्निमित्तास्य स्त्रियां वृत्तिः, न त्वयं पुंसि प्रसिद्धः, अतो न ङीष् ।

शेषणमिति विवेकः । वचनं सङ्ख्या । एकः । द्वौ । बहवः । इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनम् । (५३३) सम्बोधने च २।३।४७। इह प्रथमा स्यात् । हे राम ।

( ५३४ ) कारके १।४।२३।। इत्यधिकृत्य । ( ५३५ ) कर्तुरीप्सिततमं

---

सामान्यपरिमाणं तत्परिच्छिन्नो व्रीहिरिति बोधः फलति। अन्यथा द्रोणाख्यपरिमाणविशेषपरिच्छिन्नो व्रीहिरिति बोधः स्यात् । परिमाणसामान्यं न प्रतीयेत । तदर्थमिह परिमाणग्रहणमित्यर्थः ।

वचनं संख्येति । पूर्वाचार्यैस्तथा संज्ञाकरणादिति भावः । तथा च सङ्ख्यामात्रे प्रथमेति लभ्यते । न च लिङ्गमात्राधिक्ये परिमाणमात्राधिक्ये इतिवत् सङ्ख्यामात्राधिक्ये इति कुतो न व्याख्यातमिति वाच्यम् , केवललिङ्गपरिमाणयोः क्वाप्युपस्थित्यभावेन तथा व्याख्यानेऽपि एकद्विबहुशब्देष्वेकत्वद्वित्वबहुत्वानां केवलानां नियतोपस्थितिसत्त्वेन सङ्ख्यामात्रे इत्येव व्याख्यातुमुचितत्वात् । अत एव भाष्ये वचनग्रहणांशे एकः द्वौ बहवः इत्युदाहृतम् । ननु एकः द्वौ बहवः इत्यत्र एकत्वद्वित्वबहुत्वानां नियमेनोपस्थित्या 'प्रातिपदिकार्थे' इत्येव सिद्धे वचनग्रहणं व्यर्थमित्यत आह—इहेति । प्रकृतिभिरेवैकत्वादीनामुक्तत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन प्रथमाविभक्तेरप्राप्तौ तदर्थं वचनग्रहणमित्यर्थः । तथा च विभक्तिरिहानुवादिका शब्दसाधुत्वार्थं प्रयोज्या, 'न केवला प्रकृतिः प्रयोक्तव्या, नापि प्रत्ययः' इति अनभिहितसूत्रभाष्यसिद्धन्यायादिति भावः । इदमेवाभिप्रेत्योक्तं भाष्ये—'उक्तेष्वप्येकत्वादिषु प्रथमा' इति । मात्रग्रहणात् कारकाद्याधिक्ये प्रथमा न भवति । अत्र 'अर्थे प्रथमा' इत्येव सूत्रयितुमुचितमिति प्रौढमनोरमादौ प्रपञ्चितम् ।

सम्बोधने च । इहेति । सम्बोधने अधिके गम्येऽपि प्रथमा स्यादित्यर्थः । सम्बोधनमभिमुखीकृत्य ज्ञापनम् । हे रामेति । मां पाहीति शेषः । इह रामं प्रति मद्रक्षणं ज्ञाप्यम् । न च 'हे राजन् सार्वभौमो भव' इत्यत्र सार्वभौमशब्दादपि सम्बोधनप्रथमा स्यादिति वाच्यम् , सम्यक् बोधनमेव हि सम्बोधनम् समित्युपसर्गबलात् । श्रोतरि विशिष्य राजत्वादिना ज्ञाते सत्येव तं प्रति कश्चिदर्थो ज्ञापयितुं शक्यः, नान्यथा । ततश्च सम्बोधनविभक्तिरियमनुवाद्यविषयैवेति लभ्यते । न तु विधेयविषया । तथा च सार्वभौमत्वस्य विधेयस्य इदानीमसिद्धत्वेन अनुवाद्यत्वाभावाच्च सार्वभौमशब्दात् सम्बोधनविभक्तिरिति मञ्जूषायां विस्तरः । इति प्रथमा विभक्तिः ।

अथ द्वितीया विभक्तिः । कारके । इत्यधिकृत्येति । संज्ञा वक्ष्यन्ते इति शेषः । क्रियाजनकं कारकम् , करोति—क्रियां निर्वर्तयतीति भाष्ये व्युत्पत्तिदर्शनात् । ब्राह्मणस्य पुत्रं पश्यतीत्यत्र ब्राह्मणस्यान्यथासिद्धत्वान्न कारकत्वम् । कर्तुरीप्सित । कारके इत्यनुवृत्तं प्रथमया विपरिणम्यते । आप्तुमिष्यमाणमीप्सितम् । आप्लृ व्याप्तौ, अस्मात्

कर्म १।४।४६॥ कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसञ्ज्ञं स्यात्। कर्तुः किम्। माषेष्वश्वं बध्नाति। कर्मण ईप्सिता माषाः, न तु कर्तुः। तमब्ग्रहणं किम्। पयसा ओदनं भुङ्क्ते। 'कर्म' इत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम्। अन्य-

सन्नन्तात् 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः। मतिरिच्छा, बुद्धेः पृथग्ग्रहणात्। 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी। अतिशयेनेप्सितमीप्सिततमम्। धातूपात्तव्यापाराश्रयः कर्ता। केनाप्तुमित्याकाङ्क्षायां कर्तृविशेषणीभूतव्यापारेणेत्यर्थाल्लभ्यते, तत् फलितमाह—कर्तुः क्रिययेत्यादिना। क्तप्रत्ययोपात्तं वर्तमानत्वं तु न विवक्षितम्। तेन कटं करोति, कृतवान् इत्यादौ नाव्याप्तिः। आप्तिः सम्बन्धः। एवं च कर्त्रा स्वनिष्ठव्यापारप्रयोज्यफलेन सम्बन्धुमिष्यमाणमित्यर्थः। यथा तण्डुलान् पचति इत्यत्र विक्लित्त्यनुकूलव्यापारः पचेरर्थः। तप्तोदकप्रस्वेदनकृतप्रशिथिलावयवकत्वात्मकं मृदुविशदत्वं विक्लित्तिः, तदनुकूलव्यापारः अधिश्रयणोदकासेचनैधोपकर्षणप्रज्वलनादिरूप इति 'कारके' इत्यादिसूत्रभाष्ये स्पष्टम्। अत एव, फलव्यापारयोर्धातुः' इति सिद्धान्तः। तथा च तण्डुलानधिश्रयणादिव्यापारेण विक्लेदयतीत्यर्थः। अधिश्रयणादिरूपकर्तृव्यापारप्रयोज्यविक्लित्तिरूपफलाश्रयत्वात् तण्डुलानां कर्मत्वम्। ननु कर्तृग्रहणं व्यर्थम्। न च व्यापारलाभाय तदिति वाच्यम्, केनाप्तुमित्याकाङ्क्षायां कारकाधिकारादेव तल्लाभादिति पृच्छति—कर्तुः किमिति। माषेष्वश्वं बध्नातीति। माषेषु भक्षणाय प्रवृत्त्यन्मुखमुदरव्यथाभयात्तद्भक्षणान्निवर्तयितुमन्यत्र बध्नातीत्यर्थः। अत्र माषाणां कर्मत्वनिवृत्त्यर्थं कर्तृग्रहणमिति भावः। कर्तृग्रहणे कृते तु नोक्तदोष इत्याह—कर्मण ईप्सिता माषाः, न तु कर्तुरिति। बन्धनकर्मीभूतस्याश्वस्यैवात्र माषा ईप्सिताः, नतु बन्धनकर्तुः, अश्वरक्षणस्यैव तदपेक्षितत्वादित्यर्थः।

तमब्ग्रहणं किमिति। तमबन्तमीप्सिततममित्येतत् किमर्थं 'कर्तुरुद्देश्यं कर्म' इत्येवास्त्विति प्रश्नः। पयसा ओदनं भुङ्क्ते इति। पयसा मिश्रमित्यर्थः। यद्यप्यत्र भोक्तुरोदन एव पयसा मिश्रः उद्देश्यः, न तु केवलं पयः, नापि केवल ओदनः। न ह्यसौ केवलपयःपानेन तुष्यति, नापि केवलौदनेन। तथापि यदा भुक्तवानेव पयोलिप्सया पुनरोदनभोजने प्रवर्तते तदेदं प्रत्युदाहरणम्। तत्र यद्यपि पय एव उद्देश्यं भुजिक्रियां प्रति, तथापि भुजिक्रियाकर्मीभूतमोदनं प्रति मिश्रणसाधनतया गुणत्वेनैव तदुद्देश्यं, न तु भोज्यत्वेन। अतस्तत्र पयसो गुणत्वेन ओदनस्य तत्संस्कार्यतया उद्देश्यत्वादोदनस्यैव ईप्सिततमत्वम्, न तु पयसोऽपि। तस्याप्योदन एव ईप्सिततमः, गुणेष्वस्य नानुरोध इति भावः। न च तमब्ग्रहणं किमर्थम्, 'कर्तुरीप्सितं कर्म' इत्येवास्त्विति वाच्यम्, 'अग्नेर्माणवकं वारयति' इत्यत्र माणवकस्य 'वारणार्थानामीप्सितः' इत्य-

था गेहं प्रविशतीत्यत्रैव स्यात्। ( ५३६ ) अनभिहिते २।३।१।। इत्यधिकृत्य। ( ५३७ ) **कर्मणि द्वितीया** २।३।२।। अनुक्ते कर्मणि द्वितीया स्यात्। हरिं भजति। अभिहिते तु कर्मणि 'प्रातिपदिकार्थमात्रे' इति प्रथमैव। अभिधानं च प्रायेण तिङ्कृत्तद्धितसमासैः। तिङ्, हरिः सेव्यते। कृत्, लक्ष्म्या सेवितः।

---

पादानत्वनिवृत्त्यर्थत्वादिति प्रकृतसूत्रभाष्ये स्थितम्। तदेतद्वारणार्थानामिति सूत्रव्याख्यावसरे स्फुटीभविष्यति। प्राचीनैस्तु कैश्चित् 'तमब्ग्रहणं किम्, पयसा ओदनं भुङ्क्ते' इति ग्रन्थः केवलतमब्ग्रहणप्रयोजनपरतया व्याख्यातः। ते भाष्यविरुद्धत्वादुपेक्ष्याः। ननु 'अधिशीङ्स्थासां कर्म' इत्यतोऽनुवृत्तेरिह कर्मग्रहणं व्यर्थमित्यत आह—कर्मग्रहणमाधारेति। अधिशीङित्यत्र हि आधारः इत्यनुवर्तते। इहापि तदनुवृत्तिर्माभूदिति कर्मग्रहणमित्यर्थः। ननु हरिं भजतीत्यादावसम्भवादेव तदनुवृत्तिर्न भविष्यतीत्यत आह—अन्यथा गेहं प्रविशतीत्यत्रैव स्यादिति। हरिं भजतीत्यादौ न स्यादित्येवकारार्थः।

अनभिहिते। इत्यधिकृत्येति। द्वितीयादि वक्ष्यत इत्यर्थः। कर्मणि द्वितीया। 'अनभिहिते' इत्यनुवृत्तं व्याचष्टे—अनुक्ते इति। हरिं भजतीति। तुष्ट्यनुकूलपरिचरणात्मकव्यापारो भजेरर्थः, पूजादिव्यापारेण हरिं तोषयतीत्यर्थः। कर्तृनिष्ठपूजनादिव्यापारप्रयोज्यतुष्टिरूपफलाश्रयत्वाद्धरिः कर्म। हरिनिष्ठतुष्ट्यनुकूल एकदेवदत्तनिष्ठो वर्तमानो व्यापार इति बोधः, 'भावप्रधानमाख्यातम्' इति निरुक्तकारयास्कवचनात्। क्रियाप्रधानं तिङन्तमिति तदर्थः। एवं च हरिनिष्ठतुष्ट्यनुकूलव्यापाराश्रयो देवदत्त इति प्रथमान्तविशेष्यकबोधस्तार्किकसम्मतो नादर्तव्य इति मञ्जूषादौ प्रपञ्चितम्। अभिहिते त्विति। हरिः सेव्यते इत्यादाविति शेषः। प्रथमैवेति। तद्विधावनभिहिताधिकाराभावात् 'अभिहिते प्रथमा' इति वार्तिकाच्चेति भावः। अत्र भाष्ये कटं करोति भीष्ममुदारं दर्शनीयं शोभनमित्यत्र कटशब्दादुत्पाद्यमानया द्वितीयया कर्मणोऽभिहितत्वात् भीष्मादिभ्यो द्वितीया न प्राप्नोतीत्याशङ्क्य 'तिङ्कृत्तद्धितसमासैरभिधानम्' इति परिगणितम्। तत्र प्रायेणेत्यध्याहृत्याह—अभिधानं चेति। समासैरित्यनन्तरं विवक्षितमिति शेषः। तिङिति। अविभक्तिकनिर्देशोऽयं तिङभिधानप्रदर्शनाय। हरिः सेव्यत इति। 'लः कर्मणि' इति कर्मणि लकारः। 'भावकर्मणोः' इत्यात्मनेपदम्। तिङन्तेन अभिहितत्वाद्धरेः कर्मणो न द्वितीयेति भावः। हरिं भजतीति वाक्यार्थः। कर्तृकर्मलकारयोरेकरूप एव वाक्यार्थबोध इति वैयाकरणसमयः। कृदिति। तिङितिवदयमप्यविभक्तिकनिर्देशस्तूदाहरणसूचनाय। लक्ष्म्या सेवित इति। हरिरिति शेषः। भूते कर्मणि क्तः, कर्तरि तृतीया। लक्ष्मीनिष्ठपरिचरणजनिततुष्ट्याश्रयो हरिरिति बो-

तद्धित, शतेन क्रीतः शत्यः । समास, प्राप्तः आनन्दो यं स प्राप्तानन्दः । क्वचिन्निपातेनाभिधानम् , यथा—'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ।' साम्प्रतमित्यस्य हि युज्यत इत्यर्थः । (५३८) तथायुक्तं चानीप्सितम् १।४।५०॥

धः । 'सत्त्वप्रधानानि नामानि' इति यास्कस्मृतिमनुरुध्य प्रातिपदिकेषु प्रथमान्तोपात्तविशेष्यकबोधस्यैव सर्वसम्मतत्वात् । अत्र सेवितहरेः कर्मणः कृता अभिहितत्वान्न द्वितीया । तद्धितेति । अयमप्यविभक्तिकनिर्देशस्तदुदाहरणसूचनाय । शतेन क्रीतः शत्य इति । पटादिरिति शेषः । 'शताच्च ठन्यतावशते' इति यत्प्रत्ययस्तद्धितः । अत्र कर्मणस्तद्धितेनोक्तत्वान्न द्वितीया । समासेति । अयमप्यविभक्तिकनिर्देशस्तदुदाहरणसूचनाय । प्राप्तानन्द इति । देवदत्तादिरिति शेषः । 'गत्यर्थाकर्मक' इत्यादिना प्राप्तेति कर्तरि क्तः । अन्यपदार्थकर्मणो बहुव्रीहिसमासेनाभिहितत्वान्न द्वितीयेति भावः । आनन्दकर्तृकप्राप्तिकर्मीभूत इति बोधः ।

प्रायेणेत्यस्य फलं दर्शयति—क्वचिदिति । विषवृक्षोऽपीति असाम्प्रतमित्यत्रान्वेति । संवर्ध्येत्यत्र छेत्तुमित्यत्र चान्वये द्वितीयापत्तेः । तत्र त्वर्थाद्विषवृक्षमिति गम्यते । न साम्प्रतमिति विग्रहे नञ्तत्पुरुषः । युज्यत इत्यर्थ इति । युजिर्योगे कर्मणि लकारः । औचित्या न युज्यते । औचित्ययुक्तो न भवतीति यावत् । 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । अत्र वृक्षस्य कर्मणो निपातेनाभिहितत्वान्न द्वितीयेति भावः । वस्तुतस्तु छेत्तुमिति तुमुन्नत्र दुर्लभः । कृष्णं द्रष्टुं यातीत्यत्रेव क्रियार्थक्रियोपपदत्वाभावेन 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इत्यस्याप्रवृत्तेः । 'शकधृष' इत्यादिनापि तुमुन्न, शकादियोगाभावात् । किन्तु 'इच्छार्थेषु' इत्यनुवृत्तौ 'समानकर्तृकेषु तुमुन्' इति तुमुन् , अक्रियार्थोपपदत्वेऽपि तस्य प्रवृत्तेः । यथा इच्छति भोक्तुमित्यादि । एवं च तुमुनस्साधुत्वाय इष्यत इत्यध्याहार्यम् । विषवृक्षोऽपि संवर्ध्य छेत्तुमिष्यत इति यत् तदसाम्प्रतम्—अयुक्तमित्यर्थः । एवं चात्रापि तिङाभिहितत्वादेव द्वितीयानिवारणात् तिङ्कृत्तद्धितसमासैरभिधानम् इति परिगणनवार्तिके प्रायेणेत्यध्याहारो विफल इति शब्देन्दुशेखरे स्थितम् । पक्वमोदनं भुङ्क्ते इत्यत्र तु पचिभुजिक्रियानिरूपिते द्वे कर्मत्वशक्ती । तत्र गुणभूतपचिनिरूपितकर्मत्वशक्तेः क्तप्रत्ययाभिहितत्वेऽपि प्रधानभूतभुजिक्रियानिरूपितामनभिहितां कर्मत्वशक्तिमादाय द्वितीया निर्बाधेति भाष्ये स्पष्टम् ।

ननु यथा बहुपटुरित्यादौ तद्धितेन बहुच्प्रत्ययेन उक्तत्वात् कल्पबादयो न भवन्ति, तथा क्रियते कटः इत्यादावपि तिङादिभिरुक्तत्वात् द्वितीयादयो न भविष्यन्ति, 'उक्तार्थानामप्रयोगः' इति न्यायात् । किंच कटं करोतीत्यादौ सावकाशा द्वितीया कृतः कटः इत्यादौ न भवत्येव, अनवकाशया प्रथमया बाधात् । न च वृत्तः

ईप्सिततमवत्क्रियया युक्तमनीप्सितमपि कारकं कर्मसञ्ज्ञं स्यात्। ग्रामं गच्छंस्तृणं स्पृशति। विषं भुङ्क्ते।

प्लक्षः इत्यादिः प्रथमाया अवकाश इति वाच्यम्, तत्र गम्यामस्तिक्रियां प्रति कर्तृत्वेन तृतीयाप्रसङ्गात्। अस्तु वा तत्र प्रथमाया अवकाशः। तथाप्युभयोः सावकाशत्वे परत्वात् प्रथमैव स्यात्। एवं चानभिहिताधिकारो व्यर्थ इति चेत्, मैवम्- 'कर्मणि द्वितीया' इत्यादीनां 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इत्यनयोश्च एकवाक्यतया कर्मणि यदेकत्वं द्वित्वं बहुत्वं वा तत्र एकद्विबहुवचनानीति लभ्यते। तत्र 'अनभिहिते' इत्यारम्भे अनभिहिते कर्मणि यदेकत्वं तत्र द्वितीयेत्येवमर्थः स्यात्। 'अनभिहिते' इत्यभावे तु कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमित्येव पर्यवस्येत्। तथा सति कृतः कट इत्यादौ क्तेन कर्ममात्रोक्तावपि तदेकत्वस्यानुक्ततया द्वितीयैकवचनं दुर्वारं स्यात्। न च प्रथमाया निरवकाशत्वं शङ्क्यम्, नीलमिदं न तु रक्तमित्यादौ विशेषणान्तरनिवृत्तितात्पर्यके अस्तिक्रियाया अनावश्यकत्वेन तत्र प्रथमायाः सावकाशत्वात्। नापि तत्र परत्वात् प्रथमैव भविष्यतीति वाच्यम्, कर्तव्यः कट इत्यादौ ततोऽपि परत्वेन कृद्योगलक्षणषष्ठीप्रसङ्गात्। एवं च सङ्ख्या विभक्त्यर्थ इति पक्षे 'अनभिहिते' इत्यारब्धव्यम्। यदि तु पञ्चकं प्रातिपदिकार्थः इत्यनाश्रित्य कारकं विभक्त्यर्थ इत्याश्रीयते, तदा कारकस्य क्तप्रत्ययादिनोक्तत्वान्न द्वितीयादिविभक्तिप्रसक्तिः। एकत्वादिसङ्ख्यावोधश्च प्रातिपदिकार्थमात्रे प्रवृत्तया प्रथमयैव सम्भवति। अतः 'अनभिहिते' इति नारब्धव्यमिति भाष्यकैयटकौस्तुभादिषु स्पष्टम्। अतिविस्तरस्तु मञ्जूषायामनुसन्धेयः।

तथायुक्तं चानीप्सितम्। तथाशब्दस्य सादृश्यवाचकस्य प्रतियोगिसापेक्षत्वादाह— ईप्सिततमवदिति। पूर्वसूत्रे सन्निहितत्वादीप्सिततममेव सादृश्यप्रतियोगीति भावः। क्रिययेति। क्रियाजन्यफलयुक्तमित्यर्थः। पूर्वसूत्रे ईप्सिततमस्य कर्मत्वमुक्तम्। द्वेष्योपेक्ष्यसङ्ग्रहार्थमिदं वचनम्। तत्र उपेक्ष्यमुदाहरति—ग्रामं गच्छंस्तृणं स्पृशतीति। संयोगानुकूलव्यापारः स्पृशेरर्थः। अत्र स्पृश्यमानस्य तृणस्य ईप्सिततमत्वाभावेऽपि गङ्गां स्पृशतीत्यादौ स्पृश्यमानस्येप्सिततमस्य गङ्गादेरिव क्रियाजन्यसंयोगात्मकफलाश्रयत्वात्कर्मत्वमिति भावः। द्वेष्यमुदाहरति—विषं भुङ्क्त इति। यदा कश्चिद्बलवता वैरिणा निगृह्यमाणो विषं भुङ्क्ते तदेदमुदाहरणम्। भुजेर्हि मुखे प्रक्षिप्तस्य गलविवरप्रवेशानुकूलः हनुचलनादिव्यापारोऽर्थः। विषस्य द्वेष्यतया ईप्सिततमत्वाभावेऽपि ओदनं भुङ्क्ते इत्यादौ भुज्यमानस्य ईप्सिततमस्य ओदनादेरिव क्रियाजन्यगलविवरणप्रवेशात्मकफलाश्रयत्वात् कर्मत्वमिति भावः। न च 'धातूपस्थाप्यफलशालि कर्म' इत्येवास्तु, किमीप्सितानीप्सितयोः पृथग्ग्रहणेनेति वाच्यम्, अग्नेर्माणवकं

( ५३९ ) अकथितं च १।४।५१॥ अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्।

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।
कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम्॥

'दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्म' इति परिगणनं कर्तव्यमित्यर्थः। गां दोग्धि पयः। बलिं याचते वसुधाम्।

---

वारयतीत्यत्र हि 'वारणार्थानामीप्सितः' इति माणवकस्यापादनत्वं प्राप्तं तन्निवृत्त्यर्थं 'कर्तुरीप्सिततमम्' इति वक्तव्यमेव। एवं च द्वेष्योदासीनसङ्ग्रहार्थं 'तथायुक्तं च' इति सूत्रमावश्यकमित्यास्तां तावत्।

अकथितं च। अकथितशब्दं व्याचष्टे—अपादानादिविशेषैरिति। अपादानं सम्प्रदानम् अधिकरणं कर्म करणं कर्ता हेतुः इति कारकसप्तकम्। तदेतद्यदा अपादानत्वादिविशेषात्मना न विवक्षितं, किन्तु सम्बन्धसामान्यात्मनैव तदा तत्कर्मसंज्ञकमित्यर्थः। ननु नटस्य शृणोति इत्यत्र नटसम्बन्धि श्रवणमित्यर्थके नटस्यापि कर्मत्वं स्यात्। तस्य क्रियान्वयित्वेन कारकत्वात्, वस्तुतः अपादानस्य सम्बन्धित्वेन विवक्षितत्वाच्चेत्याशङ्क्य परिगणयति—दुह्याजिति। वार्तिकार्थसङ्ग्रहश्लोकोऽयम्। अतो व्याचष्टे—दुहादीनामिति। दुह प्रपूरणे, टुयाचृ याच्ञायाम्, डुपचष् पाके। दण्ड दण्डनिपातने चुरादिः। निग्रह इत्यर्थः, इह ग्रहणार्थकः। रुधिर् आवरणे, प्रच्छ ज्ञीप्सायाम्। श्लोके प्रच्छीत्यत्रेकार उच्चारणार्थः। इका निर्देशे तु 'ग्रहिज्या' इति सम्प्रसारणप्रसङ्गात्। चिञ् चयने, ब्रूञ् व्यक्तायां वाचि, शासु अनुशिष्टौ, जि अभिभवे, मन्थ विलोडने, मुष स्तेये इति द्वादशानामित्यर्थः। चतुर्णामिति। णीञ् प्रापणे, हृञ् हरणे, कृष विलेखने, वह प्रापणे इति चतुर्णामित्यर्थः। कर्मणा यद्युज्यते इति। कर्मयुगित्यस्य व्याख्यानमिदम्। करणे उपपदे कर्मणि वाच्ये 'सत्सूद्विष' इत्यादिना क्विबिति भावः। यद्यपि।

'दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना।'

इति प्रकृतसूत्रस्थश्लोकवार्तिके पचिमथिमुष्यादयो न पठिताः। तथापि चकारेण तेऽपि सङ्ग्राह्या इति कैयटः।

गां दोग्धि पय इति। क्षरणानुकूलव्यापारः क्षरणपर्यायो दुहेरर्थः। क्षारणात्मकव्यापारप्रयोज्यक्षरणात्मकफलाश्रयत्वात्पयः कर्म। गौस्तु क्षरणे अपादानम्। तदपादानत्वमुपेक्ष्य सम्बन्धित्वात्मना गोर्विवक्षायां कर्मत्वमनेन भवति। ततश्च शेष-

 

अविनीतं विनयं याचते। तण्डुलानोदनं पचति। गर्गाञ्छतं दण्डयति। व्रजमव-

पष्ठीनिरासे द्वितीया भवति। तदिदमुक्तं प्रौढमनोरमायाम्—गोसम्बन्धि पयःकर्मकं दोहनमर्थ इति। तथा च न माषाणामश्नीयादित्यत्रेव शेषत्वविवक्षायां प्राप्तां षष्ठीं बाधितुमिदं सूत्रम्। गोरपादानत्वविवक्षायां तु पञ्चम्येव—गोः पयो दोग्धीति। गोसकाशात् पयः क्षारयतीत्यर्थः। यदि तु गौः पयोविशेषणं तदा षष्ठ्येव। गोसम्बन्धि यत्पयः तत् क्षारयतीत्यर्थः। एवमग्रेऽप्यूह्यमिति प्राचीनमतानुसारी पन्थाः। वस्तुतस्तु अपादानत्वादिविशेषरूपेणाविवक्षितं किन्तु कर्मत्वेनैव विवक्षितम् अकथितम्। तादृशमपादानादि कर्मसंज्ञकं स्यादित्यर्थः, कारकत्वव्याप्यसंज्ञानां स्वबोध्ये कर्मत्वादिशक्तिमत्त्वबोधकत्वात् बोधोऽपि तथैव। एवं च गां दोग्धि पयः इत्यत्र गोकर्मकं पयःकर्मकं च दोहनमित्येव बोधः। अवधेः सकाशाद् द्रवद्रव्यविभागो हि क्षरणम्। तच्च गोपनिष्ठव्यापारप्रयोज्यम्। एवञ्च कर्तृव्यापारप्रयोज्यक्षरणात्मकविभागविशेषाश्रयत्वात् गोः पयसश्च पूर्वसूत्राभ्यां कर्मत्वमस्त्येव। अतः उभयकर्मकबोध एव युक्तः, न तु सम्बन्धित्वेन गोर्बोधः। अत एव प्रकृतसूत्रभाष्ये 'अकथितम्' इत्यनेनैव सिद्धत्वात् पूर्वसूत्रद्वयस्य वैयर्थ्यमाशङ्क्य ईप्सितमात्रस्याप्यनेन कर्मसञ्ज्ञायां 'वारणार्थानाम्' इत्यस्यानवकाशतया अग्नेर्माणवकं वारयतीत्यत्र माणवकस्याप्यपादानसंज्ञायां प्राप्तायां 'कर्तुरीप्सिततमं कर्म' इत्यारब्धव्यम्। ततश्च द्वेष्योपेक्ष्यसङ्ग्रहाय 'तथायुक्तं चानीप्सितम्' इत्यारब्धव्यमिति समाहितम्—

'एतेन कर्मसंज्ञा सर्वा सिद्धा भवत्यकथितेन।
तत्रेप्सितस्य किं स्यात् प्रयोजनं कर्मसंज्ञायाः॥
यत्तु कथितं पुरस्तादीप्सितयुक्तं च तस्य सिद्ध्यर्थम्।
ईप्सितमेव तु यत्स्यात्तस्य भविष्यत्यकथितेन'॥

इति श्लोकद्वयेनेति शब्देन्दुशेखरे स्थितम्। 'एतेन कर्मे'त्यादिभाष्यार्थस्तु कैयटे भाष्यप्रदीपोद्द्योते च स्पष्ट इत्यास्तां तावत्।

बलिं याचते वसुधामिति। हरिरिति शेषः। बलिर्नामासुरविशेषः। मह्यं देहीति प्रार्थना याचेरर्थः। दानानुकूलो मह्यं देहीति शब्दप्रयोगरूपव्यापार इति यावत्। बलिकर्तृकं वसुधाकर्मकं दानं प्रार्थयत इत्यर्थः। कर्तुः कर्मत्वविवक्षायां द्वितीयेति नव्याः। प्रार्थनारूपव्यापारजन्यदाने जनकतया आश्रयत्वात्। बलिसम्बन्धि यद्वसुधाकर्मकं दानं तत् प्रार्थयत इत्यर्थ इति तु प्राचीनाः। अविनीतं विनयं याचत इति। अभ्युपगमप्रार्थना याचेरर्थः। यदा कश्चिद् बलवान् अविनीतः दुर्बलं कञ्चिद् बाधते तदा दुर्बलमधिकृत्येदं वाक्यं प्रवृत्तम्। अविनीतकर्तृकं विनयकर्मकमभ्युपगमं प्रार्थयत इत्यर्थः। कर्तुः कर्मत्वविवक्षायां द्वितीयेति नवीनाः। अविनीतसम्बन्धिनमभ्यु-

रुणद्धि गाम्। माणवकं पन्थानं पृच्छति। वृक्षमवचिनोति फलानि। माणवकं

पगममिति तु प्राचीनाः। तण्डुलानोदनं पचतीति। विक्लित्त्यनुकूलव्यापारः पचेरर्थः। तप्तोदकप्रस्वेदनजनितप्रशिथिलावयवकत्वात्मकं मृदुविशदत्वं विक्लित्तिः। तथा ओदनाख्यद्रव्यान्तरं प्रकृतिभूतेषु तण्डुलेषु समवेतं निष्पद्यत इति स्थितिः। तत्र शिथिलावयवसंयोगविशेषात्मिका विक्लित्तिः समवायसम्बन्धेन तण्डुलेषु वर्तते। ओदने तु जन्यजनकभावेन वर्तते। तण्डुलैः प्रकृतिभूतैः ओदनं करोतीत्यर्थः। तण्डुलसमवायिकारणिकां तत्समवेतामोदनजनिकां विक्लित्तिं निर्वर्तयतीत्यर्थः। तत्र व्यापारफलं विक्लित्तिं प्रति जन्यतया आश्रयत्वात् ओदनः प्रधानं कर्म। तादृशौदनजनिकां विक्लित्तिं प्रति समवायित्वेनाधारत्वात्। तण्डुलानां गुणकर्मत्वमिति तद्विवक्षायां द्वितीया। तण्डुलसम्बन्धिनीमोदनजनिकां विक्लित्तिं निर्वर्तयतीति तु प्राचीनाः।

गर्गान् शतं दण्डयतीति। दण्डधातुः ग्रहणानुकूलव्यापारार्थकः। ताडनादिना गर्गेभ्यः सुवर्णशतं गृह्णातीत्यर्थः। ताडनादिव्यापारप्रयोज्यग्रहणविषयत्वात् शतं प्रधान कर्म। गर्गाणां तु तद्ग्रहणावधित्वात् गुणकर्मत्वम्। ग्रहणं हि परकीयद्रव्यस्य परस्वत्वनिवृत्तिपूर्वकं स्वीकरणम्। तत्र स्वत्वविश्लेषे गर्गाणामवधित्वादपादानत्वम्, ग्रहणघटकतादृशविश्लेषप्रतियोगिभूतस्वत्वाश्रयत्वात् कर्मत्वं च। तत्रापादानत्वमनादृत्य कर्मत्वविवक्षायां द्वितीया। गर्गसम्बन्धिकमिति तु प्राञ्चः। व्रजमवरुणद्धि गामिति। निर्गमप्रतिबन्धपूर्वकयत्किञ्चिदधिकरणकचिरस्थित्यनुकूलबन्धनद्वारकपिधानादिव्यापारो रुधेरर्थः। गां निर्गमप्रतिबन्धपूर्वकं व्रजे चिरस्थितिकां करोतीत्यर्थः। अत्र चिरस्थितिं प्रति व्रजस्याधिकरणत्वमुपेक्ष्य गोद्वारा तत्स्थित्याश्रयतया कर्मत्वविवक्षायां द्वितीया। व्रजसम्बन्धिनं गोकर्मकं चिरस्थित्यनुकूलव्यापारं करोतीत्यर्थइति प्राचीनाः। माणवकं पन्थानं पृच्छतीति। जिज्ञासितव्यार्थज्ञानानुकूलः केन पथा गन्तव्यमित्यभिलापादिरूपव्यापारः पृच्छेरर्थः। तत्र विषयतया ज्ञानरूपफलाश्रयत्वात् पन्थाः प्रधानकर्म। तज्ज्ञानं प्रति जनकतया आश्रयत्वात् माणवको गुणकर्म। माणवकेन पन्थानं ज्ञातुमिच्छतीत्यर्थः। अत्र माणवके करणत्वमुपेक्ष्य कर्मत्वविवक्षायां द्वितीया। पथिविषयकं माणवकसम्बन्धि ज्ञानमिच्छतीत्यर्थ इति प्राञ्चः। वृक्षमवचिनोति फलानीति। वृक्षात् प्रच्याव्य फलान्यादत्त इत्यर्थः। प्रच्याव्यादानानुकूलव्यापारो लोष्टप्रहारादिरूपः अवपूर्वकचिञ्धातोरर्थः। तत्र प्रच्याव्यादानविषयत्वात् फलानि। प्रधानकर्म। प्रच्यवावधित्वाद् वृक्षोऽपादानम्। तस्यापादानत्वमुपेक्ष्य कर्मत्वविवक्षायां द्वितीया, वृक्षस्य फलप्रच्यवाश्रयत्वेन कर्मत्वात् प्रच्यवस्य विभागस्य द्विनिष्ठत्वात्। वृक्षसम्बन्धि यत् प्रच्युतफलादानं तत् करोतीत्यर्थ इति प्राचीनाः। माणवकं धर्मं

धर्मं ब्रूते-शास्ति वा। शतं जयति देवदत्तम्। सुधां क्षीरनिधिं मथ्नाति। देवदत्तं शतं मुष्णाति। ग्राममजां नयति-हरति-कर्षति-वहति वा। अर्थनिबन्धनेयं

ब्रूते शास्ति वेति। बोधनानुकूलव्यापारः 'चोदनालक्षणोऽर्थो धर्मः' इत्यादिशब्दप्रयोगात्मको ब्रूञोऽर्थः। माणवकाय धर्मं बोधयतीत्यर्थः। व्यापारप्रयोज्यबोधविषयत्वाद्धर्मः प्रधानकर्म। बोधविषयेण कर्मणाऽभिप्रेयमाणत्वान्माणवकः सम्प्रदानम्। तस्य सम्प्रदानत्वमुपेक्ष्य धर्मद्वारा बोधाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया। धर्मविषयकं माणवकसम्बन्धिनं बोधं जनयतीत्यर्थ इति तु प्राञ्चः। शासेस्तु धर्मं कुर्वित्यादिविधिघटितशब्दप्रयोगरूपो बोधनानुकूलव्यापारोऽर्थः। इतरत् प्राग्वत्।

शतं जयति देवदत्तमिति। जि अभिभवे। ग्रहणानुकूलताडनादिव्यापारो जयतेरर्थः। गर्गान् शतं दण्डयतीतिवद् व्याख्येयम्। सुधां क्षीरनिधिं मथ्नातीति। मन्थ विलोडने। द्रवद्रव्यगतसारोद्भवनानुकूलः मन्थानदण्डभ्रमजनितसङ्क्षोभात्मक आस्फालनपर्यायो व्यापारो मन्थेरर्थः। क्षीरोदधेः सकाशात् सुधां मन्थानदण्डभ्रमणेनोद्भावयतीत्यर्थः। व्यापारप्रयोज्योद्भवाश्रयत्वात् सुधा प्रधानकर्म। क्षीरोदधिस्तु उद्भवं प्रत्यपादानम्। तस्यापादानत्वमुपेक्ष्य सुधाद्वारा उद्भवाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया। सुधाश्रयं क्षीरोदधिसम्बन्धिनम् उद्भवं करोतीत्यर्थ इति तु प्राचीनाः। देवदत्तं शतं मुष्णातीति। अपश्यति देवदत्ते तदीयं सुवर्णशतं तस्मादपनीयादत्त इत्यर्थः। परस्वामिकद्रव्यस्य स्वामिनः सकाशादपनीयादानानुकूलः स्वाम्यज्ञातो निशासञ्चारभित्तिच्छिद्रकरणादिरूपव्यापारो मुषेरर्थः। व्यापारप्रयोज्यापनयनपूर्वकादानाश्रयत्वाच्छतं प्रधानकर्म। अपनयनावधित्वाद् देवदत्तोऽपादानम्। अपादानत्वमनादृत्यापनीयादेयद्रव्यस्वामितया देवदत्तस्यापनीयादानाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया। शतकर्मकं देवदत्तसम्बन्ध्यपनीयादानं करोतीत्यर्थ इति तु प्राञ्चः। ग्राममजां नयतीति। ग्रामे अजां प्रापयतीत्यर्थः। णीञ् प्रापणे। देशान्तरसंयोगानुकूलश्चलनगमनपर्यायो व्यापारः प्राप्तिः। न तु देशान्तरसंयोगमात्रम्। ग्रामं प्रति चलनदशायामेव प्राप्नोति गच्छतीति प्रयोगदर्शनात्। चलनेन संयोगे जाते अजा ग्रामं गता प्राप्तेत्येव दर्शनात्। तादृशप्राप्त्यनुकूलो दण्डोद्यमनमार्गान्तरगतिप्रतिबन्धपूर्वकयोग्यमार्गसंयोजनादिरूपव्यापारो नीधातोरर्थः। एतादृशव्यापारप्रयोज्यग्रामसंयोगतदनुकूलगमनोभयाश्रयत्वादजा प्रधानकर्म। तादृशाजाधारत्वात् ग्रामोऽधिकरणम्। अधिकरणत्वमनादृत्य ग्रामस्यापि तथाविधसंयोगाश्रयत्वात् कर्मविवक्षायां द्वितीया। अजाकर्मकं ग्रामसम्बन्धि नयनमित्यर्थ इति तु प्राचीनाः। एवमेव ग्रामम् अजां हरति कर्षति वहतीत्यपि व्याख्येयम्, तत्र देशान्तरसंयोगानुकूलम् अजाचलनं वाहकद्वारकं, तादृशचलनानुकूलव्यापारः स्कन्धग्रहणादिरूपो हरतेरर्थः। रज्जुबन्धनादिना

संज्ञा। बलिं भिक्षते वसुधाम्। माणवकं धर्मं भाषते-अभिधत्ते-वक्तीत्यादि। कारकं किम्। माणवकस्य पितरं पन्थानं पृच्छति। 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्' (वा ११०३-११०४)। कुरून् स्वपिति। मासमास्ते। गोदोहमास्ते। क्रोशमास्ते॥

---

बलाच्चालनं कृषेरर्थः। शकटाद्यारोपणादिरूपदेशान्तरसंयोगानुकूलप्राप्त्यनुकूलो वहेरर्थ इति विशेषः।

अर्थनिबन्धनेयं संज्ञेति। कैयटादिभिस्तथा व्याख्यातत्वादिति भावः। तथा च एतदर्थकधात्वन्तरसंयोगेऽपि द्विकर्मकत्वं लभ्यते। वस्तुतस्तु भाष्ये याचिरुधीत्याद्युदाहृतश्लोकद्वयपरिगणिताः दुहियाचिरुधिप्रच्छिभिक्षिचिञ्ब्रूञ्शासय इत्यष्टावेव धातवो द्विकर्मकाः। न तु पचिदण्डिजिप्रभृतयस्तद्बहिर्भूता अपि। अर्थनिबन्धनेयं सञ्ज्ञेत्यपि न युक्तम्, भाष्ये अदर्शनात्, भाष्ये याचिग्रहणेनैव सिद्धे भिक्षिग्रहणवैयर्थ्याच्च। नन्वेवं सति अहमपीदमचोद्यं चोद्ये इति 'तद्राजस्य बहुषु' इति सूत्रस्थभाष्यविरोधः। तत्र हि चुदधातुः चौरादिकः प्रच्छिपर्यायः, कर्मणि लट्, उत्तमपुरुषैकवचनम्। अप्रष्टव्यमहं पृच्छ्ये इत्यर्थः। अत्र चुदेर्द्विकर्मकत्वदर्शनात् अर्थनिबन्धनेयं सञ्ज्ञेति विज्ञायत इति चेत्, न—तावता चुदधातोरपि द्विकर्मकत्वलाभेऽपि तदन्येषां द्विकर्मकत्वे मानाभावात्। अत एव "कर्तुरीप्सिततमम्' इति सूत्रभाष्ये, द्व्यर्थः पचिः तण्डुलानोदनं पचतीति तण्डुलान्विक्लेदयन्नोदनं निर्वर्तयतीति गम्यते। तण्डुलानोदनं पचतीति तण्डुलविकारमोदनं निर्वर्तयतीति गम्यते। ओदनं पचतीति ओदनार्थान् तण्डुलान् विक्लेदयतीति गम्यत इत्युदाहृतम्। कर्तुरीप्सिततममित्येव तण्डुलानामपि कर्मत्वमिति पचेरेतदुदाहरणत्वमनुपपन्नमेव। तस्माद्भाष्यपरिगणितबहिर्भूतधातूनामन्तर्भावितण्यर्थकत्व एव द्विकर्मकत्वमिति शब्देन्दुशेखरे स्थितम्।

ननु कुरून्स्वपिति देवदत्तः, मासमास्ते इत्यादौ कुर्वादेरनुद्देश्यत्वात् 'कर्तुरीप्सिततमम्' इति कर्मत्वं न सम्भवति। कर्तुरेव स्वापादिक्रियाश्रयत्वात् 'तथायुक्तम्' इत्यपि न कर्मत्वमित्यत आह—अकर्मकधातुभिरिति। ग्रामसमूहात्मककुरुपञ्चालाऽवन्त्यादिपरोऽत्र देशशब्दः, न तु ग्रामादिरपि। तेन ग्रामे स्वपितीत्यत्र न द्वितीया। अत्र च 'अधिशीङ्स्थासां कर्म' इति लिङ्गम्। अन्यथा अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः इत्यत्राप्यनेनैव कर्मत्वसिद्धेस्तद्वैयर्थ्यं स्पष्टमेवेत्यभिप्रेत्योदाहरति—कुरून् स्वपितीति। देवदत्त इति शेषः। कुरुषु निद्रां करोतीत्यर्थः। देवदत्तात्तु न तृतीया, तिङा अभिहितत्वादिति भावः। कुर्वादिशब्दाः जनपदविशेषेषु स्वभावान्नित्यबहुवचनान्ताः। मासमास्ते इति। मासस्याधिकरणसंज्ञां बाधित्वा कर्मत्वम्।

**( ५४० ) गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ १।४।५२॥** गत्याद्यर्थानां शब्दकर्मणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात् ।

---

गोदोहमिति । दोहनं दोहः । भावे घञ् । भावो धात्वर्थः । गोदोहनकालोऽत्र विवक्षितः । न चेह कालत्वादेव सिद्धिः शङ्क्या, अहोरात्रसमूहस्य मासादेरेव तत्र ग्रहणात् । गन्तव्यत्वेनाध्वनो विशेषितत्वात् नियतपरिमाणः क्रोशादिरेव गृह्यत इत्यभिप्रेत्योदाहरति—क्रोशमास्ते इति । गन्तव्यत्वविशेषणादध्वन्यास्ते इत्यत्र न भवति । अनत्यन्तसंयोगार्थमिदं वार्तिकम् । अत्यन्तसंयोगे तु 'कालाध्वनोरत्यन्तसंयोगे' इत्येव सिद्धमिति प्राचीनानुसारी पन्थाः । वस्तुतस्तु 'अकर्मकधातुभिर्योगे' इत्यादिवचनं भाष्ये न दृश्यते । किन्तु अकर्मकधातूनां कथं द्विकर्मकत्वमित्याशङ्कायां 'कालभावाध्वगन्तव्याः कर्मसञ्ज्ञा ह्यकर्मणाम् । देशश्च' इत्युक्तम् । हिशब्दघटितत्वादिदं न विधायकम्, किन्तु अनुवादकमेव । तथाहि 'कुरून् स्वपिति' इत्यादौ स्वापादिक्रियया कुर्वादीन् व्याप्नोतीत्यर्थः, धातूनामनेकार्थतया कदाचित् तेषां स्वापादिकरणकव्यापनेऽपि वृत्तेः । ततश्च 'कर्तुरीप्सिततमम्' इत्येव सिद्धम् । यदा तु स्वपादिधातूनां स्वापादावेव वृत्तिः, न तु व्याप्तिपर्यन्ते, तदा कुरुषु स्वपिति, मासे आस्ते इत्यधिकरणत्वमेव । एतच्च 'अकथितं च' इत्यत्र 'कालाध्वनोरत्यन्तसंयोगे' इत्यत्र च भाष्ये स्पष्टम् । अत एव 'समां समां विजायते' इति सूत्रे समायां समायां विजायते इति विग्रहकथनं भाष्ये सङ्गच्छते । अन्यथा द्वितीयाप्रसङ्गात् । अत एव च लकारार्थप्रक्रियायाम् अत्यन्तापह्नवे लिड्वक्तव्यः, इत्यत्र 'कलिङ्गेष्ववात्सीः नाहं कलिङ्गान् जगाम' इति मूलकृदुदाहृते वाक्ये कलिङ्गेष्विति सप्तमी सङ्गच्छते ।

उक्तं च हरिणा—'कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः ।
सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते ॥' इति ।

इति शब्देन्दुशेखरे प्रपञ्चितम् ।

गतिबुद्धि । गतिश्च बुद्धिश्च प्रत्यवसानं च तानीति द्वन्द्वः । प्रत्यवसानं भक्षणम् । गतिबुद्धिप्रत्यवसानानि अर्थो येषामिति विग्रहः । शब्दः कर्म येषां ते शब्दकर्माणः, तेषामिति बहुव्रीहिः । अविद्यमानं कर्म येषां ते अकर्मकाः । उभयत्रापि कर्मशब्दः कारकपरः । गतिबुद्धिप्रत्यवसानार्थाश्च शब्दकर्माणश्च अकर्मकाश्च तेषामिति द्वन्द्वः । अणौ कर्ता अणिकर्ता । यच्छब्दोऽध्याहार्यः । तदाह—गत्याद्यर्थानामित्यादिना । णौ अनुत्पन्ने सति शुद्धधातुवाच्यां क्रियां प्रति यः कर्ता सः ण्यन्तधातुवाच्यां प्रयोजकव्यापारात्मिकां क्रियां प्रति कर्मसंज्ञकः स्यादित्यर्थः ।

शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत्।
आशयच्चामृतं देवान्वेदमध्यापयद्विधिम्॥
आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः।

गति—इत्यादि किम्। पाचयत्योदनम् देवदत्तेन। अण्यन्तानाम् किम्। गमयति देवदत्तो यज्ञदत्तं, तमपरः प्रयुङ्क्ते, गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः।

---

क्रमेणोदाहरति—शत्रूनिति। 'शत्रूनगमयत् स्वर्गम्' इति गत्यर्थकस्योदाहरणम्। शत्रवो युद्धे मृताः स्वर्गमगच्छन्, तान् यः शस्त्रघातेनागमयत् स्वर्गं स श्रीहरिर्मे गतिरित्यत्रान्वयः। अत्र गमेरण्यन्तावस्थायां शत्रवो गमनक्रियां प्रति कर्तारः, स्वर्गस्तु कर्म। ण्यन्तावस्थायां तु णिज्वाच्यां प्रयोजकव्यापारात्मिकां शस्त्रघातक्रियां प्रति घातयिता हरिः कर्ता। शत्रवस्तु कर्म। शस्त्रघातजन्या या क्रिया स्वर्गप्राप्तिस्तदाश्रयत्वात्। एवञ्च हरिः प्रयोजककर्ता, शत्रवस्तु प्रयोज्यकर्तारः। प्रयोजककर्तुर्हरेः शाब्दं प्राधान्यम्। अन्यानधीनत्वलक्षणं चार्थप्राधान्यमस्ति। शत्रूणां तु अन्याधीनस्वर्गप्राप्तिकर्तृत्वं प्रयोजकाधीनत्वात् गुणभूतमेव। शेषित्वलक्षणमार्थप्राधान्यं तु प्रयोज्यशत्रुगतकर्तृत्वस्यैव, प्रयोजकव्यापारस्य प्रयोज्यस्वर्गप्राप्त्यर्थत्वादिति स्थितिः। तत्रान्यानधीनत्वलक्षणस्यार्थप्राधान्यस्य शाब्दप्राधान्यस्य च प्रयोजकव्यापारे सत्त्वात् तदनुरोधि शत्रुगतं कर्मत्वं 'कर्तुरीप्सिततमम्' इत्येव सिद्धम्। अतो नियमार्थमिदं सूत्रम्। णिजर्थेनाप्यमानस्य प्रयोज्यकर्तुर्यदि कर्मत्वं भवति, तर्हि गत्यर्थादीनामेवेति। तेन पाचयति देवदत्तेन इत्यादौ प्रयोज्यकर्तुर्न कर्मत्वम्, किन्तु कर्तृत्वमेव। तदेतत् 'हेतुमति च' इति सूत्रे भाष्यकैयटयोः स्पष्टम्। उक्तं च हरिणा—'गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः। नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते।' इति। स्वधर्मेणेति तृतीययेत्यर्थः। एवं च स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो यन्निष्ठो व्यापारः स श्रीहरिर्मे गतिरिति वाक्यार्थः। एवमग्रेऽप्यूह्यम्। वेदार्थं स्वानवेदयदिति। बुद्ध्यर्थधातोरुदाहरणम्। स्वशब्दः आत्मीयपरः, स्वे स्वकीयाः विधिप्रमुखा, वेदार्थमविदुः, तान् हरिः वेदार्थमवेदयदित्यर्थः। अत्र स्वेषां प्रयोज्यकर्तॄणां कर्मत्वम्। आशयच्चामृतं देवानिति। प्रत्यवसानार्थस्य उदाहरणम्। देवा अमृतमाश्नन्, तान् हरिराशयदित्यर्थः। वेदमध्यापयद्विधिमिति। शब्दकर्मणः उदाहरणमेतत्। विधिः ब्रह्मा वेदमधीतवान्, तं हरिः अध्यापयदित्यर्थः। अत्र प्रयोज्यकर्तुर्विधेः कर्मत्वम्। आसयत्सलिले पृथ्वीमिति। अकर्मकस्योदाहरणम्। सलिले पृथ्वी आस्ते, तां हरिरासयदित्यर्थः। अत्र पृथिव्याः प्रयोज्यकर्त्र्याः कर्मत्वम्। यः मे श्रीहरिर्गतिरिति प्रतिवाक्यमन्वयः।

'नीवह्योर्न' (वा ११०९)। नाययति, वाहयति वा भारं भृत्येन। 'नियन्तृकर्तृकस्य वहेरनिषेधः (वा १११०)। वाहयति रथं वाहान्सूतः। 'आदिखाद्योर्न' (वा ११०९)। आदयति, खादयति वा अन्नं बटुना। 'भक्षेरहिंसार्थस्य न' (वा ११११) भक्षयत्यन्नं बटुना। अहिंसार्थस्य किम्। भक्षयति बलीवर्दान्सस्यम्। 'जल्पतिप्रभृतीनामुपसङ्ख्यानम्' (वा ११०७)। जल्पयति भाषयति

नीवह्योर्नेति। णीञ् प्रापणे, वह प्रापणे इत्यनयोः ण्यन्तयोः प्रयोज्यकर्तुः 'गतिबुद्धि' इत्युक्तं नेति वक्तव्यमित्यर्थः। नाययति वाहयति वेति। भृत्यो भारं नयति वहति वा, तं प्रेरयतीत्यर्थः अत्र प्रयोज्यकर्तुर्भृत्यस्य णिच्प्रकृत्यर्थं नयनं वहनं च प्रति कर्तुः प्रयोजकव्यापारं प्रति कर्मत्वे निवृत्ते णिच्प्रकृत्यर्थं प्रति कर्तृत्वस्यैव निरपवादत्वेनावस्थानात् तृतीया बोध्या। यद्यपि नीवह्योः प्रापणमर्थः, तथापि गत्यनुकूलव्यापारार्थके प्रापणे गतेर्विशेषणत्वेन प्रविष्टतया गत्यर्थत्वात् प्राप्तिरिति भावः। नियन्तृकर्तृकस्य वहेरनिषेध इति। एवञ्च तत्र प्रयोज्यकर्तुरुक्तस्य 'नीवह्योर्न' इति प्रतिषेधस्याभावे सति प्रयोज्यस्य कर्मत्वं वक्तव्यमिति फलितम्। वाहयतीति। वाहा-अश्वाः वहन्ति, तान् सूतः प्रेरयतीत्यर्थः। 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः।' इत्यमरः। 'वहन्ति बलीवर्दाः यवान्, वाहयति बलीवर्दान् देवदत्तः' इति भाष्योदाहरणात् नियन्ता पशुप्रेरक एव विवक्षितः। आदिखाद्योर्नेति। अद भक्षणे, खाद भक्षणे, अनयोः प्रयोज्यकर्तुः कर्मत्वं नेति वक्तव्यमित्यर्थः। प्रत्यवसानार्थकत्वात् प्राप्तिः। आदयति खादयति वेति। अत्ति खादति वा अन्नं बटुः, तं प्रेरयतीत्यर्थः। भक्षेरिति। अहिंसार्थकस्य भक्षधातोः प्रयोज्यकर्तुः कर्मत्वं नेति वक्तव्यमित्यर्थः। ननु 'गतिबुद्धि' इति सूत्रे अणौ कर्तुः णौ कर्मत्वमुक्तम्। भक्षधातुस्तु चुरादित्वात् नित्यं स्वार्थिकण्यन्तः। तस्याणिकर्ता नास्त्येव। अतस्तस्य कर्मत्वनिषेधोऽनुपपन्नः, अप्रसक्तत्वादिति चेत्, न—अत एव निषेधाल्लिङ्गात् 'गतिबुद्धि' इति सूत्रे णिग्रहणेन हेतुमत एव विवक्षितत्वात्। एवञ्च हेतुमण्णिचि अनुत्पन्ने सति अण्यन्तभक्षिधातुवाच्यां क्रियां प्रति कर्तुः हेतुमण्ण्यन्तवाच्यां क्रियां प्रति कर्मत्वमित्यर्थः पर्यवस्यतीति न दोषः। भक्षयत्यन्नं बटुनेति। चुरादिण्यन्तात् भक्षधातोर्हेतुमण्णिचि पूर्वणेर्लोपे हेतुमण्ण्यन्तात्तिबादौ सति भक्षयतीति रूपम्। एवञ्च भक्षयत्यन्नं बटुः, खादतीत्यर्थः। तं प्रेरयतीति ण्यन्तस्यार्थः। भक्षयति बलीवर्दान् सस्यमिति। क्षेत्रे प्ररूढमलूनं सस्यमिह विवक्षितम्। तस्य तदानीमन्तःप्रज्ञजीवत्वात् तद्भक्षणं हिंसैवेति भावः।

जल्पतिप्रभृतीनामिति। एतेषामणौ यः कर्ता स णौ कर्म स्यादिति वक्तव्यमित्यर्थः। जल्पयति भाषयति वेति। धर्ममिति शेषः। पुत्रो धर्मं जल्पति भाषते, वा, तं देवदत्तः

वा धर्मं पुत्रं देवदत्तः। 'दृशेश्च' (वा ११०८)। दर्शयति हरिं भक्तान्। सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणं, न तु तद्विशेषार्थानामित्यनेन ज्ञाप्यते। तेन स्मरति जिघ्रति इत्यादीनां न। स्मारयति घ्रापयति वा देवदत्तेन। 'शब्दायतेर्न' (वा ११०५)। शब्दाययति देवदत्तेन। धात्वर्थसङ्गृहीतकर्मत्वेनाकर्मकत्वात्प्राप्तिः।

---

प्रेरयतीत्यर्थः। गत्यर्थादिष्वनन्तर्भावाद्वचनम्। न च शब्दनक्रियार्थत्वादेव सिद्धे वचनमिदं व्यर्थमिति वाच्यम्, अत एव 'शब्दकर्माकर्मकाणा' मित्यस्य शब्दः कर्मकारकं येषामित्यर्थात्। अन्यथा वेदमध्यापयद्विधिमित्यसिद्धेः। वार्तिके आदिना व्याहरतिवदत्यादीनां संग्रहः। भाष्ये तु 'के पुनर्जल्पतिप्रभृतयः, जल्पति विलपति आभाषते' इत्येवोक्तम्। परिगणनमित्येके उदाहरणमात्रप्रदर्शनमित्यन्ये। दृशेश्चेति। 'दृशिर् प्रेक्षणे' अस्याप्यणौ यः कर्ता स णौ कर्म स्यादिति वक्तव्यमित्यर्थः। दर्शयतीति। हरिं भक्ताः पश्यन्ति, तान् गुरुः प्रेरयतीत्यर्थः। ननु दृशेर्बुद्धिविशेषात्मकत्वादेव सिद्धे किमर्थमिदं वचनमित्यत आह—सूत्रे इति। 'गतिबुद्धि' इति सूत्रे बुद्धिग्रहणेन ज्ञानसामान्यवाचिनां 'विद ज्ञाने, ज्ञा अवबोधने' इत्यादीनामेव ग्रहणम्, न तु ज्ञानविशेषवाचिनामित्येतत् 'दृशेश्च' इत्यनेन विज्ञायते। अन्यथा 'दृशेश्च' इत्यस्य वैयर्थ्यप्रसङ्गात्। तेनेति। ज्ञापनेनेत्यर्थः। स्मरति जिघ्रतीत्यादीनामिति। आदिना प्रेक्षते इत्यादीनां संग्रहः। स्मारयतीति। स्मरति प्रियां देवदत्तः, जिघ्रति चन्दनं देवदत्तः, तं यज्ञदत्तः प्रेरयतीत्यर्थः।

शब्दायतेर्नेति। शब्दं करोतीत्यर्थे 'शब्दवैर' इत्यादिना क्यङि, 'अकृत्सार्वधातुकयोः' इति दीर्घे, 'सनाद्यन्ताः' इति धातुत्वे श्तिपा निर्देशोऽयम्। शब्दायेति क्यङन्तधातोः अणौ कर्ता णौ कर्म नेति वक्तव्यमित्यर्थः। शब्दाययति देवदत्तेनेति। शब्दायते देवदत्तः, तं यज्ञदत्तः प्रेरयतीत्यर्थः। देवदत्तस्य कर्मत्वाभावात् प्रयोज्यकर्तृत्वमादाय तृतीयैव। अत्र शब्दकर्मकत्वात् प्राप्तिरिति भ्रमं निरस्यति—धात्वर्थेति। शब्दकर्मकमुत्पादनं शब्दायेति क्यङन्तस्य धातोरर्थः। एवं च शब्दात्मकं कर्म धात्वर्थे अन्तर्भूतम्। अतः शब्दायेति क्यङन्तधातुरकर्मकः, 'धात्वर्थबहिर्भूतकर्मकत्वमेव सकर्मकत्वम्' इति 'सुप आत्मनः' इति सूत्रे भाष्ये प्रपञ्चितत्वात्। तस्मादकर्मकत्वादेवात्र प्राप्तिरित्यर्थः। एवं च 'शब्दाययति सैनिकै रिपून्' इति कर्म प्रयुञ्जानाः परास्ताः। ननु मासमास्ते देवदत्तः, तं प्रेरयति मासमासयति देवदत्तं यज्ञदत्त इत्यत्र देवदत्तस्य प्रयोज्यकर्तुः कर्मत्वं न स्यात्। आसधातोर्गत्यादिष्वनन्तर्भावात्। न चाकर्मकत्वात्तदन्तर्भाव इति वाच्यम्, 'अकर्मकधातुभिर्योगे' इति मासस्य कर्मतया आसेरकर्मकत्वासम्भवात्। किं च ओदनादिकर्मणः अविवक्षायां

येषां देशकालादिभिन्नं कर्म न सम्भवति तेऽत्राकर्मकाः। न त्वविवक्षितकर्माणोऽपि। तेन'मासमासयति देवदत्तम्'इत्यादौ कर्मत्वं भवति। 'देवदत्तेन पाचयति'इत्यादौ तु न।

**(५४१) हृक्रोरन्यतरस्याम् १।४।५३॥** हृक्रोरणौ यः कर्ता स णौ वा कर्मसंज्ञः स्यात्। हारयति कारयति वा भृत्यं-भृत्येन वा कटम्। 'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्' ( वा १११४ ) अभिवादयते दर्शयते देवं भक्तं-भक्तेन वा। **( ५४२ ) अधिशीङ्स्थाऽऽसां कर्म १।४।४६॥** अधिपूर्वाणामेषामाधारः कर्म स्यात्। अधिशेते-अधितिष्ठति-अध्यास्ते वा वैकुण्ठं हरिः। **( ५४३ ) अभिनिविशश्च १।४।४७॥** अभिनीत्येतत्सङ्घातपूर्वस्य विशतेराधारः कर्म स्यात्। अभिनिविशते सन्मार्गम्। परिक्रयणे सम्प्रदानम्—' ( सू ५८० ) इति सूत्रादिह

---

देवदत्तः पचति, पाचयति देवदत्तेन यज्ञदत्त इत्यत्र प्रयोज्यकर्तुर्देवदत्तस्य कर्मत्वं स्यात्, तदानीं पचेरकर्मकत्वेन गत्यादिष्वन्तर्भावादित्यत आह—येषामिति। इदं च प्रकृतसूत्रे भाष्यकैयटयोः स्पष्टम्।

हृक्रो। हा च का च हृकरौ तयोरिति विग्रहः। हारयति कारयति वेति। हरति करोति वा कटं भृत्यः, तं प्रेरयतीत्यर्थः। अत्र प्रयोज्यकर्तुर्भृत्यस्य कर्मत्वविकल्पः। हृक्रोर्गत्यर्थादिष्वनन्तर्भावादप्राप्ते विभाषेयम्। हृक्रोरर्थान्तरे तु प्राप्तविभाषा। अभ्यवहारयति सैन्धवान् सैन्धवैर्वा, विकारयति सैन्धवान् सैन्धवैर्वा। अत्र अभ्यवहरतेर्भक्षणार्थत्वात् विकारयतेरकर्मकत्वाच्च प्राप्तः। अभिवादीति। हेतुमण्ण्यन्तस्याभिपूर्वकवद्धातोर्दृशिप्रकृतिकण्यन्तस्य चात्मनेपदिनोऽणौ कर्ता णौ कर्म वेत्यर्थः। अभिवादयते इति। अभिवदति नमस्करोति देवं भक्तः, तं गुरुः प्रेरयतीत्यर्थः। कर्तृगामिनि फले 'णिचश्च' इत्यात्मनेपदम्। अत्र भक्तस्य प्रयोज्यकर्तुः कर्मत्वविकल्पः। अप्राप्तविभाषेयम्। परस्मैपदे तु अभिवादयति देवं भक्तेनेत्येव। पश्यति देवं भक्तः, तं गुरुः प्रेरयति। दर्शयते देवं भक्तं भक्तेन वा। 'गतिबुद्धि' इत्यत्र बुद्धिग्रहणेन ज्ञानसामान्यवाचिन एव ग्रहणमित्युक्तम्। तथापि 'दृशेश्च' इति नित्यं प्राप्ते विकल्पः।

अधिशीङ्स्थाऽऽसां कर्म। शीङ्, स्था, आस् एषां द्वन्द्वः। अधिपूर्वाः शीङ्स्थासः इति विग्रहे शाकपार्थिवादित्वादुत्तरपदलोपः। तदाह—अधिपूर्वाणामिति। अधिकरणसंज्ञापवादोऽयम्। अधिशेते इति। अधिशेते वैकुण्ठं हरिः। अधितिष्ठति वैकुण्ठं हरिः, अध्यास्ते वैकुण्ठं हरिरित्यन्वयः। अधिस्तु सप्तम्यर्थस्याधारस्य द्योतकः। वैकुण्ठे शेते तिष्ठत्यास्ते वेत्यर्थः। अभिनिविशश्च। आधार इति कर्मेति चानुवर्तते। अभिनीति संघातग्रहणम्। तदाह—अभिनीत्येतत्सङ्घातपूर्वस्येति। अभिनिविशते सन्मार्गमिति। आग्रहवानित्यर्थः। अप्रतिहतप्रवृत्तिमानिति यावत्। नन्वेवं सति पापेऽभिनिवेशः

मण्डूकप्लुत्या अन्यतरस्यां ग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात्क्वचिन्न। पापेऽभिनिवेशः। ( ५४४ ) उपान्वध्याङ्वसः १।४।४८॥ उपादिपूर्वस्य वसतेराधारः कर्म स्यात्। उपवसति-अनुवसति-अधिवसति आवसति वा वैकुण्ठं हरिः। 'अभुक्त्यर्थस्य न' ( वा १०८७ )। वने उपवसति।

'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।
द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥' ( वा १४४४ )

उभयतः कृष्णं गोपाः। सर्वतः कृष्णम्। धिक् कृष्णाभक्तम्। उपर्युपरि

---

इत्यत्रापि कर्मत्वात् द्वितीया स्यादित्यत आह—परिक्रयणे इति॥ 'परिक्रयणे' इति सूत्रादन्यतरस्यां ग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात् क्वचिन्नेत्यन्वयः। तर्हि अभिनिविशते सन्मार्गमित्यत्रापि विकल्पः स्यादित्यत आह—व्यवस्थितेति। ननु 'परिक्रयणे सम्प्रदानमन्यतरस्याम्, आधारोऽधिकरणम्, अधिशीङ्स्थासां कर्म, अभिनिविशश्च' इति सूत्रक्रमः। 'तत्र 'अभिनिविशश्च' इत्यत्र कथमन्यतरस्यांग्रहणानुवृत्तिः, 'आधारोऽधिकरणम्' 'अधिशीङ्स्थासां कर्म' इत्यत्र च तदनुवृत्तेरभावादित्यत आह—मण्डूकप्लुत्येति। तुल्यमिति शेषः। मण्डूकाः यथा मध्ये पदानि सन्ततमप्रक्षिपन्त एव उत्प्लुत्य गच्छन्ति तद्वदनुवर्त्येत्यर्थः। 'एष्वर्थेष्वभिनिविष्टानाम्' इति समर्थसूत्रे भाष्यप्रयोगोऽत्र मानम्। उपान्वध्याङ्वसः। उप अनु अधि आङ् इत्येतेषां द्वन्द्वः। उपान्वध्याङ्पूर्वो वस् इति विग्रहे शाकपार्थिवादित्वात् समासः। तदाह—उपादिपूर्वस्येति। उपवसतीत्यादि। वैकुण्ठे वसतीत्यर्थः। उपसर्गाः आधारत्वद्योतकाः। अत्र 'वसेरश्यर्थस्य प्रतिषेधः' इति वार्तिकम्। तत्रार्थशब्दो निवृत्तिवचनः। 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु।' इत्यमरः। भोजनस्यार्थः निवृत्तिर्यस्मात् प्रतीयते सः अश्यर्थः, भोजननिवृत्तिवाचकस्य अशेराधारस्य कर्मत्वप्रतिषेध इति यावत्। तदेतदर्थतः सङ्गृह्णाति—अभुक्त्यर्थस्य नेति।

अथोपपदविभक्तयः। उभसर्वतसोरिति। वार्तिकम्। उभयशब्दसर्वशब्दप्रकृतिकतसन्तयोः प्रयोगे सति द्वितीया कार्येत्यर्थः। धिगिति। धिक्शब्दस्य प्रयोगे सति द्वितीया कार्या। 'प्रकृतिवदनुकरणम्' इत्यव्ययत्वात्सुपो लुक्। उपर्यादिष्वित्यनेन उपर्यध्यधसस्सामीप्ये, इति सूत्रोपात्तान्यव्ययानि गृह्यन्ते। आम्रेडितान्तेष्विति। द्विरुक्तस्य परमाम्रेडितम्, तदन्तेषु कृतद्विर्वचनेष्विति यावत्। तथा च कृतद्विर्वचनेषु उपर्यादिषु त्रिषु प्रयुज्यमानेषु द्वितीयेत्यर्थः। तत इति। उक्तप्रदेशेभ्योऽन्यत्रापि द्वितीया दृश्यत इत्यर्थः। उभयतः कृष्णं गोपा इति। कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः। आद्यादित्वात् तसिः। 'उभयोऽन्यत्र' इत्ययच्। षष्ठ्यर्थे द्वितीया। सर्वतः कृष्णमिति। कृष्णस्य सर्वेषु

लोकं हरिः । अध्यधि लोकम् । अधोऽधो लोकम् । 'अभितःपरितः समयानिकषा-हाप्रतियोगेऽपि' ( वा १४४२—१४४३ )। अभितः कृष्णम् । परितः कृष्णम् । ग्रामं समया । निकषा लङ्काम् । हा कृष्णाभक्तम् । तस्य शोच्यते इत्यर्थः । 'बुभुक्षितं न प्रतिभाति किञ्चित्' । (५४५) **अन्तराऽन्तरेण युक्ते २।३।४॥** आभ्यां योगे द्वितीया । अन्तरा त्वां मां हरिः । अन्तरेण हरिं न सुखम् ।

---

पार्श्वेषु गोपा इत्यर्थः । धिक् कृष्णाभक्तमिति । धिक् निन्दायाम् । कृष्णाभक्तस्य निन्देत्यर्थः । केचित्तु कृष्णाभक्तो निन्द्य इत्यर्थः, प्रथमार्थे द्वितीयेत्याहुः । धिङ्मूर्खेत्यत्र तु निषिद्धाचरणमित्यध्याहार्यम् । उपर्युपरीति । 'उपर्यध्यधसस्सामीप्ये' इति द्विर्वचनम् । लोकस्य समीपे उपरि हरिरस्तीत्यर्थः । अध्यधीति । लोकस्य समीपदेशे हरिरस्तीत्यर्थः । अधोऽध इति । लोकस्य समीपे अधो हरिरस्तीत्यर्थः । अभितः परित इति । 'ततोऽन्यत्रापि दृश्यते' इत्यस्य प्रपञ्चोऽयम् । योगेऽपीत्यनन्तरं द्वितीयेति शेषः । अभितः कृष्णमिति । गोपा इति शेषः । कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः । परितः कृष्णमिति । कृष्णस्य सर्वेषु पार्श्वेषु गोपा इत्यर्थः । 'पर्यभिभ्यां च' इति तसिल् । ग्रामं समया निकषेति । समया निकषा इति च आकारान्ते अव्यये । ग्राममित्यस्य प्रत्येकमन्वयः । ग्रामस्य समीपे इत्यर्थः । 'निकषान्तिके' 'समयान्तिकमध्ययोः' इति चामरः 'विलङ्घ्य लङ्कां निकषा हनिष्यति' इति माघः । हा कृष्णाभक्तमिति । हा इत्याकारान्तमव्ययं खेदे । 'हा विषादशुगार्तिषु' इत्यमरः । तदाह—तस्य शोच्यत इत्यर्थः इति । कृष्णाभक्तः शोच्य इत्यर्थ इत्यन्ये । प्रतियोगमुदाहरति—बुभुक्षितमिति । क्षुधार्तस्य किञ्चिदपि न स्फुरतीत्यर्थः । 'भा दीप्तौ' इह तु उपसर्गबलात् स्फुरणे वर्तते । ततो लक्षणादाववृत्तेः प्रतेर्न कर्मप्रवचनीयत्वम् । एवं च 'कर्मप्रवचनीययुक्ते द्वितीया' इत्यनेन गतार्थत्वं न भवति ।

अन्तरान्तरेण युक्ते । अन्तरा इत्याकारान्तमव्ययं न तु टाबन्तम् । अन्तरेणेत्यप्यव्ययमेव, न तु तृतीयान्तम् , इति भाष्ये स्थितम् । अन्तरा त्वां मां हरिरिति । तव च मम च मध्ये हरिरित्यर्थः । 'अन्तरा मध्ये' इत्यमरः । अन्तरेण हरिमिति । हरेर्वर्जने सुखं नास्तीत्यर्थः । 'पृथग्विनान्तरेणर्ते हिरुङ्नाना च वर्जने ।' इत्यमरः । किमनयोरन्तरेण गतेनेत्यत्र तु अन्तरशब्दो विशेषवाची । अनयोर्विशेषेण ज्ञातेनेत्यर्थः । अत्र अन्तरेणेत्यस्य तृतीयान्तत्वादव्ययत्वाभावान्न तद्योगे द्वितीया । न चैवं सति 'हलोऽनन्तराः संयोगः' इत्यत्र 'द्वयोश्चैवान्तरा कश्चित्' इति भाष्यप्रयोगः कथमिति शङ्क्यम् , मध्यत्वनिमित्तमवधित्वं हि ययोर्निर्णीतं तत्र द्वितीया । ययोस्तु न तन्निर्णयस्तत्र सम्बन्धसामान्ये षष्ठ्येव भवति, युक्तग्रहणादिति कैयटः ।

(५४६) **कर्मप्रवचनीयाः १।४।८३॥** इत्यधिकृत्य। (५४७) **अनुर्लक्षणे १।४।८४॥** लक्षणे द्योत्येऽनुरुक्तसञ्ज्ञः स्यात्। गत्युपसर्गसञ्ज्ञापवादः। (५४८) **कर्मप्रवचनीययुक्ते द्वितीया २।३।८॥** एतेन योगे द्वितीया स्यात्। पर्जन्यो जपमनुप्रावर्षत्। हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः। परापि हेतौ तृतीया अनेन बाध्यते। 'लक्षणेत्थम्भूत—' (सू ५५२) इत्यादिना सिद्धे पुनः संज्ञावि-

---

कर्मप्रवचीयाः। इत्यधिकृत्येति। 'प्राग्रीश्वरान्निपाताः' इति पर्यन्तमिति बोध्यम्। अनुर्लक्षणे। लक्षणे द्योत्ये इति। लक्ष्यलक्षणभावसम्बन्धे द्योत्ये इत्यर्थः। उक्तसंज्ञ इति। कर्मप्रवचीयसञ्ज्ञ इत्यर्थः। लक्ष्यते ज्ञायतेऽनेनेति लक्षणम्, तच्च हेतुभूतं विवक्षितम्, न तु वृक्षं प्रति विद्योतते विद्युदितिवत् चिह्नमात्रम्, तथा सति 'लक्षणेत्थम्' इत्येव सिद्धेरिति वक्ष्यते। गत्युपसर्गसञ्ज्ञापवाद इति। अनेन क्रियायोगे एव कर्मप्रवचनीयसञ्ज्ञेति सूचितम्। 'कर्मप्रवचनीयाः' इति महासञ्ज्ञाकरणसामर्थ्यादन्वर्थत्वम्। कर्मेति क्रियोच्यते, तां प्रोक्तवन्तः कर्मप्रवचनीयाः, भूते कर्तरि बाहुलकादनीयर्प्रत्ययः, ततश्च क्रियामेव न द्योतयन्ति किं तु क्रियानिरूपितसम्बन्धविशेषं द्योतयन्ति। एवं च अनुप्रत्यादिषु क्रियानिरूपितसम्बन्धस्य द्योत्यत्वेन अन्वयात् तत्र गत्युपसर्गसञ्ज्ञयोः प्राप्तिर्बोध्या।

कर्मप्रवचनीय। युक्ते इति भावे क्तः। तदाह—एतेन योगे इति। पर्जन्यो जपमन्विति। कदा पर्जन्योऽवर्षदिति प्रश्ने उत्तरमिदम्। अत्र वृष्टिकाल उपदेश्यः, स च दुर्ज्ञानत्वात् शाखाग्रं प्रति द्विकलश्चन्द्र इतिवत् प्रज्ञानं किञ्चिदवलम्ब्यैव ज्ञाप्यः। जपोऽत्र प्रज्ञानम्, तत्र जपकाले पर्जन्यः प्रावर्षदिति सम्भवति। हेतुभूतजपो ह्यत्र लक्षणम्। हेतुत्वं च पूर्वकालवृत्तित्वघटितम्। एवं च वर्षहेतुभूतवरुणजपोत्तरकाले पर्जन्यः प्रावर्षदित्युत्तरं पर्यवस्यति। तत्र लक्षणत्वं हेतुत्वं चेति द्वयं द्वितीयार्थः। तदुभयमनुना द्योत्यते। लक्षणत्वं च ज्ञानजनकज्ञानविषयत्वम्। जपज्ञानेन तदुत्तरकालविशिष्टा वृष्टिर्ज्ञाप्यते। ततश्च जपात्मकहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोधः। तदाह—हेतुभूतेति। अनभिहिताधिकारान्न पर्जन्यात् तृतीया, तस्य तिङा अभिहितत्वात्। ननु हेतुत्वांशस्य कथमिह लाभः, 'अनुर्लक्षणे' इत्यत्र तदनुपादानात्। एवं च हेतुत्वाविवक्षायां वृक्षमनु विद्योतते विद्युदित्यत्र 'अनुर्लक्षणे' इति सावकाशम्। 'हेतौ' इति तृतीया तु धनेन कुलमित्यादौ सावकाशा। पर्जन्यो जपमनु प्रावर्षदित्यत्र तु तदुभयमपि प्रसक्तम्। तत्र परत्वात् हेतुतृतीयैव स्यादित्यत आह—परापीति। 'अनुर्लक्षणे' इति कर्मप्रवचनीयत्वप्रयुक्तद्वितीयाविधिनेत्यर्थः। पुनः सञ्ज्ञेति। वृक्षमनु विद्योतते विद्युत् इत्यत्र हि 'अनुर्लक्षणे' इत्यस्य न प्रयोजनम्,

धानसामर्थ्यात् । ( ५४९ ) तृतीयार्थे १।४।८५॥ अस्मिन्द्योत्येऽनुरुक्तसञ्ज्ञः स्यात् । नदीमन्ववसिता सेना । नद्या सह सम्बद्धेत्यर्थः । 'षिञ् बन्धने' क्तः । ( ५५० ) हीने १।४।८६॥ हीने द्योत्येऽनुः प्राग्वत् । अनु हरिं सुराः । हरेर्हीना इत्यर्थः । ( ५५१ ) उपोऽधिके च १।४।८७॥ अधिके हीने च द्योत्ये उपेत्यव्ययं प्राक्सञ्ज्ञं स्यात् । अधिके, सप्तमी वक्ष्यते । हीने, उप हरिं सुराः । ( ५५२ )

---

'लक्षणेत्थम्' इत्येव सिद्धेः । ततश्च 'अनुर्लक्षणे' इत्यारम्भसामर्थ्यात् हेतुभूते लक्षणे अनोः कर्मप्रवचनीयत्वलब्धया द्वितीयया हेतौ तृतीया बाध्यत इति विज्ञायते इत्यर्थः । ततश्च हेतुत्वमपि शाब्दबोधे विषय इति फलति ।

तृतीयार्थे । अनुरित्यनुवर्तते । कर्मप्रवचनीयाः इत्यधिकृतम् । अस्मिन् द्योत्ये इति । 'सहयुक्तेऽप्रधाने' इति तृतीयार्थे साहित्ये द्योत्ये इत्यर्थः । अत्र 'तृतीयार्थे' इत्यनेन कर्तृकरणे न गृह्येते, रामेण शरेणानुहतो वालीत्यत्र 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायेन तृतीयाया एव प्रवृत्त्या अस्याः संज्ञायाः फलाभावात् । नापि 'येनाङ्गविकारः' इति तृतीयार्थोऽत्र विवक्षितः, 'अनन्तरस्य' इति न्यायेन 'कर्मप्रवचनीययुक्ते द्वितीया' इत्यस्य 'सहयुक्तेऽप्रधाने' इत्यस्यैव बाधकत्वात् । तदाह—नद्या सह सम्बद्धेति । साहित्यं द्वितीयार्थः, अनुस्तद्द्योतक इति भावः । ननु अवसितशब्दस्य अवपूर्वात् 'षो अन्तकर्मणि' इति धातोरुत्पन्नत्वात्कथमुक्तार्थलाभ इत्यत आह—षिञ् बन्धने क्त इति । उपसर्गबलेन सम्बन्धवृत्तेरस्मात् क्तप्रत्यय इत्यर्थः । अत्र यदवश्यं पुनः पुनर्लक्ष्यस्य ज्ञापकं तदेव न लक्षणम् । किन्तु सकृत् ज्ञापकमपि । यथा यं कमण्डलुना भवान् अद्राक्षीत्, स छात्र इति । सकृदेव हि कमण्डलुपाणिर्दृष्टः, तस्य कमण्डलुर्लक्षणमिति 'अनुर्लक्षणे' इत्यत्र भाष्ये स्पष्टम् । तेन व्याप्यात्मकलिङ्गमेवात्र लक्षणमिति न भ्रमितव्यम् । हीने । हीने द्योत्ये इति । निकर्षे द्योत्ये इत्यर्थः । हीन इति भावे क्तः । 'ओहाक् त्यागे' इति धातोरोदित्त्वात् 'ओदितश्च' इति निष्ठानत्वम् । अनुः प्राग्वदिति । कर्मप्रवचनीयसंज्ञ इत्यर्थः । अनु हरिं सुरा इति । अत्र निकृष्टभावोऽनुद्योत्यो द्वितीयार्थः । तदाह—हरेर्हीना इत्यर्थ इति । हरेरिति षष्ठी प्रतियोगितायाम्, हरिप्रतियोगिकनिकर्षवन्त इत्यर्थः । उपोऽधिके च । चकारात् हीने इति समुच्चीयते तदाह—अधिके हीने चेति । आधिक्ये निकर्षे चेत्यर्थः । प्राक्संज्ञमिति । प्रागुक्तकर्मप्रवचनीयसंज्ञकमित्यर्थः । अधिके संज्ञाविधानं न द्वितीयार्थमित्याह—अधिके सप्तमी वक्ष्यत इति । 'यस्मादधिकम्' इत्यनेन कर्मप्रवचनीयसंज्ञाकार्यं सप्तमी वक्ष्यत इत्यर्थः । हीने इति । उदाहरणं वक्ष्यत इति शेषः । उप हरिं सुरा इति । हरेर्हीना इत्यर्थः ।

**लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः १।४।९०॥** एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसञ्ज्ञाः स्युः। लक्षणे, वृक्षं प्रति–परि–अनु वा विद्योतते विद्युत्। इत्थम्भूताख्याने, भक्तो विष्णुं प्रति–परि–अनु वा। भागे, लक्ष्मीर्हरिं प्रति–परि–अनु वा। हरेर्भाग इत्यर्थः। वीप्सायाम्, वृक्षं वृक्षं प्रति–परि–अनु वा सिञ्चति। अत्रोपसर्गत्वाभावान्न षत्वम्। एषु किम्। परिषिञ्चति। ( ५५३ ) अभि-

लक्षणेत्थंभूत। लक्षणं ज्ञापकम्, अयं प्रकारः इत्थं, तं प्राप्तः इत्थंभूतः, तस्याख्यानमुपपादकमित्थंभूताख्यानम्, भागः स्वीकार्योंऽशः तत्स्वामी विवक्षितः। व्याप्तुं कार्त्स्न्येन सम्बन्धुमिच्छा वीप्सा। लक्षणं च इत्थम्भूताख्यानं च भागश्च वीप्सा चेति द्वन्द्वाद्विषयसप्तमी। तदाह—एष्विति। एष्वर्थेषु द्योत्येष्विति तु नाश्रितम्। व्याप्तुमिच्छायास्तद्द्योत्यार्थत्वाभावादिति भावः। लक्षणे इति। उदाहरणं वक्ष्यते इति शेषः। वृक्षं प्रतीति। लक्ष्यलक्षणभावसम्बन्धो द्वितीयार्थः। स च प्रत्ययादिद्योत्यः। वृक्षेण लक्ष्यमाणा विद्युत् विद्योतते इत्यर्थः। उत्पन्नविनष्टा विद्युत्, तदुत्पादितो वृक्षप्रकाशोऽपि उत्पन्नविनष्ट एव। तथा च वृक्षप्रकाशोत्तरं विद्युतोऽसत्त्वेन प्रत्यक्षाभावादनुमेया सा। ततश्च प्रकाशितेन वृक्षेण विद्युज्ज्ञानात् वृक्षो लक्षणम्। इत्थम्भूताख्यान इति। उदाहरणं वक्ष्यत इति शेषः। भक्तो विष्णुं प्रतीति। भज सेवायाम्। भक्तिरस्त्यस्येति भक्तः, मत्वर्थीयोऽर्शआद्यच्, विषयतासम्बन्धः प्रत्यादिद्योत्यो द्वितीयार्थः, तस्य भक्तावेकदेशेऽन्वयः विष्णुविषयकभक्तिमानित्यर्थः। अत्र भक्तः भक्तिरूपं प्रकारविशेषं प्राप्तत्वात् इत्थंभूतः तस्य विष्णुविषयकतया उपपाद्यत्वाद्विषयतासम्बन्धस्तदुपपादकः प्रतिद्योत्य इति ज्ञेयम्। भागे इति। उदाहरणं वक्ष्यत इति शेषः। लक्ष्मीर्हरिं प्रतीति। स्वामित्वं द्वितीयार्थः। प्रत्यादिद्योत्यः। तदाह—हरेर्भाग इत्यर्थः इति। हरेः स्वभूतेति यावत्।

वीप्सायामिति। उदाहरणं वक्ष्यत इति शेषः। वृक्षं वृक्षं प्रतीति। 'नित्यवीप्सयोः' इति द्विर्वचनम्। अत्र सन्वाच्या इच्छा स्वरूपसती व्याप्तिरेव तु विवक्षिता, सा च कार्त्स्न्येन सम्बन्धात्मिका। तथा च प्रकृत्यर्थगतकार्त्स्न्यमेव व्याप्तिः, सा यद्यपि द्विर्वचनद्योत्या, तथापि प्रतिपर्यनुयोगे तद्द्योत्यत्वमपि। तथा च कृत्स्नं वृक्षं सिञ्चतीत्यर्थः। व्यक्तिकार्त्स्न्यमिह विवक्षितम्, न त्ववयवकार्त्स्न्यमिति 'नित्यवीप्सयोः' इत्यत्र भाष्ये स्पष्टम्। ननु सेचने वृक्षस्य कर्मत्वादेव द्वितीयासिद्धेः किमिह कर्मप्रवचनीयसंज्ञयेत्यत आह—अत्रेति। गत्युपसर्गसंज्ञापवादः कर्मप्रवचनीयसंज्ञेत्युक्तम्। अतोऽत्र प्रतेः कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात् 'उपसर्गात् सुनोति' इति षत्वं न भवति। कर्मप्रवचनीयत्वाभावे तु प्रतेरुपसर्गत्वात्ततः परस्य सिञ्चतेः सस्य षत्वं स्यादित्यर्थः। भाष्ये तु 'किमर्थमिदमुच्यते, कर्मत्वादेव द्वितीया सिध्यति,

रभागे १।४।९१॥ भागवर्जे लक्षणादावभिरुक्तसञ्ज्ञा स्यात् । हरिमभि वर्तते । भक्तो हरिमभि । देवं देवमभि सिञ्चति । अभागे किम् । यदत्र ममाभिष्यात्तद्दीयताम् । (५५४) अधिपरी अनर्थकौ १।४।९३॥ उक्तसञ्ज्ञौ स्तः । कुतोऽध्यागच्छति । कुतः पर्यागच्छति । गतिसञ्ज्ञाबाधात् 'गतिर्गतौ' ( सू २९७७ )

---

उपसर्गसंज्ञानिवृत्तिस्तु न प्रयोजनम् । क्रियायोगाभावे तदप्रसक्तेरित्याक्षिप्य द्वितीयार्थमेवैतत् कर्मप्रवचनीयसंज्ञाविधानम्' इत्युक्तम् । वृक्षस्य सेचने कर्मत्वेऽपि तदविवक्षायां सम्बन्धविवक्षायां षष्ठी बाधितुमिदं कर्मप्रवचनीयत्वविधानम् । किं च वृक्षस्य सेचने कर्मत्वेऽपि प्रथमतः प्रतिद्योत्यसम्बन्धे अन्वयेन अन्तरङ्गत्वात्तन्निमित्तषष्ठीबाधनार्थमिदम् । वृक्षं वृक्षं प्रति पक्षिण आसते इत्यादौ अकर्मकधातुयोगे अधिकरणादिसंज्ञानिरासार्थं चेदमिति भाष्याशय इति शब्देन्दुशेखरे मञ्जूषायां च स्पष्टम् । एषु किमिति । लक्षणेत्थंभूताख्यानभागवीप्सासु' इति किमर्थमित्यर्थः । परिषिञ्चतीति । अग्निमित्यादि शेषः । अत्र लक्षणाद्यभावात् कर्मप्रवचनीयत्वाभावे 'उपसर्गात्सुनोति' इति षत्वमिति भावः । अभिरभागे । लक्षणादावित्ति । आदिना इत्थम्भूताख्यानवीप्सयोः सङ्ग्रहः । लक्षणे उदाहरति—हरिमभि वर्तत इति । जयः क्वेति प्रश्ने इदमुत्तरम् । लक्ष्यभावः अभिद्योत्यो द्वितीयार्थः । हरिलक्ष्यो जय इत्यर्थः । भक्तो हरिमभीति । इत्थंभूताख्याने उदाहरणमिदम् । विषयतासम्बन्धः अभिद्योत्यो द्वितीयार्थः । हरिविषयकभक्तिमानित्यर्थः । वीप्सायामुदाहरति—देवं देवमभिसिञ्चतीति । कार्त्स्न्यसम्बन्धात्मिका व्याप्तिर्द्वितीयार्थः, अभिद्योत्यश्च । कृत्स्नं देवमभिसिञ्चतीत्यर्थः । षत्वाभावादिपूर्ववत् । यदत्रेति । बहूनां द्रव्यं तण्डुलादि यत्र संसृष्टं तत्रेदं वाक्यम् । स्वस्वामिभावः षष्ठ्यर्थः । अभिस्तद्द्योतकः । अत्र संसृष्टद्रव्ये यत् वस्तु मम स्वभूतं स्यात्, तत् मह्यं दीयतामित्यर्थः । स्यादित्यस्तेर्लिङि रूपम् । अत्र मम भाग इत्यर्थतः पर्यवसानादभाग इति कर्मप्रवचनीयत्वपर्युदासात् उपसर्गत्वस्य निर्वाधत्वात् उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति षत्वम् ।

अधिपरी अनर्थकौ । उक्तसंज्ञौ स्त इति । कर्मप्रवचनीयसंज्ञकावित्यर्थः । कुतोऽध्यागच्छति, कुतः पर्यागच्छतीति । अत्र कुत इत्यपादानपञ्चम्यास्तसिल् । कस्मात् प्रदेशादागच्छतीत्यर्थः । नन्वत्र अधिपर्योरनर्थकतया सम्बन्धस्य तद्द्योत्यत्वाभावेन द्योत्यसम्बन्धप्रतियोगित्वरूपकर्मप्रवचनीययुक्तत्वस्याभावान्न द्वितीयाप्रसक्तिरित्यत आह—गतिसंज्ञाबाधादिति । अत्र 'गतिर्गतौ' इत्यत्र पदादित्यधिकारात् पदात्परत्वसम्पत्तये कुत इत्युपात्तमिति भावः । अत्र प्रभवति पराभवति अनुभवतीत्यादौ प्रादेरिवार्थान्तरद्योतकत्वाभावेऽपि धात्वर्थद्योतकत्वमस्त्येव । अर्थान्तरद्योतकत्वाभावेन अनर्थ-

सङ्ख्यानम्' ( वा १४८५ )। अधीती व्याकरणे। अधीतमनेनेति विग्रहे 'इष्टादिभ्यश्च' ( सू १८८८ ) इति कर्तरीनिः। 'साध्वसाधुप्रयोगे च' ( १४८६ )। साधुः कृष्णो मातरि, असाधुर्मातुले। 'निमित्तात्कर्मयोगे' ( १४९० )। निमित्तमिह फलम्। योगः संयोगसमवायात्मकः।

'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।

---

पिकमधिकरणं विज्ञायत' इति भाष्यं सङ्गच्छते। एवञ्च 'कटे आस्ते' इत्यादौ औपश्लेषिकाधारोदाहरणं मूलोक्तमनुपपन्नमेव, उक्तभाष्यविरोधात्। एवञ्च 'कटे आस्ते' इत्यादौ एकदेशव्याप्त्या गौणमभिव्यापकाधारत्वम्। सर्वावयवव्याप्तिकृताधिकरणत्वमेव मुख्यम्, वैषयिकमौपश्लेषिकं च गौणमित्यर्थस्य भाष्यसम्मतत्वात्। अत एव 'स्वरितेनाधिकारः' इति सूत्रे 'साधकतमं करणम्' इति सूत्रे च भाष्ये 'अधिकरणमाचार्यः किं मन्यते। यत्र कृत्स्नमाधारात्मा व्याप्तो भवति। तर्हि इहैव सप्तमी स्यात्—तिलेषु तैलं, दध्नि सर्पिः इति। गङ्गायां घोषः, कूपे गर्गकुलम् इत्यत्र तु न स्यात्, मुख्य एव कार्यसम्प्रत्ययादित्याशङ्क्य स्वरितेनाधिकं कार्यं भवतीति वचनात् 'तमब्ग्रहणाच्च न दोषः' इति समाहितम्। एवञ्च 'कटे आस्ते' 'गङ्गायां घोषः' इत्यादौ गौणमप्यधिकरणं सप्तम्यर्थ एव। यदि तु 'गङ्गायां घोषः' इत्यादौ सामीपिकमधिकरणत्वं न विवक्ष्यते तदा लक्षणेति बोध्यम्। विस्तरस्तु शब्देन्दुशेखरे द्रष्टव्यः।

क्तस्येन्विषयस्येति। न च 'कृतपूर्वी कटम्' इत्यत्रापि सप्तमी शङ्क्या, इन्प्रत्ययान्तो यः क्तप्रत्ययान्तस्तस्य कर्मणीत्यर्थाभ्युपगमात्। कर्तरीनिरिति। भावक्तान्तात् अधीतशब्दात् कर्तरीनिप्रत्यये कृते अधीतीत्यस्याधीतवानित्यर्थः पर्यवस्यति। किम् अधीतवानिति कर्मविशेषजिज्ञासायां व्याकरणम् अध्ययने कर्मत्वेनान्वेति। तच्च व्याकरणकर्मत्वं न केनाप्यभिहितमिति कृतपूर्वी कटम् इतिवत् द्वितीयायां प्राप्तायामनेन सप्तमीति भावः। साध्वसाधुप्रयोगे चेति। सप्तमी वक्तव्येति शेषः। साधुरिति। हितकारीत्यर्थः। असाधुरिति। अहितकारीत्यर्थः। उभयत्र शेषषष्ठ्यपवादः। 'साधुनिपुणाभ्यामर्चायाम्' इत्येव सिद्धे इह साधुग्रहणमनर्चार्थम्। यथा—साधुर्भृत्यो राजनि। इह तत्त्वकथने तात्पर्यम्। साधुनिपुणाभ्यामित्यत्र साधुग्रहणस्य प्रयोजनं वक्ष्यते। निमित्तादिति। कर्मयोगे हेतुवाचकाच्छब्दात् सप्तमी वाच्येत्यर्थः। ननु 'जाड्येन बद्धः' इत्यत्रापि सप्तमी स्यादित्यत आह—निमित्तमिह फलमिति। फलमेवेत्यर्थः। इष्टसाधनताज्ञानस्य प्रवर्तकतया फलस्यापि हेतुत्वं बोध्यम्। जन्यजनकत्वादिसम्बन्धं व्यावर्तयितुमाह—योगः संयोगसमवायात्मक इति। अयुतसिद्धयोः सम्बन्धः समवायः। अन्ययोस्तु संयोगः। चर्मणीति। चर्मार्थं व्याघ्रं हन्तीत्यर्थः। अत्र द्वीपिना कर्मणा

केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥' [ इति भाष्यम् ]

हेतुतृतीयाऽत्र प्राप्ता । सीमा अण्डकोशः । पुष्कलको गन्धमृगः । योगविशेषे किम् । वेतनेन धान्यं लुनाति । ( ६३४ ) **यस्य च भावेन भावलक्षणम् २।३।३७॥** यस्य क्रियया क्रियान्तरं लक्ष्यते, ततः सप्तमी स्यात् । गोषु दुह्यमानासु गतः । 'अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च' ( वा १४८७–१४८८ ) सत्सु तरत्सु असन्त आसते । असत्सु तिष्ठत्सु सन्तस्तरन्ति । सत्सु तिष्ठत्सु असन्त-

---

चर्मणः समवाय एव, अवयवावयविनोरयुतसिद्धत्वात् । दन्तयोरिति । दन्तार्थमित्यर्थः । अत्र कुञ्जरेण कर्मणा दन्तयोः समवाय एव । केशेष्विति । केशार्थमित्यर्थः । चमरी मृगविशेषः । सीम्नीति । सीमार्थमित्यर्थः । हेतुतृतीयाऽत्रप्राप्तेति । तादर्थ्यचतुर्थ्यपीति बोध्यम् । सीमा अण्डकोश इति । 'सीमा घट्टस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रियाम् ।' इति मेदिनी । पुष्कलको गन्धमृग इति । 'अथ पुष्कलको गन्धमृगे क्षेपणकीलयोः ।' इति मेदिनी । अत्रापि पुष्कलकेन कर्मणा सीम्नः समवाय एव । हरदत्तस्तु सीमा ग्रामादिमर्यादा । तस्याः ज्ञानार्थं पुष्कलकः शङ्कुर्हतः निखात इति व्याचष्ट । अत्र पुष्कलकेन कर्मणा सीम्नः संयोगो बोध्यः । वेतनेनेति । अत्र वेतनं भृतिद्रव्यम् , तदर्थमित्यर्थः । अत्र वेतनस्य लूयमानस्य धान्यस्य च तादर्थ्यमेव सम्बन्धः, न तु संयोगः, नापि समवाय इति भावः ।

यस्य च । भावशब्दौ क्रियापर्यायावित्यभिप्रेत्य व्याचष्टे—यस्य क्रिययेति । क्रिया च कर्त्राश्रया कर्माश्रया च । तत्र कर्माश्रयामुदाहरति—गोष्विति । देवदत्तः कदा गत इति प्रश्ने उत्तरमिदम् । अत्र लक्षकत्वसम्बन्धे सप्तमी । शेषषष्ठ्यपवादः । वर्तमानदोहनविशिष्टाभिर्गोभिर्ज्ञाप्यगमनवानित्यर्थः । अत्र दोहनक्रियायाः साक्षाल्लक्षकता । गवां तु तदाश्रयतया । ततश्च गोदोहनदशायां गत इत्युत्तरं पर्यवस्यति । दुग्धासु गत इत्यत्र तु अतीतदोहनविशिष्टाभिः गोभिर्ज्ञाप्यमानगमनवानित्यर्थः । गोदोहोत्तरकाले गत इति फलितम् । कर्तृगतक्रियायास्तु ब्राह्मणेष्वधीयानेषु गत इत्युदाहार्यम् । अत्र यदवश्यं पुनः पुनर्लक्ष्यज्ञापकं तदेव न लक्षणम् । किन्तु सकृज्ज्ञापकमपि । यथा—यं कमण्डलुपाणिं भवानद्राक्षीत् स छात्र इति । यद्यपि सकृदसौ कमण्डलुपाणिर्दृष्टः । तथापि तस्य कमण्डलुर्लक्षणं भवत्येवेति प्रकृतसूत्रे भाष्ये स्पष्टम् । 'उदिते आदित्ये जुहोति' इत्यत्र तु सामीपिकमधिकरणत्वं सप्तम्यर्थः । उदितादित्यसमीपकाल इत्यर्थः । आदित्योदयोत्तरसमीपकाल इति पर्यवसन्नोऽर्थः । 'उपरागे स्नायात्' इत्यत्र तु उपरागपदेन उपरागाश्रयकालो लक्ष्यत इत्यधिकरणसप्तम्येवेत्यन्यत्र विस्तरः ।

स्तरन्ति । असत्सु तरत्सु सन्तस्तिष्ठन्ति । (६३५) **षष्ठी चानादरे २।३।३८** ॥ अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः । रुदति रुदतो वा प्राव्राजीत् । रुदन्तं पुत्रादिकमनादृत्य सन्न्यस्तवानित्यर्थः । (६३६) **स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च २।३।३९** ॥ एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः । षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं वचनम् । गवां-गोषु वा स्वामी । गवां-गोषु वा प्रसूतः । गा एवानुभवितुं जात इत्यर्थः । (६३७) **आयुक्तकुशलाभ्यां चासेवायाम् २।३।४०** ॥ आभ्यां योगे षष्ठीसप्तम्यौ स्तस्तात्पर्येऽर्थे । आयुक्तो व्यापारितः । आयुक्तः कुशलो वा हरिपूजने-हरिपूजनस्य वा । आसेवायाम् किम् । आयुक्तो गौः शकटे । ईषद्युक्त इत्यर्थः ।

---

षष्ठी चानादरे । चात्सप्तमीत्यनुकृष्यते । अनादरे इति विषयसप्तमी । यस्य चेति पूर्वसूत्रमनुवर्तते । अनादरे गम्यमाने सति यस्य क्रियया क्रियान्तरं लक्ष्यते ततः षष्ठी सप्तमी चेत्यर्थः । फलितमाह—अनादराधिक्ये इति । अनादरः अधिको यस्मादिति विग्रहः । रुदति रुदत इति । कदा संन्यस्तवानिति प्रश्ने उत्तरमिदम् । अत्र लक्षकत्वं षष्ठीसप्तम्योरर्थः । अनादरविशिष्टं प्रव्रजनं धात्वर्थः । षष्ठीसप्तम्यौ तात्पर्यग्राहिके । अनादरश्च लक्षकक्रियाश्रयपुत्रादिविषयः । वर्तमानरोदनक्रियाविशिष्टपुत्रादिज्ञाप्यम् अनादरविशिष्टं प्रव्रजनमित्यर्थः । फलितमाह—रुदन्तं पुत्रादिकमिति । स्वामीश्वर । षष्ठीसप्तम्याविति । चकारेण तदुभयानुकर्षणादिति भावः । ननु शेषषष्ठ्यैव सिद्धे किमर्थमिह षष्ठीविधानमित्यत आह—षष्ठ्यामेवेति । गवां गोषु वेति । गोसम्बन्धीत्यर्थः । गवां गोषु वा ईश्वरः । गवां गोषु वा अधिपतिः । गवां गोषु वा दायादः । पुत्रादिभिर्ग्रहीतुं योग्यः । पित्राद्यार्जितधनांशो दायः । तमादत्त इति दायादः । 'आतोऽनुपसर्गे' इति कविधौ अनुपसर्गग्रहणे सत्यपि अत एव निपातनात् कः । गोसम्बन्धिदायाद इत्यर्थः । गवां च दाये अन्वयः । नित्यसाकाङ्क्षत्वाद् वृत्तिः । गवात्मकस्यांशस्य आदातेति फलितोऽर्थः । 'यस्मादधिकम्' इति सूत्रभाष्ये तु दायादशब्दः स्वामिपर्याय इति स्थितम् । गवां गोपु वा प्रसूत इति । गोसम्बन्धीत्यर्थः । सम्बन्धश्च भोक्तृत्वरूपः । तदाह—गा एवेति । एवशब्दात् महिषादिव्यावृत्तिः । आयुक्त । आसेवापदं व्याचष्टे—तात्पर्ये इति । औत्सुक्ये इत्यर्थः । 'तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः ।' इत्यमरः । आयुक्तपदं व्याचष्टे—व्यापारित इति । प्रवर्तित इत्यर्थः । आयुक्तः कुशलो वेति । हरिपूजनविषये आयुक्तः प्रवर्तित इत्यर्थः । अत्र वैषयिकाधिकरणत्वविवक्षायां सप्तम्यामेव प्राप्तायां, सम्बन्धमात्रविवक्षायां तु षष्ठ्यामेव प्राप्तायां वचनम् । आयुक्तो गौरिति । आङीषदर्थे । 'युजिर्योगे' । तदाह—ईषद्युक्त इत्यर्थ इति ।

( ६३८ ) यतश्च निर्धारणम् २।३।४१ ॥ जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं यतस्ततः षष्ठीसप्तम्यौ स्तः। नृणां-नृषु वा द्विजः श्रेष्ठः। गवां-गोषु वा कृष्णा बहुक्षीरा। गच्छतां-गच्छत्सु वा धावञ्छीघ्रः। छात्राणां छात्रेषु वा मैत्रः पटुः। (६३९) पञ्चमी विभक्ते २।३।४२ ॥ विभागो विभक्तम्। निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात्। माथुराः पाटलिपुत्रकेभ्यः आढ्यतराः। (६४०) साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः २।३।४३॥ आभ्यां योगे सप्तमी स्यादर्चायाम्, न तु प्रतेः प्रयोगे। मातरि साधुर्निपुणो वा।

---

यतश्च निर्धारणम्। जातिगुणेति। यत इति तत इति च पञ्चम्यर्थे तसिः। यस्मात्समुदायात् एकदेशस्य जातिगुणक्रियासंज्ञाभिः पृथक्करणं स्वेतरव्यावृत्तधर्मविशेषवत्त्वबोधनं निर्धारणशब्दवाच्यं गम्यते तस्मात् षष्ठीसप्तम्यावित्यर्थः। अत्र स्वशब्देन एकदेश उच्यते। तत्र जात्या पृथक्करणमुदाहरति। नृणां नृषु वेति। नृशब्दो मनुष्यसमुदाये वर्तते। उद्भूतावयवभेदविवक्षायां बहुवचनम्। द्विज इति तु जात्यभिप्रायमेकवचनम्। षष्ठीसप्तम्योः अवयवावयविभावः सम्बन्धोऽर्थः। उदाहृतनिर्धारणविषयत्वरूपश्च। ततश्च मनुष्यसमुदायैकदेशभूतो द्विजः स्वेतरव्यावृत्तश्रैष्ठ्यरूपधर्मक इत्यर्थः। गुणेन पृथक्करणमुदाहरति—गवां गोषु वेति। गोसमुदायैकदेशभूता कृष्णा गौः स्वेतरव्यावृत्तबहुक्षीरत्वरूपधर्मिकेत्यर्थः। क्रियया पृथक्करणमुदाहरति—गच्छतां गच्छत्सु वेति। गच्छत्समुदायैकदेशभूतो धावन् स्वेतरव्यावृत्तशैघ्र्यधर्मक इत्यर्थः। संज्ञया पृथक्करणमुदाहरति—छात्राणामिति। छात्रसमुदायैकदेशभूतो मैत्रनामा स्वेतरव्यावृत्तपटुत्वधर्मक इत्यर्थः।

पञ्चमी विभक्ते। विभागो विभक्तमिति। भावे क्तप्रत्ययाश्रयणादिति भावः। 'यतश्च निर्धारणम्' इत्यनुवर्तते। निर्धारणावधिभूतानां मनुष्यादीनां निर्धार्यमाणानां द्विजानां च सामान्यात्मना अभेदो विशेषात्मना भेदश्च स्थितः। एवञ्च निर्धारणे सर्वत्र कथञ्चिद्भेदस्य सत्त्वात् विभक्त इत्यनेन भेद एवेत्यर्थो विवक्षितः। ततश्च यत्र निर्धारणावधेर्निर्धार्यमाणस्य च भेद एव, न तु केनाप्युपात्तरूपेण अभेदः तत्रैवास्य प्रवृत्तिरित्यभिप्रेत्याह—निर्धार्यमाणस्येति। निर्धारणावधेरिति शेषः, 'यतश्च निर्धारणम्' इत्यनुवृत्तेः। अत्रावधिव्यावृत्तधर्मवत्त्वबोधनमेव, न तु समुदायादेकदेशस्येत्यंशो विवक्षितः, असम्भवादित्यभिप्रेत्योदाहरति—माथुरा इति। अवधित्वं पञ्चम्यर्थः। मथुरादेशीयाः पाटलीपुत्रदेशीयापेक्षया अतिशयेनाढ्या इत्यर्थः। अत्र मथुरादेशीयत्वपाटलीपुत्रदेशीयत्वयोः गोत्वाश्वत्ववद्विरोधात् कथञ्चिदपि तद्रूपेण नाभेद इति निर्धारणावधेः पञ्चमीति भावः। साधुनिपुणाभ्याम्। शेषषष्ठ्यपवादः। मातरि साधुरिति।

अर्चायाम् किम्। निपुणो राज्ञो भृत्यः। इह तत्त्वकथने तात्पर्यम्। 'अप्रत्यादिभिरिति वक्तव्यम्' (वा १४९३)। साधुर्निपुणो वा मातरं प्रति परि अनु वा। **(६४१) प्रसितोत्सुकाभ्यां तृतीया च २।३।४४॥** आभ्यां योगे तृतीया स्यात् चात्सप्तमी। प्रसित उत्सुको वा हरिणा-हरौ वा। **(६४२) नक्षत्रे च लुपि २।३।४५॥** नक्षत्रे प्रकृत्यर्थे यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीयासप्तम्यौ स्तोऽधिकरणे। 'मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्। मूले श्रवणे इति वा। लुपि किम्। पुष्ये शनिः। **(६४३) सप्तमीपञ्चम्यौ कारकमध्ये २।३।७॥** शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यामेते स्तः। अद्य भुक्त्वाऽयं द्व्यहे-द्व्यहाद्वा भोक्ता। कर्तृशक्त्योर्मध्येऽयं कालः। इहस्थोऽयं क्रोशे-क्रोशाद्वा लक्ष्यं

---

हितकारीत्यर्थः। निपुणो वेति। मातरि कुशल इत्यर्थः। शुश्रूषायामिति शेषः। निपुणो राज्ञ इति। साधुशब्दप्रयोगे तु अर्चां विनापि सप्तमी भवत्येव, 'साध्वसाधुप्रयोगे च' इत्युक्तेः। इह साधुग्रहणं तु अर्चायां प्रत्यादियोगे सप्तमीनिवृत्त्यर्थम्। अप्रत्यादिभिरिति। प्रति, परि, अनु एतैर्योगे सति साधुनिपुणाभ्यां योगेऽपि न सप्तमीति भावः। प्रसितोत्सुकाभ्याम्। 'तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः' इत्यमरः। वैषयिकाधिकरणत्वे सप्तम्यामेव प्राप्तायामिदं वचनम्।

नक्षत्रे च लुपि। नक्षत्र इत्यनन्तरं प्रकृत्यर्थे सतीति शेषः। लुप्शब्देन लुप्संज्ञया लुप्तप्रत्ययार्थो विवक्षितः। तदाह—नक्षत्रे प्रकृत्यर्थे इति। अधिकरण इति। 'सप्तम्यधिकरणे च' इत्यतः मण्डूकप्लुत्या तदनुवृत्तेरिति भावः। मूलेनेति। मूलनक्षत्रयुक्तकाल इत्यर्थः। 'नक्षत्रेण युक्तः कालः' इत्यण्। 'लुबविशेषे' इति तस्य लुप्। अधिकरणे किम्। मूलं प्रतीक्षते। नक्षत्र इति किम्। पञ्चालेषु तिष्ठति। इह 'जनपदे' इति लुप्। सप्तमीपञ्चम्यौ। कारकशब्दः कर्तृत्वादिशक्तिपरः, न तु कर्त्रादिपरः व्याख्यानात्। मध्यस्यावधिद्वयसापेक्षत्वात् कारकयोर्मध्यमिति विग्रहः। तदाह—शक्तिद्वयमध्ये इति। 'कालाध्वनोः' इत्यनुवृत्तं पञ्चम्यन्ततया विपरिणम्यत इत्याह—यौ कालाध्वानाविति। अथ भुक्त्वेति। सामीपिकाधिकरणत्वे सप्तम्यामेव प्राप्तायां वचनम्। अद्य भुक्त्वा द्व्यहे अतीते तत्समीपे तृतीयेऽह्नि भोक्तेत्यर्थः। भविष्यति लुट्। कर्तृशक्त्योरिति। अद्यतनभुजिक्रियानिरूपितकर्तृत्वस्य द्व्यहोत्तरदिनगतभुजिक्रियानिरूपितकर्तृत्वस्य चेत्यर्थः। कारकशब्दस्य कर्त्रादिपरत्वे त्विह न स्यात्, क्त्वाप्रत्ययस्य कर्त्रैकत्वे विधानात्। कर्तृशक्तिस्तु भुजिक्रियाभेदात् भिद्यत एव। कारकद्वयमध्येऽप्युदाहरति—इहस्थोऽयमिति। इहापि देशतः सामीपिकमधिकरणत्वं पञ्चमीसप्तम्योरर्थः। इह तिष्ठन्नयमिष्वास इषुणा क्रोशोत्तरसमीपदेशे लक्ष्यं विध्ये-

विध्येत्। कर्तृकर्मशक्त्योर्मध्येऽयं देशः। अधिकशब्देन योगे सप्तमीपञ्चम्याविष्येते। 'तदस्मिन्नधिकम्—' (सू १८४६) इति 'यस्मादधिकम्—' (सू. ६४५) इति च सूत्रनिर्देशात्। लोके-लोकाद्वा अधिको हरिः।

**(६४४) अधिरीश्वरे १।४।९७।।** स्वस्वामिसम्बन्धे अधिः कर्मप्रवचनीयसंज्ञः स्यात्। **(६४५) यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी २।३।९।।** अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात्। उप परार्धे हरेर्गुणाः। परार्धादधिका इत्यर्थः। ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी। अधि भुवि रामः। अधि रामे भूः। 'सप्तमी शौण्डैः' (सू. ७१७) इति समासपक्षे तु रामाधीना। 'अषडक्ष-'

---

दित्यर्थः। कर्तृकर्मशक्त्योरिति। कर्तृत्वकर्मत्वरूपशक्त्योर्मध्य इत्यर्थः। कारकशब्दस्य कर्त्रादिपरत्वे त्विहैव स्यात्। अद्य भुक्त्वाऽयमित्यत्र न स्यादिति सूचयितुमिदमप्युदाहृतम्। ननु लोके लोकाद्वा अधिको हरिरित्यत्र अवधित्वसम्बन्धे शेषषष्ठ्येवोचितेत्याशङ्क्याह—अधिकशब्देनेति। लोके लोकाद्वेति। अवधित्वसम्बन्धः सप्तमीपञ्चम्योरर्थः। लोकापेक्षया श्रेष्ठ इत्यर्थः।

अधेः कर्मप्रवचनीयकार्यं वक्ष्यन् कर्मप्रवचनीयसञ्ज्ञामाह—अधिरीश्वरे। ईश्वरशब्देन ईश्वरत्वं स्वस्वामिभावसम्बन्धात्मकं विवक्षितम्। 'कर्मप्रवचनीयाः' इत्यधिकृतमेकवचनान्ततया विपरिणम्यते। तदाह—स्वस्वामीति। यस्मादधिकम्। कर्मप्रवचनीययुक्ते इत्यनुवर्तते। तदाह—अत्र कर्मप्रवचनीयेति। शेषषष्ठ्यपवादः। उप परार्धे इति। अवधित्वं सप्तम्यर्थः। तदाह—परार्धादधिका इत्यर्थ इति। यस्मादधिकं सङ्ख्यान्तरं न विद्यते तत्परार्धम्। तदपेक्षयेत्यर्थः। 'उपोऽधिके च' इति उपेत्यस्य कर्मप्रवचनीयत्वस्येदं फलम्। यस्येश्वरवचनमित्यस्य यत्सम्बन्धी ईश्वर उच्यते ततः सप्तमीत्येकोऽर्थः। इह यच्छब्देन स्वमुच्यते। एवञ्च स्ववाचकात्सप्तमीति लभ्यते। ईश्वरशब्दो भावप्रधानः, यस्येश्वरत्वमुच्यते ततः 'सप्तमीत्यन्योऽर्थः। यन्निष्ठमीश्वरत्वमुच्यते ततः सप्तमीति यावत्। एवञ्च स्वामिवाचकात्सप्तमीति लभ्यते। तदाह—ऐश्वर्ये तु स्वस्वामिभ्यां प्रर्यायेण सप्तमीति। अधि भुवि राम इति। अधिरीश्वरपर्यायः सम्बन्धः सप्तम्यर्थः। भुवः स्वामी राम इत्यर्थः। अत्र स्ववाचकात्सप्तमी। अधि रामे भूरिति। अत्र अधिः स्वशब्दपर्यायः। सम्बन्धः सप्तम्यर्थः। रामस्य स्वभूता भूरित्यर्थः। अत्र स्वामिवाचकात्सप्तमी। समासपक्षे त्विति। शौण्डादिगणे अधिशब्दस्य पठितत्वेन तेनाधिशब्देन रामे इति सप्तम्यन्तस्य समासे सति 'सुपो धातु' इति सुब्लुकि रामाधिशब्दात् 'अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात् खः' इति खप्रत्यये 'आयनेयीनीयियः' इति तस्य ईनादेशे रामाधीना भूरिति सिध्यति।

( सू २०७९ ) इत्यादिना खः । ( ६४६ ) विभाषा कृञि १।४।९८॥ अधिः करोतौ प्राक्संज्ञो वा स्यादीश्वरेऽर्थे । यदत्र मामधिकरिष्यति । विनियोक्ष्यत इत्यर्थः। इह विनियोक्तुरीश्वरत्वं गम्यते । अगतित्वात् 'तिङि चोदात्तवति' ( सू ३९७८ ) इति निघातो न ॥ इति सप्तमी विभक्तिः ॥

॥ इति कारकप्रकरणम् ॥

---

रामस्वामिकेत्यर्थः । विभक्त्यर्थे अव्ययीभावे त्वधिरामं भूः । रामाधिकरणिका भूरित्यर्थः खप्रत्ययस्तु न । अध्युत्तरपदत्वाभावात् । विभाषा कृञि । 'अधिरीश्वरे' इत्यनुवर्तते । कर्मप्रवचनीया इत्यधिकृतम् । तदाह—अधिः करोताविति । कृन्धातौ परे अधिः कर्मप्रवचनीयो वा स्यादीश्वरत्वे इति यावत् । यदत्र मामधिकरिष्यतीति । अस्मिन् विषये मामधिकरिष्यतीति यत्तद्युक्तमित्यर्थः । अत्र कर्मप्रवचनीययोगे मामिति द्वितीया । अधिकरिष्यतीत्येतद् व्याचष्टे—विनियोक्ष्यत इत्यर्थ इति । तर्हि कर्मत्वादेव द्वितीयासिद्धेः किं कर्मप्रवचनीयत्वेनेत्यत आह—अगतित्वादिति । तिङि चेति । उदात्तवति तिङि परे गतिर्निहन्यत इति तदर्थः । अत्र करिष्यतीति तिङन्तमुदात्तवत्, 'तिङ्ङतिङः' इति निघातस्य 'निपातैर्यत्' इत्यादिना निषेधात् । ततश्च अधेरत्र गतित्वान्निघात इह प्राप्तः । कर्मप्रवचनीयत्वे तु स न भवति, तेन गतित्वस्य बाधात् । अतः अधेर्निघाताभावार्थमिदं सूत्रमिति सिद्धम् ।

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां विभक्त्यर्थनिरूपणं समाप्तम् ।

॥ श्रीः ॥

# कारकान्तान्तर्गत-सूत्रसूची ।

---

# कारकान्तान्तर्गत-वार्तिकसूची ।

## कारकान्तान्तर्गत–परिभाषासूची ।

## बनारसगवर्नमेण्टसंस्कृतकालेजाध्यापकव्याकरणाचार्य-

# पण्डित गोपालशास्त्रिनेनेकृत-

## रूपलेखनप्रकार-पङ्क्तिलेखनप्रकाराख्यपरिशिष्टम् ।

### अथ रूपलेखनप्रकारः ।

अयं परीक्षार्थिच्छात्राणां लेखसौष्ठवसम्पादनाय तत्तत्प्रकरणस्थानां कतिपयरूपाणां लेखन-प्रकारः प्रदर्श्यते । अनेनैव प्रकारेणान्येषामपि रूपाणां तत्तद्विशेषकार्यप्रदर्शनपुरःसरं लेखन-स्याभ्यासेन तत्र विद्यार्थिनः पटुतां सम्पादयितुं प्रभविष्यन्ति । तत्रादौ सूत्राणित द्भेदास्तल्ल-क्षणानि चोच्यन्ते-सूत्राणि षड्विधानि-सञ्ज्ञा-परिभाषा-विधि-नियम-अतिदेश-अधिकार-भेदात् । तथा चोक्तमभियुक्तैः—

सञ्ज्ञा च परिभाषा च विधिर्नियम एव च । अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम् ॥

तत्र सञ्ज्ञासूत्राणि—'वृद्धिरादैच्' 'अदेङ् गुण' इत्यादीनि । परिभाषासूत्राणि—'इको गुणवृद्धी' 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इत्यादीनि । विधिसूत्राणि—'इको यणचि' 'एचोऽय-वायावः' इत्यादीनि । नियमसूत्राणि-'कृतद्धितसमासाश्च' 'नलोपः सुप्स्वरसञ्ज्ञातुग्विधिषु कृति' इत्यादीनि । अतिदेशसूत्राणि—'स्थानिवदादेशोऽनल्विधौ' 'अन्तादिवच्च' इत्या-दीनि । अधिकारसूत्राणि—'प्राग्रीश्वरान्निपाताः' 'पूर्वत्रासिद्धम्' इत्यादीनि । तत्र विधि-सूत्राणि तावन्मुख्यानि तदुपकारकाणि चेतराणीति । तत्र सञ्ज्ञाशास्त्राणां विधिसूत्रघटकपद-शक्तिग्रहे उपयोगः । यथा-'वृद्धिरेचि' इति विधिसूत्रघटकवृद्धिपदस्य आकार-ऐकार-औका-रेषु शक्तिरिति 'वृद्धिरादैच्' इति सञ्ज्ञासूत्रेणाऽवगम्यते । एवञ्च सञ्ज्ञासूत्रसाहाय्येन विधि-सूत्रेण विधानं भवति ।

परिभाषासूत्राणां चानियमेन तत्र तत्र प्रसक्तस्य विधिशास्त्रस्य प्रवृत्तिनियमकरणे उप-योगः । यथा-'इको यणचि' इत्यस्य 'सुधी उपास्यः' इति लक्ष्ये सकारोत्तरे उकारे प्रसक्तिः धका-रोत्तर ईकारे परे, एवं धकारोत्तर ईकारे प्रसक्तिः उकारे परे, एवम् उपास्यघटक उकारे प्रसक्तिः पकारोत्तर आकारे परे इति एकस्मिन् लक्ष्ये त्रयाणां स्थानेऽनियमेन प्रसक्तस्य यणोऽजव्यव-हिते ईकारे एव 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषया निर्दिष्टे पूर्वस्य इति पदसमर्प-णेन प्रवृत्तिर्नियम्यते । एवञ्च परिभाषासूत्राणां विधिसूत्रैरेकवाक्यता भवति ।

विधिसूत्रं तु अपूर्वार्थबोधकम् । यथा 'उप-इन्द्र' इत्यत्र अपूर्वो योऽर्थः एकारस्तस्य अकारे-कारयोः निवृत्तिपूर्वकं विधानम् 'आद्गुणः' इति सूत्रेण क्रियते । तथा च 'उपेन्द्रः' इति सिध्यति ।

नियमसूत्रं च इतरनिवृत्तिफलकार्थबोधकम् । यथा 'समासाश्च' इति सूत्रं 'गामानय' इति वाक्यस्य 'राजपुरुषः' इत्यादिसमासस्य चाऽर्थबोधकत्वेनोभयत्र पूर्वसूत्रप्राप्तायाः प्रातिपदिक-सञ्ज्ञायाः 'गामानय' इत्यत्र निवृत्तिं करोति ।

अतिदेशसूत्रं च अन्यत्र अन्यधर्मारोपबोधकम् । यथा 'सुध्युपास्यः' इत्यत्र यकारादेशे स्थानीकारवृत्तिअच्त्वधर्मारोपः 'स्थानिवदादेशोऽनल्विधौ' इति सूत्रेण क्रियते ।

अधिकारसूत्रं तु स्वदेशे वाक्यार्थाबोधकमुत्तरोत्तरसूत्रेषु स्वघटकपदसमर्पकम् । यथा 'चादयोऽसत्त्वे' 'प्रादयः' इत्यादिसूत्रेषु 'प्राग्रीश्वरान्निपाताः' इति सूत्रेण 'प्राक्' 'निपाताः' इति पदद्वयसमर्पणं क्रियते ।

निषेधसूत्राणामभावरूपापूर्वबोधकत्वेन विधिसूत्रेष्वन्तर्भावः । यथा 'नादिन्याक्रोशे पुत्रस्य' इति । तस्य 'पुत्रादिनी त्वमसि पापे' इत्यत्र पुत्रशब्दे तकारस्य स्थाने प्राप्तस्य 'अनचि च' इति द्वित्वस्याभावबोधकत्वम् ।

रूपसिद्धौ प्रथमं सर्वाणि कार्याणि प्रदर्श्य तदनन्तरं क्रमेण मध्यवर्त्तिन्यः शङ्काः प्रदर्शनपूर्वकं निरसनीयाः ।

**१—सुद्ध्युपास्यः ।** 'सुधी—उपास्यः' इति स्थिते 'इको यणचि' इति सूत्रेण 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषैकवाक्यतया उकाररूपाजव्यवहितपूर्वस्य ईकारस्य स्थाने 'स्थानेऽन्तरतमः' इति परिभाषैकवाक्यतया तालुस्थानजन्यत्वधर्मेणान्तरतमे यकाररूपयणादेशे 'अनचि च' इति सूत्रेण सुसम्बन्ध्युकाराव्यवहितोत्तरस्य अज्भिन्नयकारपरकस्य धकारस्य द्वित्वे 'झलां जश् झशि' इति सूत्रेण पूर्वधकारस्य जश्त्वेन दकारे 'यणो मयो द्वे वाच्ये' इति वार्तिकेन मय इति पञ्चमी यण इति षष्ठी इति पक्षे धकाररूपमयः परस्य यणो यकारस्य द्वित्वे 'सुद्ध्य्युपास्यः' इत्येकं रूपं सिद्ध्यति । यण इति पञ्चमी मय इति षष्ठी इति पक्षे । 'यणो मयो द्वे वाच्ये' इति वार्तिकस्याप्राप्त्या यकारद्वित्वाभावे द्विधमेकयं 'सुद्ध्युपास्यः' इति । 'अनचि च' इत्यस्यापि विकल्पतया तदभावपक्षे 'यणो मयो द्वे वाच्ये' इत्यस्य च प्रवृत्तिपक्षे एकधं द्वियं 'सुध्य्युपास्यः' इति । 'अनचि च' 'यणो मयो द्वे वाच्ये' इत्युभयोरपि वैकल्पिकत्वादप्रवृत्तौ एकधमेकयं 'सुध्युपास्यः' इति । एवञ्चात्र रूपचतुष्टयं भवति ।

नन्वत्र—'स्थानिवदादेशः' इति सूत्रेण यकारस्य स्थानिवत्त्वेन ईकारवृत्ति—अच्त्वधर्ममारोप्य 'अनचि' इति प्रतिषेधप्रवृत्तौ धकारस्य कथं द्वित्वमिति चेत् ? न, 'अनल्विधौ' इति अच्त्वस्य स्थानिवृत्तित्वादल्मात्रवृत्तित्वाच्च तादृशधर्मनिमित्तके द्वित्वप्रतिषेधे कर्तव्ये स्थानिवद्भावनिषेधात् । न च 'अचः परस्मिन् पूर्वविधौ' इति पर 'उकार' निमित्तस्य ईकाररूपाच्स्थानिकादेशस्य यकारस्य स्थानिभूतेकारात्पूर्वत्वेन दृष्टस्य धकारस्य 'अनचि' इति द्वित्वनिषेधे कर्तव्ये पुनरपि स्थानिवद्भाव इति कथं द्वित्वमिति वाच्यम्, 'न पदान्तद्विर्वचन' इत्यादिना सूत्रेण द्वित्वे कर्तव्ये स्थानिवद्भावनिषेधात् । नाप्यत्र 'संयोगान्तस्य लोपः' इति सूत्रेण सुद्ध्य्उपास्यः इति स्थितौ पूर्वपदान्तत्वाद् यकारस्य लोपः शङ्क्यः, 'यणः प्रतिषेधो वाच्यः' इति वार्तिकेन तन्निषेधात् । **२—हरये ।** 'हरे—ए' इति स्थितौ 'एचोऽयवायावः' इति एकाराजव्यवहितपूर्वस्यैकारस्य स्थाने अयादेशे अज्झीनं परेण संयोज्यम् इति न्यायेन मेलने 'हरये' इति सिद्ध्यति। नन्वत्रायादेशस्योपदेशतया 'हलन्त्यम्' इति इत्सञ्ज्ञा 'तस्य लोपः' इति लोपश्च कुतो नेति चेत् ? न, उच्चारणसामर्थ्यात् । नहि यकारस्यात्रोच्चारणं विनाऽन्यत् किमपि फलं विद्यते इति ।

३—एहि कृष्ण ३ अत्र गौश्चरति । अत्र वाक्यद्वयम्—एहि कृष्ण ३ इत्येकम्, अत्र गौश्चरति इत्यपरम् । अत्र पूर्ववाक्यान्तस्य 'कृष्ण' णकारोत्तराकारस्य 'दूराद्धूते च' इति सूत्रेण प्लुतविधानात्तस्य अत्रेत्यवयवाकारेऽचि परे 'प्लुतप्रगृह्या अचि नित्यम्' इति सूत्रेण प्रकृतिभावेन सवर्णदीर्घविकारस्य निवृत्त्या रूपसिद्धिः । ४—हरी एतौ । अत्र वाक्ये हरी इति हरिशब्दप्रथमाद्विवचनरूपम् । तथा च दीर्घेकारान्तद्विवचनतया तस्य 'ईदूदेद् द्विवचनं प्रगृह्यम्' इति प्रगृह्यसञ्ज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इति सूत्रेण प्रकृतिभावे 'इको यणचि' इति प्राप्तयणो निवृत्त्या रूपसिद्धिः । ५—हरिश्शेते । हरिस्–शेते इत्यवस्थायां 'स्तोः श्चुना श्चुः' इति शेते–शकारयोगे पूर्वसकारस्य स्थाने 'यथासंख्यमनुदेशः समानाम्' इति सूत्रसाहाय्येन शकारादेशे रूपसिद्धिः । ६—सञ्छम्भुः । 'सन्–शम्भुः' इत्यवस्थायां 'शि तुक्' इति सूत्रेण 'आद्यन्तौ टकितौ' इत्येकवाक्यतया नकारान्तावयवे तुगागमे ककारस्य 'हलन्त्यम्' इति उकारस्य 'उपदेशेऽजनुनासिक इत्' इति इत्सञ्ज्ञायां 'तस्य लोपः' इति लोपे 'शश्छोऽटि' इति पदान्ततकारात्परस्य शकारस्य छकारे 'स्तोः श्चुना श्चुः' इति श्चुत्वेन तकारस्य चकारे पुनः श्चुत्वेन नकारस्य ञकारादेशे 'झरो झरि सवर्णे' इति चकारलोपे सञ्छम्भुः, चकारलोपाभावपक्षे सञ्च्छम्भुः, चलोपछत्वाभावे सञ्च्शम्भुः, छत्वतुकोरभावपक्षे सञ्शम्भुः इति रूपचतुष्टयं सिद्ध्यति । ७—विष्णुस्त्राता । 'विष्णुः–त्राता' इत्यवस्थायां 'विसर्जनीयस्य सः' इति सूत्रेण विसर्गस्थाने सकारादेशे रूपसिद्धिः । ८—द्विष्करोति । 'द्विः–करोति' इत्यवस्थायां 'द्विस्त्रिश्चतुरिति कृत्वोऽर्थे' इति सुजन्ताद्द्विस्–शब्दविसर्गस्य षकारादेशे रूपसिद्धिः, अभावपक्षे 'कुप्वोः ≍क≍पौ च' इति विसर्गस्य स्थाने सत्त्वापवादे विसर्गे 'द्विः करोति' इति रूपद्वयम् । ९—शिवोऽर्च्यः । 'शिवस्–अर्च्यः' इति स्थिते प्रथमैकवचनसुप्रत्ययान्तशिवस् इत्यस्य 'सुप्तिङन्तं पदम्' इति पदसञ्ज्ञायां 'ससजुषो रुः' इति सकारस्य रुत्वे उकारस्येत्सञ्ज्ञायां लोपे 'अतो रोरप्लुतादप्लुते' इति उत्वे 'आद् गुणः' इति गुणे 'एङः पदान्तादति' इति पूर्वरूपे रूपसिद्धिः । नन्वत्र प्रथमैकवचनसुप्रत्ययस्थानिकरुस्थानिकोकारस्य प्रथमासम्बन्ध्यच्त्वात् तस्य तस्मिन् परे पूर्वाकारस्याकरश्चेत्युभयोः स्थाने 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घ आकारादेशः कुतो नेति चेत् ? उच्यते, 'नादिचि' इति तन्निषेधात् । १०—हरी रम्यः । 'हरिर्–रम्यः' इति स्थिते 'रो रि' इति पूर्वरेफस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घे रूपसिद्धिः । ११—रामः । रामशब्दस्य 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति प्रातिपदिकसञ्ज्ञायां ततः प्रथमैकवचनविवक्षायां 'स्वौजसमौट्' इति सूत्रेण 'द्व्येकयोर्द्विवचनैकवचने' इति नियमेन सुप्रत्यये उकारस्येत्सञ्ज्ञायां लोपे च रुत्वे 'खरवसानयोर्विसर्जनीयः' इति विसर्गादेशे रूपसिद्धिः । १२—प्रध्यम् । प्रधीशब्दस्य कृदन्ततया 'कृत्तद्धितसमासाश्च' इति सूत्रेण प्रातिपदिकसञ्ज्ञायां द्वितीयैकवचनविवक्षायामम्रि प्रत्यये 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणादेशेन यकारे 'प्रध्यम्' इति रूपं सिद्धम् । १३—रमा । रमाशब्दस्य आबन्तत्वेऽपि एकादेशस्य पूर्वान्तवद्भावेन प्रातिपदिकग्रहणेन ग्रहणात् 'ङ्याप्प्रातिपदिकात्' इत्यत्र आपग्रहणाद्वा ततः प्रथमैकवचनविवक्षायां सुप्रत्यये उकार-

स्येत्सञ्ज्ञालोपानन्तरम् 'अपृक्त एकाल् प्रत्ययः' इति सकारप्रत्ययस्य अपृक्तसञ्ज्ञायां 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' इति सूत्रेण सकारलोपे रूपसिद्धिः। १४—श्रियै। श्रीशब्दस्य 'अर्थवत्' इति प्रातिपदिकसंज्ञायां चतुर्थ्येकवचनविवक्षायां ङेप्रत्यये 'लशक्वतद्धिते' इति ङकारस्येत्संज्ञायां लोपे च 'ङिति ह्रस्वश्च' इति वैकल्पिकनदीसंज्ञायां तत्पक्षे 'आण्नद्याः' इति सूत्रेण आडागमे टित्वाद्विभक्तेराद्यवयवे 'आटश्च' इति वृद्धौ 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इति सूत्रेण 'ङिच्च' इत्येकवाक्यतयाऽन्त्येकारस्येयङादेशे अकारङकारयोरित्सञ्ज्ञायां लोपे च 'श्रियै' इति। नदीसञ्ज्ञाया अभावे इयङादेशे 'श्रिये' इति रूपद्वयम्। १५—ज्ञानम्। ज्ञानशब्दस्य 'अर्थवत्' इति प्रातिपदिकसंज्ञायां प्रथमैकवचनसुप्रत्यये 'अतोऽम्' इति सूत्रेण अमादेशे 'अमि पूर्वः' इति पूर्वरूपे रूपसिद्धिः। १६—सुल्वा, सुलुना। सुष्ठु लुनाति तत् सुलु तेनेति विग्रहः। सुलुशब्दस्य 'कृत्तद्धित' इति प्रातिपदिकसञ्ज्ञायां 'ह्रस्वो नपुंसके' इति ह्रस्वे ततस्तृतीयैकवचनविवक्षायां टाविभक्तौ टकारस्येत्सञ्ज्ञालोपयोः 'तृतीयादिषु भाषितपुंस्कम्' इति पुंवद्भावेन दीर्घान्तादेशे 'सुलू-आ' इति स्थितौ 'ओः सुपि' इति यणादेशे सुल्वा, पुंवद्भावाभावपक्षे 'इकोऽचि विभक्तौ' इति नुमि सुलुना इति। १७—लिट्-लिड्। लिह्शब्दस्य क्विबन्तत्वेन 'कृत्तद्धित' इति प्रातिपदिकसञ्ज्ञायां प्रथमैकवचनविवक्षायां सुप्रत्यये 'हल्ङ्याब्भ्यो दीर्घात्' इति सुलोपे 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति प्रत्ययलक्षणेन सुबन्ततया 'सुप्तिङन्तं पदम्' इति पदसञ्ज्ञायां 'हो ढः' इति पदान्तहकारस्य स्थाने ढकारादेशे जश्त्वे चर्त्वविकल्पे चोक्तरूपसिद्धिः। १८—वृत्रहा। वृत्रं हतवान् वृत्रहा इति विग्रहः। वृत्रहन्शब्दस्य क्विबन्तत्वेन प्रातिपदिकसञ्ज्ञायां प्रथमैकवचनसुप्रत्यये 'सर्वनामस्थाने चासम्बुद्धौ' इति उपधादीर्घस्य 'इन्हन्पूषार्यम्णां शौ' इति नियमेन निवृत्तौ प्राप्तायां 'सौ च' इति प्रतिप्रसवेन दीर्घे हल्ङ्यादिलोपे नलोपे च तत्सिद्धिः। १९—युष्मत्। युष्मद्शब्दस्याव्युत्पन्नतया 'अर्थवद्' इति प्रातिपदिकत्वे पञ्चमीबहुवचनविवक्षायां भ्यसविभक्तौ 'पञ्चम्या अत्' इति सूत्रेण 'अत्' आदेशस्य अनेकाल्त्वात् 'अनेकाल्शित्सर्वस्य' इति सहायेन सर्वादेशे 'शेषे लोपः' इति टिलोपे, अन्त्यलोपपक्षे तु 'अतो गुणे' इति पररूपे तत्सिद्धिः। २०—तिर्यङ्। तिरस्शब्दे उपपदे अञ्चधातोः 'ऋत्विग्दधृक्स्रग्' इत्यादिना क्विन्प्रत्यये ककारेकारनकाराणामित्सञ्ज्ञालोपयोः 'कृदतिङ्' इति कृत्सञ्ज्ञायामपृक्तसञ्ज्ञायां च 'वेरपृक्तस्य' इति वलोपे प्रत्ययलक्षणेन 'अनिदिताम्' इति नकारलोपे कृत्तद्धितसूत्रेण प्रातिपदिकत्वे 'उपपदमतिङ्' इति समासे ततः प्रातिपदिकत्वे समुदायात्सुप्रत्यये 'उगिदचाम्' इति नुमि हल्ङ्यादिलोपे 'तिरसस्तिरि:' 'अनेकाल्' इति परिभाषैकवाक्यतया सर्वस्य स्थाने तिरि आदेशे यणि संयोगान्तलोपे 'क्विन्प्रत्ययस्य कुः' इति कुत्वेन ङकारे तिर्यङ्। इति। २१ अमीभ्यः। अदस्शब्दस्य 'अर्थवद्' इति प्रातिपदिकत्वे पञ्चमीबहुवचनभ्यस्विभक्तौ 'त्यदादीनामः' इति अकारान्तादेशे पररूपे 'बहुवचने झल्येत्' इत्येत्त्वे 'एत ईद्बहुवचने' इति दस्य मत्वे एकारस्य ईकारे चादेशे रुत्वविसर्गयोः अमीभ्यः इति। २२—उपानत्। उपपूर्वकनह्धातोः क्विपि कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायां 'नहिवृतिवृषिव्यधिरुचिसहितनिषु

कौ' इति पूर्वपदस्य दीर्घे प्रथमैकवचनसुप्रत्यये हल्ङ्यादिलोपे प्रत्ययलक्षणेन सुबन्तत्वात्पदसञ्ज्ञायां पदान्तत्वात् 'नहो धः' इति धकारेऽन्तादेशे जश्त्वचर्त्वयोः 'उपानत्' इति सिध्यति। २३—सजूःषु। सजुष्शब्दस्य प्रातिपदिकत्वे सप्तमीबहुवचनसुप्रत्यये 'स्वादिष्वसर्वनामस्थाने' इति पदसञ्ज्ञायां 'ससजुषो रुः' इति 'अलोऽन्त्यस्य' इत्येकवाक्यतया षकारस्य रुत्वे 'र्वोरुपधाया दीर्घ इकः' इति दीर्घे 'खरवसानयोः' इति 'रोः सुपि' इति च प्राप्तविसर्गं बाधित्वा 'वा शरि' इति वा विसर्गे 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति षत्वे तत्सिद्धिः। विसर्गाभावपक्षे 'विसर्जनीयस्य सः' इति सत्वे पूर्वसूत्रेण षत्वे ष्टुत्वे 'सजूष्षु' इति रूपद्वयम्। २४—स्वनडुत्। स्वनडुह्शब्दस्य समासत्वेन प्रातिपदिकत्वात्सुप्रत्यये 'स्वमोर्नपुंसकात्' इति तस्य लुकि प्रत्ययलक्षणेन सुबन्ततया पदसंज्ञायां पदान्तत्वेन 'वसुस्रंसुध्वंस्वनडुहां दः' इति दकारान्तादेशे चर्त्वविकल्पे स्वनडुत्–स्वनडुद् इति रूपद्वयम्। २५—इमे। इदम् शब्दात्प्रातिपदिकत्वेन प्रथमाद्विवचने औविभक्तौ त्यदाद्यत्वे पररूपे च 'नपुंसकाच्च' इति शी आदेशे शस्य 'लशक्वतद्धिते' इतीत्संज्ञायां लोपे च 'दश्च' इति दकारस्य मकारे भसञ्ज्ञायां 'यस्येति च' इति सूत्रेणाकारलोपे प्राप्ते तस्य 'औङः श्यां प्रतिषेधो वाच्यः' इति निषेधे गुणे 'इमे' इति सिध्यति। २६—गोऽञ्ची। गोशब्दे उपपदे पूजार्थक–अञ्चुधातोः क्विनि नकारलोपे प्राप्ते 'नाञ्चेः पूजायाम्' इति तन्निषेधे उपपदसमासे विशिष्टादौ विभक्तौ शीआदेशे अवङ्प्रकृतिभावयोर्वैकल्पिकतया तद्भावपक्षे 'एङः पदान्तादति' इति पूर्वरूपे गोऽञ्ची। अवङ्पक्षे गवाञ्ची। प्रकृतिभावपक्षे च गोअञ्ची। एवं रूपत्रयम्। २७—अहंशुः। अत्र 'अहम्' इति प्रथमैकवचनान्तास्मद्शब्दरूपसादृश्येन विभक्तिप्रतिरूपकतयाऽव्ययसञ्ज्ञा निपातसञ्ज्ञा च। ततोऽग्रे 'अहंशुभमोर्युस्' इति युस्प्रत्यये सुप्रत्यये तत्सिद्धिः। अहंपदस्यास्मद्शब्दरूपाभ्युपगमे तु 'प्रत्ययोत्तरपदयोश्च' इति मादेशापत्तिरिति। २८—तत्र। तत्र इति त्रलन्तस्य 'तद्धितश्चासर्वविभक्तिः' इति सूत्रेणाव्ययसञ्ज्ञायां ततः परस्याः सप्तम्याः 'अव्ययादाप्सुपः' इति लुकि रूपसिद्धिः। २९—अजा। अजशब्दस्य प्रातिपदिकसंज्ञकत्वात्ततः स्त्रीत्वविवक्षायाम् 'अजाद्यतष्टाप्' इति टाप्प्रत्यये टकारपकारयोरित्सञ्ज्ञायां लोपे च सवर्णदीर्घे ततः सुप्रत्यये हल्ङ्यादिलोपे तत्सिद्धिः। नन्वत्र अकारान्तत्वादेव टाप्सिद्धिरिति किमर्थमजादिपदोपादानम्? अत्रोच्यते, बाधकबाधनार्थमिति। तेन 'जातेरस्त्रीविषयादयोपधात्' इति सूत्रेणात्र जातित्वेऽपि न ङीषिति बोध्यम्। ३०—पुत्रका। पुत्रशब्दात् 'शार्ङ्गरवादिभ्यो ङीन्' इति ङीनि ङकारनकारयोरित्सञ्ज्ञायां भसञ्ज्ञायां 'यस्येति च' इति अकारलोपे ततः स्वार्थे कनि 'केऽणः' इति ह्रस्वे ततष्टापि पुत्रिका, तत्र 'सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम्' इति वार्तिकेन कात्पूर्वस्येकारस्य अकारादेशे पुत्रका, तदभावे पुत्रिका इति रूपद्वयम्। ३१—श्वश्रूः। श्वशुरशब्दात्तदर्थगतस्त्रीत्वविवक्षायां 'श्वशुरस्योकाराकारलोपश्च' इति वार्तिकेन ऊङ्प्रत्यये अकारोकारयोर्लोपे च श्वश्रू इति जाते 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति 'परिभाषैकवाक्यतया' 'स्वौजस्' इति सुप्रत्यये रुत्वे विसर्गे च तत्सिद्धिः। ३२—कृष्णः। कृष्णशब्दस्य प्रातिपदिकसञ्ज्ञायां ततः कृष्णत्वकृष्णपुंस्त्वाद्यर्थत्रयाणां नियमेनोपस्थित्या प्रातिपदिकार्थसूत्रे लिङ्गग्रहणेन नियतोपस्थितिकरूप-

प्रातिपदिकार्थग्रहणेऽपि तत्त्वाक्षतेस्तेषामेव प्रतिपाद्यत्वेन विवक्षयां 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इति सूत्रेण 'द्व्येकयोर्द्विवचनैकवचने' इत्येकवाक्यतया प्रथमैकवचनसुप्रत्यये 'उपदेशेऽजनुनासिक इत्' इत्युकारस्येत्सञ्ज्ञायां 'तस्य लोपः' इति लोपे रुत्वे विसर्गे च 'कृष्णः' इति सिद्धम् । **३३—हरिं भजति ।** अत्र हरिशब्दस्य 'कर्तुरीप्सिततमं कर्म' इति सूत्रेण भजकर्तृवृत्तिक्रियाजन्यप्रीतिरूपफलाश्रयत्वेनेच्छोद्देश्यतया कर्मसंज्ञायां 'कर्मणि द्वितीया' इत्यनेन 'द्व्येकयोः' इत्येकवाक्यतया द्वितीयैकवचनेऽमि प्रत्यये पूर्वरूपे 'हरिम्' इति सिद्धम् । **३४—हरिः सेव्यते ।** अत्र हरिशब्दस्य सेवकवृत्तिसेवारूपक्रियाजन्यप्रीतिरूपफलाश्रयत्वेनेच्छोद्देश्यतया 'कर्तुरीप्सित' इति कर्मत्वेऽपि तस्य 'सेव्यते' इति कर्मतिङाऽभिहितत्वेन 'अनभिहिते' इत्यधिकारेण द्वितीयाया अप्रवृत्तौ हरित्व-हरि-पुंस्त्वरूपाणां त्रयाणामेवार्थानां प्रतिपादने 'प्रातिपदिकार्थ' इति सूत्रेण प्रथमैवेति 'हरिः सेव्यते' इति सिद्धम् । **३५—बलिं याचते वसुधाम् ।** अत्र दुहादिद्वादशानां न्यादिचतुर्णाञ्च धातूनां कर्मणा युक्तमपादानादिविशेषैरविवक्षितं क्रियान्वयिमात्रं कारकसंज्ञं सत् कर्मसंज्ञकं भवतीत्यर्थकेन 'अकथितं च' इति सूत्रेण याच्धातोः कर्मणा वसुधया स्वस्वामिभावसम्बन्धेन युक्तस्य बलेरपादानादिकारकविशेषैरविवक्षणेन क्रियान्वयमात्रविवक्षायां कर्मसञ्ज्ञायां वसुधायाश्च याचकवामनवृत्तियाचनक्रियाजन्य-परस्वत्वनिवृत्ति-स्वस्वत्वोत्पत्ति-इच्छारूपफलाश्रयत्वेनेच्छोद्देश्यतया 'कर्तुरीप्सित' इति कर्मसंज्ञायां 'कर्मणि द्वितीया' इति द्वितीयाविभक्तौ तत्साधु । **३६—आदयति खादयति वाऽन्नं बटुना ।** वटुः अन्नमत्ति खादति वा, तं वटुम् अन्नमत्तुं खादितुं वा पित्रादिः प्रेरयतीत्यर्थः । अत्र वटोः प्रयोज्यकर्तुः भक्षणार्थकादखाद्धात्वोण्यन्तावस्थायां 'गतिबुद्धि' इति प्राप्तकर्मसञ्ज्ञाया 'आदिखाद्योर्न' इत्यनेन वार्तिकेन निषेधे तिङा प्रयोजकर्तुरभिधानेऽपि प्रयोज्यकर्तुरनभिहितत्वेन 'कर्तृकरणयोस्तृतीया' इति तृतीया । **३७—अनु हरिं सुराः ।** अत्र निकृष्टार्थद्योतकानोः 'हीने' इति सूत्रेण कर्मप्रवचनीयसञ्ज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया' इत्यनेन तद्योगे हरिशब्दाद् द्वितीयेति तत्सिद्धिः । **३८—रामेण बाणेन हतो बाली ।** अत्र बालिवधानुकूलधनुराकर्षणादिरूपा क्रिया हन्धात्वर्थस्तत्र स्वातन्त्र्येण विवक्षितत्वाद्रामस्य 'स्वतन्त्रः कर्ता' इति कर्तृसञ्ज्ञा, बाणनिष्ठा क्रिया लक्ष्यवेधनं, तदव्यवधानेन बालिवधसिद्धेर्विवक्षिततया बाणस्य 'साधकतमं करणम्' इत्यनेन करणसञ्ज्ञा, ततश्च 'कर्तृकरणयोस्तृतीया' इत्यनेनोभयत्र तृतीयायां तत्सिद्धिः । **३९—अध्ययनेन वसति ।** अत्राध्ययनस्य वासफलत्वेऽपि ज्ञानद्वारा क्रियाजनकत्वेन हेतुत्वाद् 'हेतौ' इत्यनेन तृतीयायां तत्सिद्धिः । अध्ययनहेतुको देवदत्तादिकर्तृको वास इत्यर्थः । **४०—भक्ताय धारयति मोक्षं हरिः ।** अत्र भक्तस्य तुलसीदलादिद्रव्यदातृत्वेनोत्तमर्णत्वाद् 'धारेरुत्तमर्णः' इति सूत्रेण सम्प्रदानसञ्ज्ञायां 'चतुर्थी सम्प्रदाने' इति चतुर्थी । **४१—चोरात् त्रायते—**अत्र त्राणार्थकत्राधातुप्रयोगे चोरस्य भयजनकत्वेन 'भीत्रार्थानां भयहेतुः' इत्यनेनापादानसञ्ज्ञायाम् 'अपादाने पञ्चमी' इति पञ्चमी । **४२—जाड्यात् जाड्येन वा बद्धः ।** अत्र बन्धने जाड्यस्य हेतुत्वाद् गुणत्वाच्च 'विभाषा-गुणेऽस्त्रियाम्' इत्यनेन जाड्यशब्दात्पञ्चमी, तदभावे 'हेतौ' इति तृतीया । **४३—सर्पिषो जानीते ।** अत्र ज्ञाधात्वर्थप्रवृत्तौ सर्पिषो

वस्तुतः करणत्वेऽपि तदविवक्षायां सम्बन्धमात्रे 'षष्ठी शेषे' इति षष्ठी। **४४—सतः पालकोऽवतरति।** अत्र पालधातोः 'भविष्यति गम्यादयः' इत्यधिकारे 'तुमुन्ण्वुलौ' इति सूत्रेण भविष्यत्यर्थे ण्वुलो विधानात्तद्योगे 'कर्तृकर्मणोः कृति' इति प्राप्तकर्मषष्ठ्याः 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति निषेधे कर्मणि द्वितीया बहुवचनम्। **४५—अधीती व्याकरणे।** पूर्वं कर्माविवक्षया भावे क्तप्रत्यये अधीतशब्दात् कर्तरि 'इष्टादिभ्यश्च' इतीनिप्रत्यये ततः कर्मविशेषजिज्ञासायां कर्मत्वेन सम्बद्धाद् व्याकरणात् 'क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम्' इति वार्तिकेन सप्तमी। **४६—प्रसित उत्सुको वा हरिणा हरौ वा।** अत्र प्रसित-उत्सुकशब्दयोगे हरिशब्दात् 'प्रसितोत्सुकाभ्यां तृतीया च' इति सूत्रेण तृतीया सप्तमी च। एवमेवान्यान्यपि रूपाणि प्रत्यहं लेखनेनाभ्यसनीयानि।

इति रूपलेखनप्रकारः।

---

## अथ पङ्क्तिलेखनप्रकारः।

१—'हलन्त्यम्' इति सूत्रस्य वारद्वयं लेखनमन्योन्याश्रयपरिहाराय। तथाहि—'वाक्यार्थज्ञाने पदार्थज्ञानं कारणम्' इति नियमसत्त्वेन उपदेशे अन्त्यम् इत् इति त्रयाणां पदानामनुवृत्तसूत्रश्रुतानामर्थज्ञानेऽपि हल्पदार्थज्ञानस्याभावेन 'हलन्त्यम्' सूत्रस्य वाक्यार्थाबोधः, एवम् आदिः अन्त्येन सह इति त्रयाणां पदानामर्थज्ञानेऽपि इत्पदार्थज्ञानस्याभावेन 'आदिरन्त्येन सहेता' इत्यस्य वाक्यार्थाबोधः प्रसक्तः, हलन्त्यसूत्रार्थज्ञानाधीनं च इत्पदार्थज्ञानम्, इत्पदार्थज्ञानाधीनं च आदिरन्त्येनसूत्रार्थज्ञानं, तज्ज्ञानाधीनं च हल्पदार्थज्ञानं हल्पदार्थज्ञानाधीनं च हलन्त्यसूत्रार्थज्ञानमिति हलन्त्यमादिरन्त्येनसूत्रयोरन्योन्याश्रयप्रसङ्गः, तद्वारणाय हलन्त्यसूत्रावृत्तिः क्रियते। आवृत्तसूत्रस्य हल्सूत्रेऽन्त्यमित्सञ्ज्ञकं भवति इत्यर्थकरणेन लकार इत् इतीत्पदार्थज्ञानेन आदिरन्त्येनसूत्रार्थबोधे जाते तेन अन्त्येन इता लकारेण सहित आदिर्हकारो मध्यगानां स्वस्य च बोधक इति हल्पदं हयवरट्सूत्रस्थहकारमारभ्य हल्सूत्रस्थहकारपर्यन्तवर्णानां बोधकमिति हल्पदार्थज्ञाने जाते हलन्त्यसूत्रार्थज्ञानं जायते इति नोक्तदोष इति दिक्। अन्योन्याश्रयत्वं च स्वज्ञानाधीनज्ञानत्वम्। **२—लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः सञ्ज्ञा। प्रत्याहारेष्वितां न ग्रहणम्, अनुनासिक इत्यादिनिर्देशात्। न ह्यत्र ककारे परेऽच्कार्यं दृश्यते इति।** अयं भावः—लण् सूत्रे लकारोत्तरवर्त्तिह्रस्वाकारस्यानुनासिकत्वप्रतिज्ञया 'उपदेशेऽजनुनासिक इत्' इति सूत्रेणेत्सञ्ज्ञायां कृतायाम् 'आदिरन्त्येन सहेता' इत्यनेन अकारेण सहोच्चार्यमाणरेफस्य 'उरण् रपरः' इत्येतत्सूत्रघटकस्य हयवरट्सूत्रस्थोऽयम् इतितत्त्वप्रत्यभिज्ञया मध्यपठितलकारस्वपदग्राह्यरेफयोर्बोधक इति रप्रत्याहारसिद्धिः। तेन तत्र सूत्रे रपरत्वविधानवत् लपरत्वविधानं, तेन च 'तवल्कारः' इति रूपसिद्धिर्भवति। ननु रलयोरिति न्यूनं, टकारस्यापि मध्यगतत्वेन रप्रत्याहारे तद्ग्रहणस्यापि युक्तत्वादिति चेत्? न, 'अनुनासिकः' इति ककारपरक-इकारघटितनिर्देशेन प्रत्याहारेषु इत्सञ्ज्ञकवर्णाग्रहणज्ञापनात्। अन्यथा प्रत्याहारेष्वित्सञ्ज्ञकवर्णानामपि ग्रहणे अच्प्रत्याहारे ऋलृक्सूत्रस्थककारस्यापि ग्रहणापत्त्या तत्परकेकारस्य 'इको यणचि' इत्यनेन यणि 'अनुनासिक' इति निर्देशानुपपत्तेः।

३—एतदैतोरोदौतोश्च न मिथः सावर्ण्यम्, ऐऔच् इति सूत्रारम्भसामर्थ्यात् । तेनैच-श्चतुर्विंशतेः सञ्ज्ञाः स्युरिति नापादनीयम् । अयमाशयः-ययोर्वर्णयोः स्थानप्रयत्नसाम्यं तयोः परस्परं सवर्णसञ्ज्ञा 'तुल्यास्यप्रयत्नं सवर्णम्' इत्यनेन विधीयते । तथा च एकारस्य ऐकारस्य चोभयोः कण्ठतालुस्थानं विवृतप्रयत्नश्चेति तयोः, ओकारस्य औकारस्य च कण्ठोष्ठस्थानं विवृतप्रयत्नश्चेति तयोश्च परस्परं सवर्णसञ्ज्ञा प्राप्नोति । तथा च ऋकारेण स्वसवर्णानां त्रिंशद्-कारऌकाराणां यथा ग्रहणं तथा एज्भिः स्वसवर्णचतुर्विंशतेर्ग्रहणमिति नापादनीयम्, तथा सति एकारेण ऐकारस्य, ओकारेण च औकारस्य ग्रहणसिद्धेः ऐऔच् इति सूत्रं व्यर्थमिति तयोः परस्परमसावर्ण्यज्ञापनात् । ४—नाज्झलाविति निषेधो यद्यप्याक्षरसमाम्नायिकानामेव तथापि हकारस्याकारो न सवर्णः तत्राकारस्यापि प्रश्लिष्टत्वात् । तेन 'विश्वपाभिः' इत्यत्र 'होढः' इति ढत्वं न भवति । अयं भावः—वाक्यार्थज्ञाने पदपदार्थज्ञानस्य कारणत्वात् 'अणुदित्सवर्णस्य चाप्रत्ययः' इति सूत्रार्थज्ञानं सवर्णपद-अण्पदयोरर्थज्ञानाधीनम्, अण पदार्थज्ञानं च 'आदिरन्त्येन सहेता' इति प्रत्याहारज्ञानाधीनं प्रत्याहारज्ञानं च 'हलन्त्यम्' इतीत्सञ्ज्ञाज्ञानाधीनं, तज्ज्ञानं च वर्णोपदेशज्ञानाधीनमिति वर्णोपदेशहलन्त्यसूत्र-आदिरन्त्येन-सूत्रार्थज्ञानोत्तरमण्पदार्थज्ञानम्, एवं सवर्णपदार्थज्ञानं च 'तुल्यास्यप्रयत्नं सवर्णम्' इति सूत्रार्थज्ञानाधीनं, तुल्यार्थसूत्रार्थज्ञानञ्च 'नाज्झलौ' इत्यर्थज्ञानाधीनं, ततः पूर्वं बाधकसम्भावनया तुल्यास्य निष्कम्पप्रवृत्त्यभावात्, तज्ज्ञाने तु बाधकज्ञानसत्त्वेन तद्विषयं परिहृत्य निष्कम्पप्रवृत्तेः, एवञ्च सवर्णपदार्थज्ञानं तुल्यास्यनाज्झलौसूत्रार्थज्ञानाधीनमिति 'नाज्झलौ' इत्यर्थज्ञानकाले अणुदित्सूत्रस्याऽर्थावबोधाभावेन तस्याप्रवृत्त्या अच्पदेन सवर्णग्रहणाभावादक्षरसमाम्नायपठितवर्णानामेव सवर्णसञ्ज्ञानिषेध इति हकारदीर्घाकारयोः-कण्ठस्थानविवृतप्रयत्नसाम्येन सवर्णसञ्ज्ञायां 'विश्वपा-भिस्' इत्यत्र 'हो ढः' इति हकारेण दीर्घाकारस्य अणुदित्सूत्रसाहाय्येन ग्रहणे दीर्घाकारस्य ढत्वापत्तिरिति न शङ्क्यम्, 'नाज्झलौ' इत्यत्र सवर्णदीर्घेण दीर्घाकारस्य प्रश्लेषेण तस्यापि हकारेण साकं सवर्णसञ्ज्ञानिषेधादिति बोध्यम् । अष्टाभ्य औश् इत्यादावादेः परस्येत्येतदपि परत्वादनेन बाध्यते । अष्टन्शब्दाज्जसि विभक्तौ 'अष्टाभ्य औश्' इत्यनेन जायमान औश् आदेश 'आदेः परस्य' इत्यनेन अकारस्य स्थाने प्राप्तोऽपि 'अनेकाल् शित्सर्वस्य' इत्यनेन परत्वादादेः परस्य इति बाधित्वा सम्पूर्णस्यैव स्थाने नियम्यते इति अष्टौ इति सिध्यति । ६—इति लोपपक्षे द्वित्वाभावपक्षे चैकयं रूपं तुल्यम् । लोपारम्भफलं तु आदित्यो देवताऽस्येति आदित्यं हविरित्यादौ । 'हरि—अनुभवः' इति स्थिते 'इको यणचि' इति हरिशब्दावयवेकारस्य अनुभवशब्दावयवाकारेऽचि परे 'स्थानेऽन्तरतमः' इति परिभाषैकवाक्यतया यणि यकारादेशे 'अचो रहाभ्यां द्वे' इति रेफात्परस्य यरो यकारस्य द्वित्वे 'हलो यमां यमि लोपः' इति यमो यकारस्य द्वितीये यकारे परे लोपे हर्यनुभवः, लोपाभावपक्षे हर्य्यनुभवः इति । अत्र शङ्कते—लोपसाध्यमेकयकारघटितं रूपं द्वित्वाभावपक्षेऽपि सिद्ध्यति, द्वित्वपक्षे च यकारद्वयघटितमिति रूपद्वयस्य लोपमन्तराऽपि सिद्धेः किमर्थं लोपविधायकं सूत्रमिति ? तत्र समाधानम् । अत्र फलाभावेऽपि आदित्यशब्दादस्य देवता इत्यर्थे

'साऽस्य देवता' इति सूत्रेण 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इत्यधिकारात् ण्यप्रत्यये 'यस्येति च' इत्यल्लोपे आदित्य इत्यत्रानेन सूत्रेण यकारलोपे सुबुत्पत्तौ आदित्य इत्येकयकारघटितं रूपं सिध्यति नान्यथेति। ७—वान्त इत्यत्र वकाराद् गोयूँताविल्यत्र छकाराद्वा पूर्वंभागे लोपो व्योरिति लोपेन वकारः प्रश्लिष्यते। तेन श्रूयमाणवकारान्त आदेशः स्यात् वकारो न लुप्यते इति यावत्। अस्यायमभिप्रायः—'गव-यूतिः' इत्यवस्थायां प्रत्ययलक्षणेन सुबन्तत्वाद् गव इत्यस्य पदत्वे 'लोपः शाकल्यस्य' इति यकारस्य लोपः कथं नेति? अथोच्यते, 'वान्तो यि प्रत्यये' इति सूत्रस्थवकारात्पूर्वमेकोऽन्यो वकारः, यस्य 'लोपो व्योर्वलि' इति लोपः, स च वकारो वान्त इत्यस्य विशेषणं, तेन तदन्तविधिः। तथा च वकारान्तो वकारान्त आदेशो भवति इत्यर्थः सिध्यति। द्विर्बद्धं सुबद्धं भवतीति न्यायेन द्विवकारान्तादेशविधानेन आदेशस्य वकारान्तत्वमेव श्रूयते न तु वकारस्य लोप इति ज्ञायते। तेन प्रकृते न वलोप इति बोध्यम्। ननु 'वान्तो यि प्रत्यये' इति सूत्रे वकारप्रश्लेषस्य न फलं तदुदाहरणेषु 'गव्यं नाव्यम्' इत्यादिषु यकारादिप्रत्ययपरकत्वेन वान्ते भसञ्ज्ञया वलोपाप्राप्तेः; किञ्च तत्र वकारप्रश्लेषोऽपि न सम्भवति 'लोपो व्योर्वलि' इत्यस्य वकाररूपे वलि परे वकारलोपार्थमप्रवृत्तेः। तत्र सूत्रे वत्ववल्त्वयोर्धर्मयोः व्याप्यव्यापकभावसत्त्वेन वकारातिरिक्ते वलि वकारस्य लोपो भवतीत्यर्थात्। अतः 'गोयूँतौ छन्दस्युपसंख्यानम्' इति वार्तिके छकारात्पूर्वं वकारप्रश्लेषः कर्तव्यः। तत्र 'वान्तो यि' इत्यतोऽनुवृत्तं वान्तपदं विशेष्यमादाय तदन्तविधिना पूर्ववदर्थः। तेन 'गव्यूतिः' इत्यत्र न वलोप इति दिक्। ८—कानि सन्ति कौ स्त इत्यत्रास्तेरल्लोपस्य स्थानिवत्त्वेन यणावादेशौ प्राप्तौ न पदान्त इति सूत्रेण पदान्तविधौ तन्निषेधाच्च स्तः। अयमभिप्रायः—वाक्यसंकारपक्षे वाक्यपर्यन्तं प्रकृतिप्रत्ययान् संस्थाप्य ततः श्रुतवर्णक्रमेण संस्कार इति सिद्धान्तात् 'किं जस् अस् अन्ति, किम् औ अस् तस्' इति प्रकृतिप्रत्ययसंस्थापनानन्तरं जसः शि आदेशे किमः कादेशे नुमि दीर्घे कानि अस् अन्ति इति स्थितौ एवमुत्तरत्र कादेशे वृद्धौ कौ अस् तस् इति स्थितौ च 'श्नसोरल्लोपः' इत्यकारलोपे 'अचः परस्मिन् पूर्वविधौ' इति सूत्रेण ङित्प्रत्ययनिमित्तकस्य अल्लोपस्य स्थानिभूताकारात्पूर्वत्वेन दृष्टस्य इकारस्य यणि, औकारस्य आवादेशे वा कर्तव्ये स्थानिवद्भावेनाच्त्वबुद्ध्या यणावादेशौ प्राप्तौ पदान्तविधौ न स्थानिवदित्यर्थक 'नपदान्त' सूत्रेण स्थानिवद्भावनिषेधान्न भवत इति। ९—पुरस्तादपवादन्यायेनेयं वृद्धिरेङि पररूपमित्यस्यैव बाधिका न त्वोमाङोश्चेत्यस्य। तेन अवैहि इति वृद्धिरसाधुरेव। अयमर्थः—'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति न्यायस्वरूपम्। पूर्वं पठिता अपवादा अव्यवहितोत्तरविधीनां बाधका भवन्ति न तु व्यवहितोत्तरविधीनामिति तदर्थः। तथा च 'एत्येधत्यूठ्सु' इति सूत्रस्य यत्र यत्र अवर्णादेजादि—इण्एधन्यतर-धात्ववयावाच्परत्वसत्त्वेन प्राप्तिविषयता तत्र तत्र उप-एति प्र-एधते इत्यादौ 'एङि पररूपम्' इत्यस्य प्राप्तिर्वर्तते कचिच्च 'अव-एहि' इत्यादौ 'एङि पररूपम्' 'अमाङोश्च' इत्युभयोः प्राप्तिर्वर्तते। अतः 'एत्येधत्यूठ्सु' इत्यस्य निरवकाशत्वेनापवादत्वादुभयबाधकत्वं प्रसक्तं, तथापि सकललक्ष्यप्राप्तिविषयतया नाप्राप्त एङिपर-

रूपबाधेन उप-एति प्र-एधते इत्यादौ वृद्धेश्चारितार्थ्येन 'ओमाङोश्च' इत्यस्य बाधे निरवकाशत्वरूपबाधबीजस्याभावेन उभयोस्तुल्यबलत्वे 'विप्रतिषेधे परं कार्यम्' इति पररूपस्य परत्वाद् प्रबलतया अव-एहि इत्यत्र प्रवृत्तिरिति अवेहि इति पररूपघटितं साधु, वृद्धिघटितं चासाधु। यत्र निरवकाशशास्त्रं पूर्वं ततः सकललक्ष्यप्राप्ति-विषयशास्त्रं, ततः कचिल्लक्ष्यप्राप्तिविषयशास्त्रं तत्र पुरस्तादपवादन्यायप्रसरः। निरवकाशशास्त्रं मध्ये सकललक्ष्यप्राप्तिविषयशास्त्रं पूर्वं कचिल्लक्ष्यप्राप्तिविषयशास्त्रं चोत्तरत्र, तत्र 'मध्ये पठिता अपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति न्याय इति विवेकः। मध्ये पठितापवादन्यायश्च स्त्रीप्रत्ययप्रकरणे द्रष्टव्यः। १०—अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्, व्रश्चेति सूत्रे राजेः पृथग् भ्राजिग्रहणाज्ज्ञापकात्। तेनोढग्रहणे क्तान्तमेव गृह्यते न तु क्तवत्वन्तस्यैकादेशः। प्रोढवान्। अयं भावः—व्याकरणशास्त्रे 'स्वं रूपम्' इति शास्त्रेण शब्दस्वरूपस्यैव शब्देन ग्रहणाद् राज्शब्देन केवलराज्शब्दस्य भ्राज्घटकराज्शब्दस्य चाविशेषाद् ग्रहणे उभयोरपि 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इत्यत्र केवलराजग्रहणेनैव षत्वसिद्धौ भ्राजग्रहणं व्यर्थं सज्ज्ञापयति—'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्' इति। तथा चात्र शास्त्रे शब्दस्वरूपस्य ग्रहणेऽपि विशेषणतयोपस्थितस्यार्थस्य यत्र ग्रहणसम्भवस्तत्र सार्थकस्यैव शब्दस्वरूपस्य ग्रहणं न तु निरर्थकस्येति। तेन 'प्रादूहोढोढ्येषैष्येषु' इति वार्तिकस्थ'ऊढ'पदेन सार्थकस्य तस्य ग्रहणात् 'प्रौढः' इत्यत्र वृद्धिर्भवति 'प्रोढवान्' इत्यत्र क्तवतुप्रत्ययान्त'ऊढवत्'शब्दघटक'ऊढ' इत्यस्य अनर्थकत्वेन तस्याग्रहणादस्य वार्तिकस्याप्रवृत्तौ 'आद् गुणः' इति गुण एवेति। ११—अन्तवद्भावेन पदान्तरेफस्य न विसर्गः; उभयथर्क्षु कर्तरि चर्षिदेवतयोरित्यादिनिर्देशात्। प्र-ऋच्छति इति स्थिते 'उपसर्गादृति धातौ' इति सूत्रेण 'स्थानेऽन्तरतमः' इति परिभाषैकवाक्यतयाऽनान्तर्यमेवैतयोरान्तर्यम् इत्यान्तरतम्यादुपसर्गावयवाकाराद् ऋकारादि-ऋच्छधात्ववयवेऽचि परे पूर्वपरयोः' स्थाने आकारैकादेशे 'उरण् रपरः' इति सूत्रेण रपरे कृते प्रार्च्छति इति सिध्यति। नन्वत्र 'अन्तादिवच्च' इत्यनेन पूर्वस्थानिघटितसमुदाय'प्र'वृत्तिपदत्वधर्मस्य एकादेशान्ते प्रार् इत्यत्रारोपेण रेफस्य पदान्तत्वात् 'खरवसानयोर्विसर्जनीयः' इति विसर्गः कुतो नेति चेत्? अत्रोच्यते, 'उभयथर्क्षु' 'कर्तरि चर्षि' इत्यादिषु रेफस्य विसर्गीकरणपूर्वकं रेफविशिष्टनिर्देशेन अन्तवद्भावेन पदान्तत्वमादाय रेफस्य विसर्गाभावज्ञापनात्। १२—उपसर्गेणैव धातोराक्षेपे सिद्धे धाताविति योगविभागेन पुनर्वृद्धिविधानार्थम्। तेन 'ऋत्यकः' इति पाक्षिकोऽपि प्रकृतिभावोऽत्र न भवति। उप-ऋच्छति इति स्थिते 'उपसर्गादृति धातौ' इति सूत्रेण 'स्थानेऽन्तरमः' इति परिभाषैकवाक्यतयाऽनान्तर्यमेवैतयोरान्तर्यम् इत्यान्तरतम्यमादाय उपोपसर्गावयवाकाराद् ऋकारादिऋच्छधात्ववयवेऽचि परे पूर्वाकार-परऋकारयोः स्थाने आकारवृद्ध्यैकादेशे 'उरण् रपरः' इति रपरे कृते उपार्च्छति इति सिद्धम्। नन्वत्र 'उपसर्गादृति धातौ' इति वृद्धिः कथम्? 'ऋत्यकः' इति ह्रस्वसमुच्चितप्रकृतिभावप्रवृत्तेः; इति चेत्? न, 'उपसर्गादृति धातौ' इत्यत्र धातौ इति योगविभागं कृत्वा

तत्र वाक्यभेदेन च उपसर्गादृ ऋति इत्यनुवर्त्य पूर्वसूत्रविध्यनुवादभूतपुनर्वृद्धिविधानसामर्थ्येन प्रकृतिभावस्यापि बाधात्। न च पूर्वसूत्रे धाताविस्यस्याभावे तस्याधातावपि प्रवृत्त्यापत्तिरिति वाच्यम्। धातुयोगं विनोपसर्गत्वस्यानुपपत्तेरुपसर्गपदेन धातुपदस्याक्षेपात्, तथा च पूर्वसूत्रस्य धाताविस्यस्याभावेऽपि अवर्णान्तादुपसर्गादृकारादौ धातौ पूर्वपरयोर्वृद्धिर्भवतीत्यर्थस्य सिद्धतया धाताविति योगविभागेन पुनर्वृद्धिविधानम्। तेन न प्रकृतिभाव इति दिक्। **१३—नाज्झलाविति सावर्ण्यनिषेधस्तु न दीर्घशकारयोः, ग्रहणकशास्त्रस्य सावर्ण्यविधिनिषेधाभ्यां प्रागनिष्पत्तेः।** अयमर्थः—'अकः सवर्णे दीर्घः' इति सूत्रे 'अचि' इत्यनुवृत्तिः किमर्था? तदननुवृत्तावपि अकां सावर्ण्यमज्भिरेवेति सवर्णपदेनैवाजितरहलां व्यावृत्तिसिद्धेरिति प्रश्नाशयः। कुमारी शेते इत्यत्र तत्सूत्रे 'अचि' पदानुवृत्त्यभावे दीर्घेकारशकारयोः विवृतप्रयत्नतालुस्थानसाम्येन 'तुल्यास्यप्रयत्नं सवर्णम्' इति सवर्णसञ्ज्ञायां दीर्घेकारात् शकारे सवर्णे परे पूर्वपरयोः स्थाने दीर्घापत्तिः। न च 'नाज्झलौ' इति सूत्रेण तयोः सावर्ण्यनिषेध इति वाच्यम्, तत्र सूत्रेऽच्पदेन दीर्घादीनां ग्रहणाभावेन दीर्घादीनां हलां च परस्परं निषेधस्य वक्तुमशक्यत्वात्। अच्पदेन दीर्घादीनां ग्रहणम् अणुदित्सूत्रेण कर्तव्यम्, तच्च न सम्भवति वाक्यार्थज्ञाने पदपदार्थज्ञानस्य कारणतया 'नाज्झलौ' इत्येतदधीनतया सवर्णपदार्थनिश्चयस्य 'नाज्झलौ' इति सूत्रार्थबोधकाले अणुदित्सूत्रार्थावबोधाभावात् इत्युत्तराशयः। **१४—नित्यमिति किम्? हरी एतावित्यादावयमेव प्रकृतिभावो यथा स्यादिकोऽसवर्ण इति ह्रस्वसमुच्चितो मा भूत्।** ननु 'प्लुतप्रगृह्या अचि नित्यम्' इति सूत्रे नित्यग्रहणं किमर्थम्? नित्यग्रहणाभावेऽपि विकल्पार्थकविभाषादिपदाभावेनान्यविधीनामिवास्यापि नित्यत्वावगमादिति चेत्? सत्यम्, नित्यग्रहणमन्तराऽपि नित्यत्वसिद्धेः पुनर्नित्यग्रहणस्य प्लुतस्य प्रगृह्यसञ्ज्ञकस्य चाचि परेऽयमेव प्रकृतिभावो नान्य इति बोधनार्थत्वात्। तेन 'हरी–एतौ' इत्यत्र द्विवचनान्तस्य ईकारान्तस्य 'ईदूदेद् द्विवचनं प्रगृह्यम्' इति प्रगृह्यसञ्ज्ञायामयमेव प्रकृतिभावो भवति न तु 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इति ह्रस्वसमुच्चितः। अन्यथा परत्वात्स एव स्यादिति। **१५—अत्र ह्रस्वविधिसामर्थ्यादेव प्रकृतिभावे सिद्धे तदनुकर्षणार्थश्चकारो न कर्तव्य इति भाष्ये स्थितम्।** चक्री–अत्र इति स्थिते 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इति सूत्रेण पदान्तेको दीर्घेकारस्य स्थाने सवर्णभिन्नेऽचि अकारे परे ह्रस्वादेशे प्रकृतिभावे च चक्रि अत्र इति। ह्रस्वादेशप्रकृतिभावयोर्विकल्पतया तदभावपक्षे 'इको यणचि' इति यणादेशे चक्र्यत्र इति। नन्वत्र सूत्रे चकारेण प्रकृतिभावस्य अनुकर्षः करणीयः। स च नावश्यकः ह्रस्वादेशविधानसामर्थ्यादेव प्रकृतिभावसिद्धेः। ह्रस्वे कृतेऽपि यदि यण् स्यात्तदा तद्विधानमेव व्यर्थं स्यादिति। एवञ्च प्रकृतिभावस्यान्यथासिद्धत्वात्तदनुकर्षणार्थश्चकारो न कर्तव्य इति भाष्ये स्थितम्। **१६—वक्किम्? अप्लुत इत्युक्तेऽप्लुत एव विधीयेत प्लुतश्च निषिध्येत। तथा च प्रगृह्याश्रये प्रकृतिभावे सिद्धे प्लुतस्य श्रवणं न स्यात्। अग्नी ३ इति।** अग्नी–इति इत्यवस्थायां 'दूराद्धूते च' इत्यनेन सम्बोधनद्विवचनान्त 'अग्नी' इत्यस्य टेः प्लुतादेशः। तस्यासिद्धत्वाद् 'ईदूदेद् द्विवचनं प्रगृह्यम्' इत्यनेन प्रगृह्यसञ्ज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्'

इत्यनेन प्रकृतिभावे 'अग्नी ३ इति' सिध्यति। 'अप्लुतवदुपस्थिते' इति सूत्रे प्लुतस्य अप्लुतादेशे अप्लुतवद्भावे वा सन्धिकार्यप्रवृत्ताविशेषाद् वत्करणं वृथेति 'वत्किम्' इति प्रश्नाशयः। वद्ग्रहणाभावे उक्तोदाहरणे प्रगृह्यसञ्ज्ञानिमित्तकप्रकृतिभावेन सन्धिकार्याप्रवृत्ते प्लुतादेशे तच्छ्रवणापत्तिरप्लुतवद्भावे च प्लुतस्याश्रवणमिति विशेषसद्भावात्सूत्रे वत्करणमावश्यकमित्युत्तरम्। **१७—मणीवोष्ट्रस्येति तु इवार्थे वशब्दो वाशब्दो वा बोध्यः।** ननु 'ईदूदेद् द्विवचनं प्रगृह्यम्' इति सूत्रेण ईकारान्तद्विवचनस्य प्रगृह्यसञ्ज्ञा, ततोऽचि परे प्रकृतिभावश्च यथा हरी-एतौ इत्यत्र भवति तथैव 'मणी-इव' इत्यत्रापि, इति कथं 'मणीवोष्ट्रस्य' इति सवर्णदीर्घ इति चेत्?

न, नात्र इवशब्दः किन्तु इवार्थो वशब्दो वाशब्दो वा। तेनाऽत्र नैव सवर्णदीर्घ इति। **१८—मात् किम्? अमुकेऽत्र। असति माद्ग्रहणे एकारोऽप्यनुवर्तेत।** ननु 'अदसो मात्' इति सूत्रे मात्ग्रहणं किमर्थम्, माद्ग्रहणाभावे 'अदसः' इति सूत्रसत्त्वे अदस्शब्दावयवदीर्घेकारोकारौ प्रगृह्यसञ्ज्ञकावित्यर्थेन अमू-आसाते अमी-ईशाः इत्यादिसिद्धेः इति चेत्? न, माद्ग्रहणाभावे 'सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' इति न्यायेन 'इदूदेद्' इति सकलस्यानुवृत्तौ अदस्शब्दावयवैकारस्यापि प्रगृह्यसञ्ज्ञापत्तौ 'अमुकेऽत्र' इत्यत्रापि तदापत्तेः। सति तु माद्ग्रहणे अदस्शब्दावयवैकारस्य मकाराव्यवहितोत्तरस्यासम्भवान्न तदनुवृत्तिरिति। **१९—अर्थग्रहणं किम्? वृत्तावर्थान्तरोपसङ्क्रान्ते मा भूत्, वाप्यामश्वो वाप्यश्वः।** ननु 'ईदूतौ च सप्तम्यर्थे' इति सूत्रेऽर्थग्रहणं किमर्थम्? सप्तम्यर्थबोधकमीकारान्तमूकारान्तं वा प्रगृह्यसञ्ज्ञकमित्यर्थेन सिद्धिं गच्छतां सोमो गौरी अधिश्रितः मामकी तनू इति इत्यादीनामुदाहरणानां तत्र सूत्रेऽर्थग्रहणाभावेऽपि सप्तम्यन्तमीकारान्तमूकारान्तं वा प्रगृह्यसञ्ज्ञकं भवतीत्यर्थेन प्रत्ययलक्षणेन सप्तम्यन्ततया प्रगृह्यसंज्ञाप्रवृत्त्या सिद्धत्वात्। न च 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति तदन्तविधिनिषेधेनोक्तार्थासम्भवः किन्तु ईकाररूपा ऊकाररूपा या सप्तमी प्रगृह्यसञ्ज्ञिकेत्यर्थ इति प्रकृतोदाहरणे ईकारोकाररूपसप्तम्यभावात्तदसिद्धिरिति वाच्यम्, ययी पपी इत्यादावीकाररूपसप्तम्याः सम्भवेऽपि ऊकाररूपसप्तम्याः कुत्राप्यसम्भवेनात्र सामर्थ्यात् सञ्ज्ञाविधाविति निषेधाप्रवृत्तिकल्पनेन पूर्वोक्तार्थेन तत्सिद्धेः इति चेत्? अत्रोच्यते, अर्थग्रहणेन सप्तम्यर्थविशेष्यताकोपस्थितिजनकस्यैव ईकारान्तस्य ऊकारान्तस्य वा तत्सञ्ज्ञाबोधनात्। तथा च समासादिवृत्तौ विशिष्टशक्तिवादिनां विशिष्टार्थस्यैवोपस्थितेः पूर्वपदार्थस्य तत्र विशेषणतयोपस्थितौ 'वाप्यश्वः' इति समासघटकस्य वापीपदस्य प्रत्ययलक्षणेन सप्तम्यन्तत्वेऽपि सप्तम्यर्थविशेष्यताकोपस्थितिजनकत्वाभावेन न प्रगृह्यसञ्ज्ञा, तेन यण्प्रवृत्त्या वाप्यश्वः इति सिध्यति। अन्यथा प्रगृह्यसञ्ज्ञायां यण् न स्यादिति। **२०—स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्तते। चतुर्मुखः।** ननु चतुर्-मुख इति स्थिते 'यरोऽनुनासिकेऽनुनासिको वा' इति सूत्रेण पदान्तस्य यरो रेफस्य अनुनासिके मुखशब्दावयवमकारे परे अनुनासिको मूर्धस्थानजन्यत्वेन णकारः कुतो नेति चेत्? अत्रोच्यते, 'स्थानेऽन्तरतमः' इति प्रथमान्तपाठे स्थानिनः स्थानेऽन्तरतम एव आदेशो भवति नत्वन्य इति यथा नियमः तथा भाष्यकृता 'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठं स्वीकृत्य आदेशोऽन्तर-

तमे स्थानिनि भवतीत्यर्थं व्याख्याय आदेशोऽपि अन्तरतमस्यैव स्थानिनः स्थाने भवतीति नियमः स्वीकृतः। यथा च णकारोऽनुनासिकादेशः स्थानिनां यरां मध्ये स्पृष्टप्रयत्नवत्त्वेन टठडढणानां स्थाने एव भवति नत्वन्यस्य स्थाने इति नियमेन चतुर्मुख इत्यत्र रेफस्य णकारो न भवतीति। यदि तु प्रथमान्तपाठपक्षे किमिति णकारो नेत्युच्यते तर्हि 'अनुस्वारस्य ययि परसवर्णः' इति सूत्रादत्र सूत्रे सवर्णपदमपकृष्य सवर्णोऽनुनासिकादेशो भवतीत्यर्थादत्र रेफस्य सवर्णानुनासिकाभावेन न णकारादेश इति बोध्यम्। **२१—कुर्वन्तीत्यत्र णत्वे प्राप्ते तस्यासिद्धत्वादनुस्वारे परसवर्णे च कृते तस्यासिद्धत्वान्न णत्वम्।** ननु कुर्वन्ति इत्यत्र 'अट्कुप्वाङ्नुम्व्यवायेऽपि इत्यनेन रेफादड्व्यवहितनकारस्य णत्वं कुतो नेति चेत्? उच्यते। तत्र णत्वे प्राप्ते तस्यासिद्धत्वात् 'नश्चापदान्तस्य झलि' इति नकारस्यानुस्वारादेशे 'अनुस्वारस्य ययि परसवर्णः' इति सूत्रेण तस्य परसवर्णेन नकारादेशे परसवर्णस्य णत्वदृष्ट्याऽसिद्धत्वान्न णत्वप्रवृत्तिरिति। **२२—येन नाप्राप्त इति न्यायेन 'विसर्जनीयस्य स' इत्यस्यापवादोऽयं नतु 'शर्परे विसर्जनीय' इत्यस्य। तेन वासःक्षौममित्यादौ विसर्ग एव।** 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति न्यायस्वरूपम्। यत्कर्तृकावश्यप्राप्तौ यो विधिरारभ्यते स तस्य बाधको भवतीत्यर्थः। यथा यत्र यत्र 'कस्कादिषु च' इत्यस्य प्रवृत्तिस्तत्र तत्र 'कुप्वोः≍क≍पौ च' इत्यस्य प्राप्तिरिति 'कुप्वोः≍क≍पौ च' इति शास्त्रकर्तृकावश्यप्राप्तौ 'कस्कादिषु च' इत्यस्यारम्भ इति। 'कस्कादिषु च' इति≍क≍पयोर्बाधकं भवति। सकललक्ष्यप्राप्तसूत्रस्यैवापवादो भवतीत्यर्थः। एवञ्च 'विसर्जनीयस्य सः' इत्यस्य सकललक्ष्येषु प्राप्तिसत्त्वे कुप्वोरित्यस्य आरम्भो न तु शर्परे इत्यस्य सर्वत्र प्राप्तिरिति कुप्वोरिति सूत्रं सकललक्ष्यप्राप्तविसर्जनीयस्येति सूत्रस्यैव बाधकं न तु क्वचित् प्राप्तिविषयशर्परे विसर्जनीय इत्यस्य। किन्तु वासः—क्षौमम् इत्यादौ शर्परे इत्येव परत्वाद्बाधकमिति। **२३—एकादेशशास्त्रनिमित्तकस्य न षत्वम्। कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठात्। तेनेह न—मातुः कृपा।** अयं भावः—'भ्रातुः—पुत्रः' इत्यत्र 'इदुदुपधस्य चाप्रत्ययस्य' इत्यनेन विसर्गस्योकारोपधतया षत्वसिद्धेस्तदर्थं क्रियमाणः कस्कादिगणे भ्रातुष्पुत्रशब्दपाठो व्यर्थः सन् एकादेशशास्त्रनिमित्तकस्य 'इदुदुपधस्य चाप्रत्ययस्य' इत्यनेन षत्वं न भवतीति ज्ञापयति। ततश्च कस्कादिगणे तत्पाठाभावे 'भ्रातुः' इति विसर्गस्य 'ऋत उत्' इत्येकादेशशास्त्रनिमित्तकत्वेन तस्य षत्वं न प्राप्नोतीति गणे तत्पाठस्य चारितार्थ्यम्। फलं तु मातुः कृपा इत्यत्र विसर्गस्य न षत्वमिति। **२४—कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थः, व्यपेक्षायां नित्यार्थश्च।** ननु सर्पिः—कुण्डिका इति स्थिते 'नित्यं समासेऽनुत्तरपदस्थस्य' इति 'इसुसोः सामर्थ्ये' इति वा विसर्गस्य षत्वसिद्धेः कस्कादिगणे सर्पिष्कुण्डिकाशब्दपाठः किमर्थं इति चेत्? अत्रोच्यते, 'नित्यं समासे' इत्यनेन हि समासे एव षत्वं विधीयते सर्पिषः कुण्डिका सर्पिष्कुण्डिकेति, 'इसुसोः सामर्थ्ये' इत्यनेनापि व्यपेक्षारूपसामर्थ्ये एव षत्वं विधीयते सर्पिष्कुण्डिकायां वर्तते इत्यादौ, यदा तु तिष्ठतु सर्पिः कुण्डिकामानय इति प्रयुज्यते तत्रापि 'सर्पि-

कुण्डिकाम्' इति षत्वघटितं यथा स्यादिति कस्कादिगणे पाठः। किञ्च व्यपेक्षायाम् 'इसुसोः सामर्थ्ये' इति विकल्पेन षत्वं भवति कस्कादिगणे पाठेन व्यपेक्षायामपि सर्पिष्कुण्डिकायाम् इत्येकमेव भवतीति कस्कादिगणे सर्पिष्कुण्डिकाशब्दस्य पाठ इति बोध्यम्। **२५—उत्वं प्रति रुत्वस्यासिद्धत्वं तु न भवति, रुत्वमनूद्य उत्वविधेः सामर्थ्यात्।** अयं भावः—'अतो रोरप्लुतादप्लुते' इत्यस्य सपादसप्ताध्यायीस्थत्वेन तद्दृष्ट्या 'ससजुषो रुः' इत्यादिरुत्वविधायकानां त्रैपादिकतया 'पूर्वत्रासिद्धम्' इति असिद्धत्वे 'अतो रोरप्लुतादप्लुते' इत्यस्य वैयर्थ्यमेव स्यादतो रुत्वमुद्दिश्योत्वविधानसामर्थ्यादुत्वदृष्ट्या रुत्वस्यासिद्धत्वं नेति कल्प्यते। तेन रोः स्थाने उत्वं सिद्ध्यति। **२६—अप्लुतात् किम्? एहि सुस्रोत३ अत्र स्नाहि। प्लुतस्यासिद्धत्वादतः परोऽयम्। अप्लुतादिति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम्। तपरकरणस्य तु न सामर्थ्यं दीर्घनिवृत्त्या चरितार्थत्वात्।** 'अतो रोरप्लुतादप्लुते' इति सूत्रे अप्लुतात् इति किमर्थम्? तदभावे 'एहि सुस्रोत ३—अत्र स्नाहि' इति वाक्ये पूर्ववाक्यस्य टेः 'दूराद्धूते च' इत्यनेन प्लुतविधानात् पदान्ते रोः प्लुतात्परत्वेन तत्रात्वं मा भूत् इति सूत्रे अप्लुतात् इति पदम्। नन्वत्र प्लुतात्परत्वेन रोः ह्रस्वाकारात्परत्वाभावनैवोत्वं न प्राप्नोति तत्किमप्लुतात्करणेन? अत्रोच्यते, एतत्सूत्रदृष्ट्या प्लुतस्यासिद्धत्वेनातः परत्वमेवेति। न चैवमप्लुताद्ग्रहणसत्त्वेऽपि प्लुतस्यासिद्धत्वेनाप्लुतादपि परत्वं सुवचमिति वाच्यम्, अप्लुताद्ग्रहणसामर्थ्येन प्लुतस्यासिद्धत्वाभावज्ञापनात्। अन्यथा तद् व्यर्थमेवेति। न चातः इति तपरकरणेनैव तदसिद्धत्वाभावज्ञापनं सम्भवतीति वाच्यम्, तपरकणस्य 'देवा अत्र' इति दीर्घव्यावृत्त्या चरितार्थत्वात्। **२७—अशि किम्? देवाः सन्ति। यद्यपीह यत्वस्यासिद्धत्वाद्विसर्गो लभ्यते तथापि विसर्गस्य स्थानिवद्भावेन रुत्वाद् यत्वं स्यात्। न चाल्विधिः, रोरिति समुदायरूपाश्रयणात्।** 'भोभगोअघोअपूर्वस्य योऽशि' इति सूत्रे अशिग्रहणं किमर्थम्? तदभावेऽपि देवास् सन्ति इति स्थिते 'ससजुषो रुः' इति रुत्वे 'भोभगो' इति यत्वे प्राप्ते तस्य पूर्वत्रासिद्धीयत्वेनासिद्धत्वात् 'खरवसानयोर्विसर्जनीयः' इति विसर्गे 'देवाः सन्ति' इति सिद्धेरिति प्रश्नः। तत्रोत्तरम्—विसर्गे जातेऽपि विसर्गस्य 'स्थानिवदादेशोऽनल्विधौ' इति स्थानिवद्भावेन रुत्वातिदेशे पुनरपि यत्वापत्तिः। कृते त्वशिग्रहणे सकारस्याऽश्त्वाभावान्न यत्वमिति। न च 'अनल्विधौ' इति स्थानिवद्भावनिषेध इति वाच्यम्, रुत्वस्य रेफोकारद्वयवृत्तित्वेनाऽल्मात्रवृत्तित्वाभावात्। **२८—पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम्। अजर्घाः।** ननु 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति सूत्रे पूर्वस्य इति किमर्थम्? ढ्रलोपे इति सप्तमीश्रुत्या 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषाबलेन पूर्वस्य इति पदोपस्थापनात् इति चेत्? न, तथा सति अस्य सूत्रस्य 'अलुगुत्तरपदे' इत्यधिकारस्थतया अत्र सूत्रे 'उत्तरपदे' इत्यस्यानुवृत्तौ तेन पूर्वपदस्याक्षेपात्पूर्वस्याणः पूर्वपदस्थस्यैव दीर्घः स्यात् तथा चैकपदे रेफलोपनिमित्तके रेफे परे ढलोपनिमित्तकढकारे वा परे पूर्वस्याणो दीर्घो न स्यात्। पूर्वस्य ग्रहणे कृते तत्सामर्थ्यादत्रोत्तरपदे इति न सम्बध्यते। तेनैकपदेऽपि दीर्घः सिध्यति। यथा 'अजर्घ—र्' इत्यत्र रेफे परे पूर्वस्याणो दीर्घे विसर्गे च 'अजर्घाः' इति। **२९—पूर्वसूत्रेण**

सिद्धे समासग्रहणं नियमार्थम्, यत्र सङ्घाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैव । तेन वाक्यस्य न । अयं भावः—रामशब्दस्य दशरथापत्यरूपार्थबोधकत्वेन यथा 'अर्थवत्' इति सूत्रेण प्रातिपदिकसञ्ज्ञा, तथा 'राजपुरुष' इत्यादिसमासानामपि राजसम्बन्धिपुरुषरूपार्थबोधकतया 'अर्थवत्' इति पूर्वसूत्रेण प्रातिपदिकसञ्ज्ञासिद्धौ 'कृत्तद्धितसमासाश्च' इति सूत्रे समासग्रहणं किमर्थम् ? न च कृत्तद्धितग्रहणमपि किमर्थं पाचक औपगव इत्यादीनामप्यर्थबोधकतया पूर्वसूत्रेणैव प्रातिपदिकसञ्ज्ञासिद्धेरिति वाच्यम्, तत्र प्रत्ययान्तत्वेन अप्रत्यय इति पर्युदासात्पूर्वसूत्राप्रवृत्तेः । समासे तु प्रत्ययलक्षणेन सुपः सत्त्वेऽपि तदन्ततदादित्वाभावस्य सत्त्वेन अप्रत्यय इत्यस्याप्रवृत्तिः । 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषया अप्रत्ययपदस्य प्रत्ययान्ततदादिभिन्नमित्यर्थात् । अत्रोच्यते—'सिद्धे सति आरभ्यमाणो विधिर्नियमाय भवति' इति सिद्धान्तानुसारेण समासग्रहणं नियमार्थम् । नियमस्यान्यनिवृत्तिफलकतया समासेतरस्य सर्वस्य निवृत्तौ नियम्यसूत्रवैयर्थ्यापत्त्या नियामकव्यापकं यद् नियम्यव्याप्यं तस्य निवृत्तिः यथा भवेत्तथा नियमः करणीय इति सिद्धान्तादयं नियमाकार उपलभ्यते—यस्मिन् समुदाये पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैवेति । पदसञ्ज्ञकपूर्वभागकसमुदायस्य समासेतरस्य प्रातिपदिकसञ्ज्ञा नेति फलितोऽर्थः । तेन 'गाम् आनय' इति वाक्यस्य समासेतरतया पदसञ्ज्ञकपूर्वभागकसमुदायतया च न प्रातिपदिकसञ्ज्ञा 'अर्थवत्' इति सूत्रेणाऽर्थबोधकत्वेऽपि भवतीति । ३०—प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्येव सिद्धे ङ्याब्ग्रहणं ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्याद् ङ्याब्भ्यां प्राङ् मा भूदित्येवमर्थम् । अयमर्थः,–यथा कुरुशब्दात्पङ्गुशब्दाच्च ऊङ्प्रत्यये ऊङन्तस्य प्रातिपदिकत्वाभावेऽपि 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषया लिङ्गबोधकप्रत्ययान्ते प्रातिपदिकत्वस्य तद्व्याप्यधर्मस्य वाऽतिदेशो भवतीत्यर्थिकया तत्र प्रातिपदिकत्वमारोप्य ततः सुबुत्पत्तिर्भवति, तथैव 'रमा' 'गौरी' इत्यादावपि रमगौरवृत्तिप्रातिपदिकत्वमुक्तपरिभाषया 'रमा' 'गौरी' इत्यादावाबन्ते ङ्यन्ते चारोप्य सुबुत्पत्तेस्ततः सिद्धौ तत्र सुबुत्पत्त्यर्थं ङ्याब्ग्रहणस्यानावश्यकत्वेन 'ङ्याप्प्रातिपदिकात्' इति सूत्रे ङ्याब्ग्रहणं व्यर्थं सज्ज्ञापयति–स्त्रीत्वविशिष्टार्थबोधकप्रातिपदिकात् स्वार्थिकतद्धितप्रत्ययमन्तरङ्गमपि प्रबाध्य पूर्वं ङ्याप्प्रवृत्तिरिति । तेन 'आर्यका' 'आर्यिका' 'लोहितिका' 'लोहिनिका' इति प्रत्येकं रूपद्वयसिद्धिः । तथा हि, आर्यशब्दात् स्त्रीत्वविशिष्टार्थबोधकाद् 'अजाद्यतष्टाप्' इति टापं स्वार्थद्रव्यलिङ्गसङ्ख्याकारकाणां क्रमिकतया लिङ्गप्रयुक्तकार्यापेक्षया स्वार्थिककार्याणामन्तरङ्गत्वादत्यन्तस्वार्थिककप्रत्ययस्याऽन्तरङ्गत्वात्पूर्वं प्रवृत्तौ प्राप्तायामुक्तज्ञापनेन कपः पूर्वं टापि पश्चात्कप्रत्यये 'केऽणः' इति ह्रस्वे कात्पूर्वस्याकारस्य आतःस्थानिकतया 'उदीचामातः स्थाने यकपूर्वायाः' इत्यनेन वैकल्पिकेत्वेन 'आर्यिका' 'आर्यका' इति रूपद्वयं सिद्ध्यति । टापः प्राक् कप्रत्यये ततष्टापि कात्पूर्वस्याकारस्याऽऽतःस्थानिकत्वाभावेन 'उदीचामातः स्थाने' इत्यस्याप्रवृत्तौ 'प्रत्ययस्थात्कात्पूर्वस्या' इति नित्यमेवेत्वप्रवृत्तेः 'आर्यिका' इत्येकमेव स्यात् । एवं रक्तवर्णस्त्रीवाचकलोहितशब्दाद् 'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीपः कन्प्रत्ययस्यान्तरङ्गस्य च प्राप्ता-

युक्तरीत्या प्रथमं ङीपि तत्सन्नियोगे नत्वे च ततः कनि ह्रस्वे 'लोहिनिका' ङीब्नात्वाभाव-पक्षे 'लोहितिका' इति ङीपः प्राक् कन्प्रत्यये तु 'लोहिनिका' इति न स्यादिति । ३१—**परत्वात्पूर्वसवर्णदीर्घः । अतो गुणे इति हि 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति न्यायेन 'अकः सवर्णे' इत्यस्यापवादो न तु 'प्रथमयोः' इत्यस्यापि ।** अयं भावः—राम् अस् इति स्थिते 'अकः सवर्णे दीर्घः' इत्यनेन सवर्णदीर्घः प्राप्तः 'प्रथमयोः पूर्वसवर्ण' इत्यनेन पूर्वसवर्णदीर्घः प्राप्तः 'अतो गुणे' इति पररूपं च प्राप्तमिति यत्र यत्राऽपदान्ताकारादग्रे ह्रस्वाकारस्तत्र सर्वत्र सवर्णदीर्घस्य क्वचिच्च प्रथमाद्वितीयास्थले पूर्वसवर्णदीर्घस्य प्राप्तिरिति पररूपस्य निरवकाशस्य सकललक्ष्यप्राप्तसवर्णदीर्घबोधकत्वम् । सवर्णदीर्घबाधेन चारितार्थ्ये पूर्वसवर्णदीर्घस्य बाधे निरवकाशत्वबीजस्याभावेन न पूर्वसवर्णदीर्घबाधकत्वं किन्तु पूर्वसवर्णदीर्घस्यैव परत्वेन प्राबल्यात्प्रवृत्तिरिति । अत्र 'अतो गुणे' 'अकः सवर्णे-दीर्घः' 'प्रथमयोः पूर्वसवर्णः' इति सूत्रक्रमो विद्यते इति अपवादशास्त्रस्य प्राथम्यम् बाध्यशास्त्रस्य चानन्तरोत्तरत्वं ततः पूर्वसवर्णदीर्घशास्त्रमिति पूर्वोक्तरीत्या 'पुरस्तादपवाद'न्यायप्रवृत्तिरिति । ३२—**सम्बुद्ध्याक्षिप्तस्याङ्गस्यैङ्ह्रस्वाभ्यां विशेषणान्नेह–हे कतरत् कुलेति ।** अयमर्थः—'एङ्ह्रस्वात्सम्बुद्धेः' इति सूत्रे सम्बुद्धिपदस्य 'येन विना यदनुपपन्नं तत्तेनाक्षिप्यते' इति सिद्धान्तात् सम्बुद्धेः प्रत्ययत्वेन तस्य च 'परश्च' इति सूत्रेण प्रकृतिपरत्वनियमात् प्रकृत्यंशं विना सम्बुद्धेरनुपपन्नत्वेन प्रकृतेराक्षेपो भवति प्रकृतिरङ्गं च पर्यायाविति अङ्गस्याक्षेपो लभ्यते । 'यत् येनाक्षिप्यते तत्तेनैवान्वेति' इति नियमस्यानुसारेण सम्बुद्ध्याक्षिप्ताङ्गपदस्य सम्बुद्धिपदेनैव अन्वयस्योचितत्वेन अङ्गात्परीभूतायाः सम्बुद्धेर्हलो लोपो भवति स हल् एङ्ह्रस्वाभ्यां परीभूतश्चेत् इत्यर्थलाभेन हे कतरत् इति न सिद्ध्येत् । कतरशब्दात् सम्बुद्ध्येकवचने सुप्रत्यये 'अड्डतरादिभ्यः पञ्चभ्यः' इति सूत्रेणाड्डादेशे भसञ्ज्ञायाम् 'टेः' इति टिलोपे कतर् अद् इति स्थिते कतर् इत्यस्य अङ्गत्वात् ततः परत्वेन अद् इति सम्बुद्धेः हलस्तकारस्य ह्रस्वात्परीभूतत्वेन तलोपापत्तेः । यदि तु हल्पदस्य सूत्रे नानुवृत्तिः तेन हे कतरत् इत्यत्र सम्बुद्धेरदित्यस्य ह्रस्वात्परीभूतत्वाभावेन तकारस्य ह्रस्वात्परत्वेऽपि सम्बुद्धित्वाभावेन अङ्गात्परत्वाभावेन च लोपाप्राप्त्या न दोष इत्युच्यते तर्हि हे कुल इत्यत्र दोषः । कुलशब्दात् सम्बुद्ध्येकवचने सुप्रत्यये 'अतोऽम्' इत्यनेन अमादेशे 'अमि पूर्वः' इति पूर्वरूपे कुलम् इति दशायाम् अम् इत्यस्य कुल इत्यङ्गात् परीभूतत्वेऽपि ह्रस्वात्परीभूतत्वाभावेन पूर्वान्तवद्भावेन कुल इत्यस्याङ्गत्वेऽपि ततः परस्य सम्बुद्धित्वाभावेन 'उभयत आश्रयणे नान्तादिवत्' इति निषेधेनामः सम्बुद्धेर्ग्रहीतुमशक्यतया मलोपानापत्तेः । अतो 'यद् येनाक्षिप्यते तत्तेनैवान्वेति' इति न्यायो नानुसर्तव्यः । तेन एङन्ताद् ह्रस्वान्ताच्चाङ्गात् सम्बुद्ध्यवयवो हल् लुप्यते इत्यर्थोऽङ्गीकरणीय इति । तेन कुत्रापि न दोष इति । ३३—**एङ्ग्रहणं किम् ? हे हरे, हे विष्णो । अत्र हि परत्वात् नित्यत्वाच्च सम्बुद्धिगुणे कृते ह्रस्वात् परत्वं नास्ति ।** अयमर्थः—'एङ्ह्रस्वात् सम्बुद्धेः' इति सूत्रे एङ्ग्रहणं व्यर्थम् । तदभावेऽपि हरिशब्दात् विष्णुशब्दाद्वा सम्बुद्धिसुप्रत्यये ह्रस्वात् परत्वेनैव सुलोपे ततः प्रत्ययलक्षणेन 'ह्रस्वस्य गुणः' इति गुणे हे हरे हे विष्णो इत्यादि

तल्लक्ष्यसिद्धेरिति प्रश्नाशयः। उत्तराशयस्तु ह्रस्वात् परत्वेन सुलोपस्य प्राप्तावपि परत्वेन नित्यतया च 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति परिभाषानुसारेण 'ह्रस्वस्य गुणः' इति शास्त्रस्यैव प्राबल्येन पूर्वं प्रवृत्तौ पश्चात् ह्रस्वात्परत्वाभावेन सुलोपप्रवृत्त्यर्थं सूत्रे एङ्ग्रहणमावश्यकमिति। **३४—इह स्थानिवद्भावेन यादेशस्य सुप्त्वात् सुपि चेति दीर्घः। 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषा तु नेह प्रवर्तते 'कष्टाय क्रमणे' इत्यादिनिर्देशेन तस्या अनित्यत्वज्ञापनात्।** अयमर्थः—रामशब्दात् 'ङेर्यः' इति सूत्रेणादन्तादङ्गात् राम इत्यस्मात् परत्वेन ङे इत्यस्य यादेशे 'स्थानिवदादेशोऽनल्विधौ' इति स्थानिवद्भावेन यादेशे 'ङे' वृत्तिसुप्त्वस्य अतिदेशेन 'सुपि च' इत्यनेन दीर्घे रामाय इति सिद्ध्यति। नन्वत्रादन्ताङ्गं निमित्तीकृत्य जायमानो यादेशोऽदन्ताङ्गविघातकदीर्घप्रवृत्तिं प्रति निमित्तं नेति 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषया निमित्तत्वनिषेधे कथं दीर्घप्रवृत्तिरिति? अत्रोच्यते, 'कष्टाय' इत्यत्र यादेशे परे सूत्रकारकृतदीर्घनिर्देशेन तदन्यथानुपपत्त्या सन्निपातपरिभाषाया अनित्यत्वज्ञापनेन तस्या यादेशनिमित्तक 'सुपि च' इति दीर्घविषये अप्रवृत्तेरिति। **३५—बहुवचने किम्? रामः, रामस्य।** अयमर्थः—'बहुवचने झल्येत्' इति सूत्रे बहुवचनग्रहणाभावे झलादौ सुपि अदन्ताङ्गस्य एत्वं भवतीत्यर्थमात्रे राम स् इत्यत्र रामस्य इत्यत्र च एकवचनस्य सुप्त्वात् झलादित्वाच्च राम इत्यदन्ताङ्गस्यैत्वं स्यात्। अतः सूत्रे बहुवचनग्रहणम्। ननु सर्वत्र एकमेव प्रत्युदाहरणं दृश्यते अत्र किमर्थं प्रत्युदाहरणद्वयम्; इति चेन्न 'स्वौजसमौट्' इत्यत्र 'वौँजसमौट्' न्यासकरणेन रामशब्दात् रुप्रत्यये तस्य झलादित्वाभावेन रामः इत्यत्र एत्वाप्राप्त्या रामस्येति द्वितीयस्यावश्यकत्वमित्याशयात्। **३६—सुपि चेति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते सन्निपातपरिभाषाविरोधात्। नामीत्यनेन त्वारम्भसामर्थ्यात् परिभाषा बाध्यते।** अयं भावः—रामशब्दात् षष्ठीबहुवचने आमि प्रत्यये 'ह्रस्वनद्यापो नुट्' इति नुडागमे 'नामि' इति दीर्घे णत्वे 'रामाणाम्' इति सिध्यति। नन्वत्र राम नाम् इति स्थिते नामीत्यस्य 'हरीणाम्' इत्यादौ चरितार्थस्य सुपि चेत्यनेन रामाय इत्यादौ चरितार्थेन तुल्यबलविरोधिना परेण 'विप्रतिषेधे परं कार्यम्' इति शास्त्रबलात् बाधप्रसङ्गे कथं 'नामि' इति दीर्घोल्लेख इति चेन्न 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषया ह्रस्वान्ताङ्गं निमित्तीकृत्य जायमानस्य नुटो ह्रस्वान्ताङ्गविघातकदीर्घप्रवृत्तिं प्रति अनिमित्तत्वबोधनेन यत्रादित्वधर्मपुरस्कारेण प्रवर्तमानस्य 'सुपि च' इति शास्त्रस्याप्राप्तेः। न चैवं नाम्त्वस्य नुड्मूलकत्वात् तद्धर्मपुरस्कारेण प्रवर्तमानस्य 'नामि' इति शास्त्रस्य सन्निपातपरिभाषया नुटोऽनिमित्तत्वबोधनेन कथं प्रवृत्तिरिति वाच्यम्, नामि इति सूत्रविषये सन्निपातपरिभाषाप्रवृत्तौ ह्रस्वान्ताङ्गनिमित्तकनुड्मूलकनाम्त्वधर्ममादाय प्रवर्तमानस्य नामि इति सूत्रस्य वैयर्थ्यापातेन तत्सामर्थ्यात् सन्निपातपरिभाषाया नामीत्यनेन बाधो जायते इति कल्पनात्। **३७—तदन्तस्यापीयं सञ्ज्ञा, द्वन्द्वे चेति ज्ञापकात्। तेन परमसर्वेत्रेति त्रल् परमभवकानित्यत्राकच् च सिध्यति।** अयमर्थः—'सर्वादीनि सर्वनामानि' इति सूत्रे सर्वादीनि इति पदस्य विशेष्यान्तरासत्त्वेन अविशेषण-

त्वेऽपि शब्दस्वरूपं विशेष्यमादाय 'द्वन्द्वे च' इति सूत्रेण विशेषणत्वबोधनेन 'येन विधिस्तदन्तस्य' इति सूत्रसाहाय्येन सर्वादीनां सर्वाद्यन्तशब्दस्वरूपाणाञ्च सर्वनामसञ्ज्ञा भवतीति सूत्रार्थः। तेन सर्वशब्दस्य यथा सर्वनामसञ्ज्ञा भवति, तथा परमसर्वं इति 'सर्वशब्दान्तस्य सर्वनामसंज्ञया ततस्तल्सिद्धिः। एवं परमभवत् इति सर्वादिघटक 'भवत्' शब्दान्तस्य सर्वनामसंज्ञायां ततस्स्वार्थे अकचि परमभवकान् इति सिध्यति। तदन्तविध्यभावे 'वर्णाश्रमेतर' इत्यस्य सर्वादिघटकत्वाभावेनैव सर्वनामसञ्ज्ञाया अप्राप्तौ तन्निषेधकं द्वन्द्वे चेति सूत्रं व्यर्थं सदुक्तार्थे ज्ञापकं बोध्यम्। ३८—न चार्वणस्तृ इत्यादाविव नानुबन्धकृतमनेकाल्त्वमिति वाच्यम्। सर्वादेशत्वात् प्राग् इत्सञ्ज्ञाया एवाभावात्। अयं भावः—सर्वशब्दात् जसि 'सर्वादीनि सर्वनामानि' इति सर्वनामसंज्ञायां 'जसः शी' इत्यनेन जसः स्थाने विधीयमानः शीआदेशः शित्वात् अनेकाल्त्वाद्वा सर्वस्य स्थाने भवतु इत्याशङ्कायामुच्यते अनेकाल्त्वादेव सर्वादेशो न तु शित्वात्। न च 'अर्वणस्त्रसावनञः' इत्यत्र तृआदेशस्य तकारऋकारद्वयघटितत्वेऽपि ऋकारस्येत्संज्ञकतयाऽनुबन्धत्वेन 'नानुबन्धकृतमनेकाल्त्वम्' इति परिभाषयाऽनुबन्धकृतानेकाल्त्वस्य निषेधेन यथा न सर्वादेशत्वं तथा शीआदेशस्यापि इत्संज्ञकशकारघटितत्वेनोक्तपरिभाषयाऽनेकाल्त्वनिषेधेन न सर्वादेशत्वसम्भव इति वाच्यम्, आदेशोत्तर स्थानिवद्भावेन प्रत्ययादित्वात् शकारस्य इत्संज्ञायामपि आदेशप्रवृत्तेः पूर्वं समकालं वा प्रत्ययत्वाभावेन इत्संज्ञाया अप्रवृत्त्याऽनुबन्धत्वाभावेनोक्तपरिभाषाया अप्रवृत्तेः। एतेन शित्वात्सर्वादेश इत्यपास्तम्। ३९—उभशब्दो द्वित्वविशिष्टस्य वाचकः। अत एव नित्यं द्विवचनान्तः। तस्येह पाठस्तु अकाविस्यकजर्थः। न च कप्रत्ययेनेष्टसिद्धिः। द्विवचनपरत्वाभावेनोभयत उभयत्रेत्यादावित्राग्चप्रसङ्गात्। तदुक्तम्—उभयोऽन्यत्रेति। अन्यत्रेति द्विवचनपरत्वाभावे। उभयशब्दस्य द्विवचनं नास्तीति कैयटः। अस्तीति हरदत्तः। अयमर्थः—उभशब्दस्य द्वित्वसङ्ख्याविशिष्टार्थबोधकत्वम्, ततश्च तस्मात् द्वित्वसङ्ख्याया एव प्रतीत्या नित्यं द्विवचनोत्पत्तिः। नन्वेवं सर्वादिगणे उभशब्दपाठः किमर्थः संज्ञायाः कार्यार्थत्वात् सर्वनामसंज्ञाप्रयुक्तशीभावादिकार्याणामेकवचनबहुवचनयोरेव सत्त्वेन तयोश्चोभशब्दस्य प्रयोगाभावेन सर्वनामसंज्ञानुपयोगात्; इति चेत्? अत्रोच्यते, 'उभकौ' इत्यत्राकच्प्रत्ययो यथा स्यादिति सर्वादिगणे उभशब्दस्य पाठ इति। न च उभशब्दात् कप्रत्ययेऽपि तद्धितान्तत्वेन प्रातिपदिकत्वात् प्रथमाद्विवचनोत्पत्तौ 'उभकौ' इत्यस्य सिद्धेः पुनरपि तत्पाठो विफल इति वाच्यम्, कप्रत्ययस्य द्विवचनभिन्नत्वेन तस्मिन् परे 'उभादुदात्तो नित्यम्' इति सूत्रस्थेन 'नित्यम्' इति योगविभागेन 'उभयोऽन्यत्र' इति वचनैकवाक्यतया उभशब्दादत्यन्तस्वार्थिकायचः प्रवृत्त्या उभकावित्यसिद्ध्यापत्तेः। उभशब्दात् पञ्चम्यन्तात् तसिल्प्रत्यये सप्तम्यन्तात् त्रल् प्रत्यये वा तत्र पूर्वोक्तरीत्याऽयचः प्रवृत्त्या उभयतः उभयत्र इत्यादिवदुभयकावित्यापत्तेश्च। न चैवमकच्प्रत्यये तस्यापि द्विवचनभिन्नत्वेन तस्मिन् परेऽयचः प्रवृत्त्यापत्तिरस्त्येवेति वाच्यम्, अकच्प्रत्ययस्य 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यनेन टेः प्राग्विधानात्, उभशब्दमध्यपतिततया 'तन्मध्ये पतितास्तद्ग्रहणेन गृह्यन्ते' इति परिभाषयाऽकज्विशिष्टस्योभग्रहणेन ग्रहणात्, ततो द्विवचनपर-

स्वस्यैव सत्त्वेनाऽयच्प्रवृत्त्यभावादिति। तदेवमुभशब्दस्य द्विवचने प्रयोगो नास्ति इति फलितम्। तदुक्तमुभयशब्दस्य द्विवचनं नास्तीति कैयट इति। हरदत्तस्तु उभशब्दादत्यन्तस्वार्थिकायचो द्विवचनपरत्वाभावे एव प्रवृत्तावपि 'सङ्ख्याया अवयवे तयप्' इति सूत्रेणोभशब्दात् तयप्प्रत्यये तत्स्थाने 'उभादुदात्तो नित्यम्' इति सूत्रविहितायचो द्विवचने परे ततोऽन्यत्र वा प्रवृत्तौ बाधकाभावेनायजादेशे स्थानिवद्भावेन तद्धितान्ततया प्रातिपदिकत्वे एकवचनबहुवचनवत् द्विवचनोत्पत्तेः प्रतिबन्धकाभावादुभयशब्दस्य द्विवचनमस्ति इत्याहेति। **४०—डतरडतमौ प्रत्ययौ। प्रत्ययग्रहणे तदन्ता ग्राह्याः। यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति सुप्तिङन्तमिति ज्ञापकात्, तथापि इह तदन्तग्रहणं केवलयोः संज्ञायाः प्रयोजनाभावात्।** अयं भावः—सर्वादिगणे डतरडतम इति प्रत्यययोर्ग्रहणेन केवलस्य च प्रत्ययस्य प्रयोगाभावे प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्तविधौ डतरप्रत्ययान्तडतमप्रत्ययान्तयोः कतरकतमादिशब्दयोरेव सर्वनामसंज्ञा न तु केवलस्तयोः। 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति 'सुप्तिङन्तम्' इति सूत्रस्थान्तग्रहणज्ञापितपरिभाषायास्तु नैव प्रवृत्तिः, केवलयोः संज्ञायां फलाभावादिति। **४१—स्वाभिधेयापेक्षावधिनियमो व्यवस्था। व्यवस्थायां किम्? दक्षिणा गाथकाः कुशला इत्यर्थः।** अस्यायमभिप्रायः—स्वस्य पूर्वादिशब्दस्याभिधेयेन वाच्यार्थेन नियमेनावधिरपेक्ष्यते तादृशोऽर्थो व्यवस्था, तद्वाचिपूर्वादिशब्दानां सर्वनामसंज्ञा भवतीति सूत्रार्थः। पूर्वादिशब्दे उच्चारिते कस्मात्पूर्वः कस्मात्परः कस्माद् दक्षिणः कस्मादुत्तर इति नियमेनावधिसापेक्षोऽर्थ इति यावत्। सूत्रे व्यवस्थापदाभावे कुशलवाचिदक्षिणशब्दस्य सर्वनामसंज्ञा स्यादिति सूत्रे तद्ग्रहणम्। कृते तु तस्मिन् कुशलार्थस्य कस्मात् कुशल इति कदाचिदवध्यपेक्षत्वेऽपि कुशलमात्रप्रतिपादनेच्छोच्चरितदक्षिणशब्दार्थस्यावध्यपेक्षत्वाभावेन नियमेनावधिसापेक्षार्थकत्वाभावात् सर्वनामसंज्ञा न भवतीति 'दक्षिणाः' इत्येकमेव रूपमिति बोध्यम्। **४२—इह समासात्प्रागेव प्रक्रियावाक्ये सर्वनामसंज्ञा निषिध्यते। अन्यथा लौकिके विग्रहवाक्ये इव तत्राप्यकच् प्रवर्तेत। स च समासेऽपि श्रूयेत। अतिक्रान्तो भवकन्तमतिभवकानिितिवत्। भाष्यकारस्तु त्वकत्पितृको मकत्पितृक इति रूपे इष्टापत्तिं कृत्वैतत्सूत्रं प्रत्याचख्यौ। यथोत्तरं मुनीनां प्रामाण्यम्।** अयमर्थः—'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्राद् 'बहुव्रीहौ' इत्यस्यानुवृत्त्या बहुव्रीहिग्रहणसम्भवेन पुनः सूत्रे बहुव्रीहिग्रहणं बहुव्रीह्यर्थकल्प्यमानालौकिकप्रक्रियावाक्यपरम्। तथा च बहुव्रीह्यर्थकल्प्यमानालौकिकप्रक्रियावाक्यघटकसर्वादेः सर्वनामसंज्ञा न भवतीति 'न बहुव्रीहौ' इति सूत्रस्यार्थः। तेन 'त्वत्कपितृकः' 'मत्कपितृकः' इति बहुव्रीहिसमासस्यालौकिके प्रक्रियावाक्ये 'युष्मद् स् पितृ स्' 'अस्मद् स् पितृ स्' इत्यत्र सर्वनामसंज्ञानिषेधे युष्मदस्मद्शब्दयोः कुत्साविशिष्टार्थबोधकत्वविवक्षायां कप्रत्यय एव न त्वकजिति, ततः 'प्रत्ययोत्तरपदयोश्च' इति सूत्रेण त्वमादेशयोः कृतयोः 'त्वत्क स् पितृ स्' 'मत्क स् पितृ स्' इति जाते 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासे पश्चात्सुब्लुकि 'नद्यृतश्च' इति कपि प्रत्यये 'त्वत्कपितृकः' 'मत्कपितृकः' इति च सिद्ध्यति। बहुव्रीहिपदस्य मुख्यार्थपरत्वे समासात्प्राक् प्रक्रियावाक्ये 'युष्मत् स् पितृ

स्' 'अस्मत् स् पितृ स्' इत्यत्र निषेधाप्रवृत्त्या युष्मदस्मच्छब्दयोः सर्वनामसंज्ञायां कुत्सार्थ-विवक्षायां कप्रत्ययापवादे 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यनेनाकचि 'त्वकत् स् पितृ स्' 'मकत् स् पितृ स्' इति जाते पश्चाद् बहुव्रीहौ समासे सर्वनामसंज्ञानिषेधेऽपि जातकार्यानिवृत्तेः 'त्वकत्पितृकः' 'मकत्पितृकः' इति अकच्प्रत्ययश्रवणं स्याद् यथा कुत्सितं भवन्तं भवकन्तमति-क्रान्त इति लौकिके विग्रहे 'भवत् अम् अति' इत्यलौकिके च भवत्शब्दस्य सर्वनामत्वेन कुत्सार्थविवक्षायामुक्तरीत्याऽकचि 'भवकत् अम् अति' इति जाते 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासे अतिक्रमणकर्तृत्वविशिष्टार्थं प्रति 'भवकत्' शब्दस्योपसर्जनतया 'संज्ञोप-सर्जनानां प्रतिषेधः' इति सर्वनामसंज्ञानिषेधेऽपि जाताकचो निवृत्त्यभावेन 'अतिभवकान्' इत्यत्र अकच् श्रूयते। भाष्यकारास्तु 'न बहुव्रीहौ' इति सूत्रसत्त्वे तेन प्रक्रियावाक्ये सर्वनाम-संज्ञानिषेधेऽपि 'स्वार्थे परिपूर्णं पदमर्थान्तरेण युज्यते' इति सिद्धान्तात् पितृशब्दार्थेन अन्य-पदार्थेन च युष्मदस्मच्छब्दयोरन्वयविवक्षायाः प्रागेव कुत्सार्थविशिष्टयुष्मदस्मच्छब्दाभ्यां स्वार्थिकत्वेनाकच्प्रत्ययप्रवृत्तौ तदनन्तरमेव बहुव्रीहेश्चिकीर्षिततयाऽकच्प्रवृत्तिसमये कथमपि निषेधस्य प्रवृत्तिसम्भावेनाकचः सर्वथा प्रतिबन्धाभावेन 'त्वकत्पितृकः' 'मकत्पितृकः' इत्येव रूपे भवत इति अकच्प्रत्ययश्रवणमिष्टमेवेति सूत्रं न करणीयमिति प्रत्याख्यातवान्। नन्वेवं सूत्रमते 'त्वत्कपितृकः' 'मत्कपितृकः' इति, भाष्यकारमते 'त्वकत्पितृकः' 'मकत्पितृकः' इति भिन्नं रूपे, ततश्चास्माभिः किमनुसरणीयमिति चेत्? अत्रोच्यते, पूर्वपूर्वमुन्यपेक्षयोत्तरोत्तरमुनेः प्रामाण्यमधिकमस्माभिरङ्गीकरणीयमिति 'त्वकत्पितृकः' 'मकत्पितृकः' इत्येवाऽस्माभिः प्रयोक्तव्यं, न तु 'त्वत्कपितृकः' 'मत्कपितृकः' इति। ४३—**संज्ञोपसर्जनीभूतास्तु न सर्वादयः महा-संज्ञाकरणेन तदनुगुणानामेव गणे सन्निवेशात्। अतः संज्ञाकार्यमन्तर्गणकार्यञ्च तेषां न भवति।** अयमर्थः—'सर्वादीनि सर्वनामानि' इति सूत्रे 'सर्वनाम' इति महासंज्ञाकरणेन तस्याश्चान्वर्थतया सर्वान् नमयन्ति सर्वेषां नामानि इति वा विग्रहेण प्राधान्येन इतराविशेषण-त्वेन स्वीयसर्वार्थोपस्थापक इत्यर्थलाभात् तादृशसर्वादिगणपठितशब्दानामेव सर्वनामसंज्ञा। सर्वनामसंज्ञोद्देश्यसर्वादीनां शब्दानां प्राधान्येन स्वीयसर्वार्थोपस्थापकानामेव च गणे सन्नि-वेशेन त्यदादयः शब्दा अपि तादृशा एव पठ्यन्ते इति 'त्यदादीनामः' इत्यत्वं 'तदोः सः सावनन्त्ययोः' इति सत्त्वम् 'अद्ड्डतरादिभ्यः पञ्चभ्यः' इत्यद्डादेशश्च तादृशार्थोपस्थापक-शब्दानामेवेति संज्ञायामुपसर्जनत्वे च सर्वादीनां सर्वनामसंज्ञा अत्वं सत्त्वमद्डादेशश्च न भवन्तीति क्रमेणोदाहरणानि सर्वो नामेत्यादीनि। ४४—**समुदायस्यायं निषेधो न त्ववय-वानाम्। न चैवं तदन्तविधिना सुट्प्रसङ्गः, सर्वनाम्नो विहितस्यामः सुडिति व्या-ख्यातत्वात्।** अयं भावः—वर्णाश्च आश्रमाश्च इतरे च वर्णाश्रमेतराः तेषां वर्णाश्रमेतराणाम् इत्यत्र 'वर्णाश्रमेतर' इति समुदायस्य तदन्तविधिना 'सर्वादीनि सर्वनामानि' इति सूत्रेण प्राप्ता सर्वनामसंज्ञा 'द्वन्द्वे च' इति सूत्रेण निषिध्यते, इतरशब्दस्य तेन सूत्रेण प्राप्ता तु न निषि-ध्यते तत्र संज्ञाया निषेधे फलाभावात् कप्रत्ययेऽकच्प्रत्यये वा रूपे विशेषाभावात्। न चैवं 'वर्णाश्रमेतर'समुदायस्याऽसर्वनामत्वेऽपि इतरस्य सर्वनामत्वे ततः परस्या आम्विभक्तेः 'आमि

सर्वनाम्नः सुट्' इत्यनेन तदन्तविधिना सर्वनामसंज्ञकेतरशब्दान्ताङ्गात्परत्वेन सुडागमापत्तिरिति वाच्यम्, तत्र सूत्रे 'सर्वनाम्नः' इति पञ्चम्या विहितविशेषणत्वस्वीकारेण अवर्णान्तादङ्गात्परस्य सर्वनामसंज्ञकशब्दाद्विहितस्याऽऽमः सुडागमो भवतीत्यर्थलाभेनात्र इतरशब्दाद्विहितत्वाभावेन तदप्रवृत्तेः। ४५—**वृत्तिकृता तु पूर्वविप्रतिषेधेनेनातोः कृतयोः सन्निपातपरिभाषाया अनित्यतामाश्रित्य जरसि कृते 'निर्जरसिन' 'निर्जरसात्' इति रूपे न तु 'निर्जरसा' 'निर्जरसः' इति केचिदित्युक्तम्। तथा भिसि निर्जरसैः इति रूपान्तरमुक्तं तदनुसारिभिश्च षष्ठ्येकवचने निर्जरस्येत्येव रूपमिति स्वीकृतम्। एतच्च भाष्यविरुद्धम्।** अयं भावः—जरसादेशाद्विभक्त्यादेशाः पूर्वविप्रतिषेधेन भवन्तीति स्वीकृत्य सन्निपातपरिभाषायाश्च 'अतो भिस ऐस्' इति सूत्रेऽदन्तात्परस्य भिस ऐसादेशविधानेन वृद्ध्येष्टसिद्धावैस्करणसामर्थ्येन जरसादेशविषये अनित्यत्वमाश्रित्य निर्जरशब्दात् तृतीयैकवचने टाप्रत्यये पञ्चम्येकवचने ङसि प्रत्यये वा पूर्वं'मिना'देशे 'आत्' आदेशे च कृते सन्निपातपरिभाषाया अनित्यत्वेनाप्रवृत्त्या जरसादेशे 'निर्जरसिन' 'निर्जरसात्' इति केषाञ्चिन्मतं वृत्तिकारेणोक्तम्। तन्मते च तृतीयाबहुवचने जरसादेशात्पूर्वं भिसः स्थाने ऐसादेशे सन्निपातपरिभाषाया अनित्यत्वेन जरसादेशे 'निर्जरसैः' इति रूपं भवतीत्युक्तम्। तदनुसारिभिश्च पूर्वं ङसः स्यादेशेऽजादित्वाभावेन जरसादेशाप्रवृत्त्या 'निर्जरस्य' इत्येवं रूपं भवति स्वीकृतम्। परन्तु सर्वमेतद्भाष्यविरुद्धम्। भाष्यकृता हि इनादेशस्येकार 'आत्' आदेशस्य च दीर्घकरणं प्रत्याख्यातम् 'ओसि च' इत्येतत्सूत्रात्परत्र 'आङि चापः' इत्यत्र 'आङि' इति योगं विभज्य आङि परेऽत एत्वं भवतीत्यर्थेन रामशब्दात् टाप्रत्ययस्य स्थाने 'न' आदेशे एत्वे कृते 'रामेण' इति, रामशब्दात् ङसिप्रत्ययस्य अत् आदेशेऽकारोच्चारणसामर्थ्येन 'अतो गुणे' इति पररूपबाधे सवर्णदीर्घेण च 'रामाद्' इति च रूपसिद्धेः। तथा च तन्मते 'निर्जरसिन' इत्यादिरूपासिद्धेः प्रत्याख्यानासङ्गतिः स्यादतो जरसादेशः परत्वाद् विभक्त्यादेशेभ्यः पूर्वं भवतीत्येव सिद्धान्त इति। ४६—**पूर्वस्मादपि विधौ स्थानिवद्भाव इति पक्षे त्वड्व्यवाय इत्येवात्र णत्वम्। पूर्वत्रासिद्धे न स्थानिवदिति त्विह नास्ति, तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति निषेधात्।** अयं भावः—'अचः परस्मिन् पूर्वविधौ' इति सूत्रे 'पूर्वविधौ' इति पदस्य पूर्वस्य विधिः पूर्वविधिः, पूर्वस्माद् विधिः पूर्वविधिः इति षष्ठीसमासः पञ्चमीसमासो वा। तत्र षष्ठीसमासपक्षे तत्र सूत्रे वृत्त्युक्तोऽर्थ एव। पञ्चमीसमासपक्षे तु परनिमित्तोऽजादेशः स्थानिवत् स्थानिभूतादचः पूर्वत्वेन दृष्टाद्वर्णात्परस्य विधौ कर्तव्ये इत्यर्थः। तथा च 'यूष् न् अस्' इति अल्लोपानन्तरभाविन्यां स्थितौ परः शसप्रत्ययस्तन्निमित्ताल्लोपादेशस्य ततः पूर्वत्वेन दृष्टात्षकारात्परस्य नकारस्य णत्वे कर्तव्ये स्थानिवद्भावेऽकारव्यवधानबुद्ध्या 'रषाभ्यां नो णः समानपदे' इत्यस्य न प्रवृत्तिः, किन्तु 'अट् कुप्वाङ्नुम्व्यवायेऽपि' इत्यस्य अकारव्यवधानेन प्रवृत्त्या णत्वम्। न च त्रैपादिके कर्तव्ये स्थानिवद्भावो न भवतीत्यर्थक 'पूर्वत्रासिद्धे न स्थानिवत्' इति स्थानिवद्भावनिषेध इति वाच्यम्, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इत्यनेन णत्वे तत्प्रतिप्रसवात्। ४७—**आत इति योगविभागादधातोरप्याकारलोपः क्वचित्। क्त्वः, स्नः।** अयमर्थः—'आतो धातोः' इति सूत्रे आतः इति, धातोः इति च सूत्रं

विभज्यते। तत्र 'आतः' इत्यस्य आकारान्तभसंज्ञकाङ्गान्त्यस्य लोप इत्यर्थः। 'क्त्वा-इना' प्रत्ययानुकरणक्त्वाऽऽइनाशब्दाभ्यां शसि भसंज्ञायां पूर्वसूत्रेणाऽऽकारलोपः। ततो 'धातोः' इति। अस्य तु मूलोक्तार्थः। 'विश्वपः' इत्याद्युदाहरणम्। न चैवं 'हाहान्' इत्यत्रापि पूर्वसूत्रेणाकारलोपापत्तिरिति वाच्याम्, एवं सति सर्वत्रैव पूर्वसूत्रेणाकारलोपसिद्धेरुत्तरसूत्रस्य वैयर्थ्येन तत्सामर्थ्यात्पूर्वसूत्रस्य क्वाचित्कत्वबोधनेनानिष्टस्थलेऽप्रवृत्तेरिति। ४८—कथं तर्हि दुर्धियो वृश्चिकभियेत्यादि? उच्यते, दुःस्थिता धीर्येषामिति विग्रहे दुरित्यस्य धीशब्दं प्रति गतित्वमेव नास्ति। यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः। वृश्चिकशब्दस्य बुद्धिकृतमपादानत्वं नेह विवक्षितम्। वृश्चिकसम्बन्धिनी भीर्वृश्चिकभीरित्युत्तरपदलोपो वा। ननु गतिकारकेतरपूर्वपदस्य यण् निषेधेनात्र 'दुर्' इति शब्दस्य 'गतिश्च' इति गतिसंज्ञकतया तत्पूर्वकत्वेन तदितरपूर्वपदकत्वाभावात्कथं निषेधप्रवृत्तिः, एवं वृश्चिकशब्दस्य 'भीत्रार्थानां भयहेतुः' इति अपादानसंज्ञायाश्च विधानेन कारकपूर्वपदकत्वेन तदितरपूर्वपदकत्वाभावात्कथं यणोऽप्रवृत्तिरिति चेत्? अत्रोच्यते, यदर्थक्रियागतविशेषद्योतकाः प्रादयस्तेषां तद्धातुयोगे गतिसंज्ञा भवतीति 'गतिश्च' इति सूत्रार्थस्वीकारेण 'दुर्' शब्देनात्र स्थितेर्दुष्टत्वबोधनस्य विवक्षिततया धीशब्दार्थध्यानक्रियानिरूपितगतित्वाभावेन गतीतरपूर्वपदकत्वेन निषेधप्रवृत्तिः। एवं वृश्चिकस्य वस्तुतो भयहेतुत्वेऽपि तदविवक्षया, सम्बन्धित्वमात्रविवक्षया वृश्चिकसम्बन्धिनी भीः वृश्चिकभीः इति मध्यमपदलोपिसमासे वा वृश्चिकशब्दस्य भीशब्दार्थान्वयाभावेन वा भयहेतुत्वाभावादुक्तसूत्रस्याप्रवृत्त्या कारकेतरपूर्वपदकत्वाभावेन निषेधप्रवृत्तिः। ४९—नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्—उणादिनिष्पन्नानां तृन्तृजन्तानां चेद्भवति तर्हि नप्त्रादीनामेव। तेन पितृभ्रातृप्रभृतीनां न। उद्गातृशब्दस्य तु भवत्येव, समर्थसूत्रे उद्गातार इति भाष्यप्रयोगात्। अयं भावः—'अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्' इति सूत्रे 'उणादयो व्युत्पन्नानि प्रातिपदिकानि' इति पक्षे नप्त्रादीनां शब्दानां तृन्नन्तत्वात्तृजन्तत्वाच्च तृन्तृच्ग्रहणेनैव दीर्घसिद्धया नप्त्रादिग्रहणं सिद्धे सति आरभ्यमाणो विधिर्नियमाय भवतीति सिद्धान्तात् नियमार्थम्। नियमेन च स्वेतरस्वजातीयव्यावृत्तिः क्रियते इति 'नप्त्रादीतरोणादिनिष्पन्नतृन्नन्ततृजन्तशब्दानां न दीर्घ' इति फलितम्। तथा च पितृशब्दस्य भ्रात्रादिशब्दस्य वा तृन्तृजन्तत्वेऽपि न दीर्घः। न चैवमुद्गातृशब्दस्याप्युणादिनिष्पन्नतया तस्यापि दीर्घो न स्यादिति वाच्यम्, समर्थसूत्रे 'उद्गातारः' इति भाष्यप्रयोगदर्शनेन भाष्यप्रामाण्यात्तस्य नियमेन व्यावृत्त्यभावकल्पनात्। ५०—यद्यपि जरसादेशस्य स्थानिवद्भावेनाबन्ततामाश्रित्य 'औङ आपः' 'आङि चापः' 'याडापः' 'ह्रस्वनद्यापः' 'ङेराम्' इति पञ्चापि विधयः प्राप्ताः, एवं नस्निश्प्रत्सु, तथाप्यनल्विधाविल्युक्तेन भवन्ति, आ आविति प्रश्लिष्याकाररूपस्यैवाऽऽपः सर्वत्र ग्रहणात्। एवं हल्ङ्याब्भ्यःदिसूत्रेऽपि आ आप् ङी ई इति प्रश्लेषादतिखट्वः निष्कौशाम्बिरित्यादिसिद्धेर्दीर्घग्रहणं प्रत्याख्येयम्। न चैवमप्यतिखट्वायेत्यत्र स्वाश्रयमाकारत्वं स्थानिवद्भावेनाप्त्वं चाश्रित्य याट् स्यादिति वाच्यम्, आबन्तं यदङ्गं ततः परस्य याड्विधानाद् उपसर्जनस्त्रीप्रत्यये तदादिनियमात्। अयं भावः—'जरसौ' 'जरसा' 'जरसे' 'जरसोः' 'जर-

साम्' 'जरसि' इत्यत्र विभक्त्यादेशेभ्यः परत्वाज्जरसादेशेऽपि तस्य 'स्थानिवदादेशोऽनल्विधौ' इति स्थानिवद्भावेन आप्त्वस्याऽल्मात्रवृत्तित्वाभावादनल्विधाविति निषेधाप्रवृत्तेरावन्ततयोक्तपञ्चसूत्रैः शी आद्यादेशापत्तिर्यद्यपि प्राप्नोति, एवं नासिकानिशापृतनाशब्दानां 'पद्दन्' इति 'मांसपृतनासानूनाम्' इति च नसाद्यादेशेषु तत्र स्थानिवद्भावेनोक्तादेशापत्तिः; तथापि पूर्वोक्तसूत्रेषु आप्पदे आकारात्पूर्वं सवर्णदीर्घेणाकारं प्रश्लिष्य आकाररूपो य आप् तदन्तादङ्गादिति सर्वत्रार्थस्वीकारेण आप्त्वेऽनल्विधावित्यस्याप्रवृत्तावपि आत्वस्य अल्मात्रवृत्तिधर्मत्वेन 'अनल्विधौ' इति निषेधात् स्थानिवद्भावेनानेतुमशक्यतयोक्तसूत्रपञ्चकाप्रवृत्त्या न शीआद्यादेशापत्तिः। नन्वेवं 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इति सूत्रेऽपि आप्पदे पूर्वत्राकारस्य ङीपदे चोत्तरत्र ईकारस्य सवर्णदीर्घेण प्रश्लेषादाकाररूपाबन्तात् ईकाररूपङ्यन्ताच्च परमित्यर्थेन 'अतिखट्वः' 'निष्कौशाम्बिः' इत्यादौ 'अनल्विधौ' इति निषेधाद् आत्वस्य ईत्वस्य च स्थानिवद्भावेनाश्रयणासम्भवेन सूत्राप्राप्त्यैव दोषवारणसम्भवेन तदर्थं सूत्रे क्रियायणं दीर्घग्रहणं व्यर्थमिति चेद्? इष्टापत्तेः, तस्येत्थं प्रत्याख्यानसम्भवात्। न चैवं सर्वत्राप्पदे आकारप्रश्लेषेणाऽऽत्वस्यानल्विधावित्युक्तेः स्थानिवद्भावेनानयनासम्भवेऽपि आप्त्वस्य तत्सम्भवात् 'अतिखट्वाय' इत्यत्र 'सुपि च' इति दीर्घोत्तरस्थानिवद्भावेनाबन्तत्वमानीय स्वतः सिद्धाकारमादाय च आकाररूपाबन्तात्परत्वेन ङेप्रत्ययस्य 'याडापः' इत्यनेन याडागमापत्तिरिति वाच्यम्, आप इति पञ्चम्या 'अङ्गाधिकारे पञ्चम्या यदुच्यते विहितविभक्तेस्तद् भवति' इति सिद्धान्ताद्विहितविशेषणत्वमाश्रित्य आपः प्रत्ययग्रहणतया 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषैकवाक्यतया आब् यस्माद्विहितस्तदादितदन्तं यदङ्गं तस्माद्विहितस्य ङेप्रत्ययस्य याडागमो भवतीति 'याडापः' इति सूत्रस्यार्थस्वीकारेण अतिखट्वा इत्यस्मात् ङेप्रत्ययस्य विहितत्वेऽपि तस्याबन्ततदादित्वाभावेन खट्वा इत्यस्यावन्ततदादित्वेऽपि ततो ङेप्रत्ययस्य विहितत्वाभावेन 'याडापः' इत्यस्याप्राप्त्या तदापत्त्यभावात्। न चैवं 'परमखट्वायै' इत्यत्रापि अतिखट्वायेतिवत् याट् न स्यादिति वाच्यम्। 'स्त्रीप्रत्यये चानुपसर्जने न' इति परिभाषयाऽनुपसर्जने तदादिग्रहणस्य निषेधेन अनुपसर्जनस्त्रीप्रत्ययान्ते अतदादौ तदादित्वमारोप्यते इति तत्परिभाषार्थपक्षे 'परमखट्वा' इत्यत्र आबन्ततदादित्वस्यारोपेण वा याट्प्रवृत्तेः सुस्थत्वात्। 'अतिखट्वाय' इत्यत्र तु टापोऽतिपदार्थं प्रत्युपसर्जनतया तत्र निषेधस्य आरोपस्य वाऽभावेन पूर्वोक्ततदादिनियमस्य सत्त्वान्न याट्प्रवृत्तिरिति। **६१—न चाल्लोपः स्थानिवत्, पूर्वत्रासिद्धे तन्निषेधात्। नापि बहिरङ्गतयाऽसिद्धः, यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्वस्यासिद्धतयाऽन्तरङ्गाभावेन परिभाषाया अप्रवृत्तेः।** अयं भावः—राजन् अस् इति स्थिते 'अल्लोपोऽनः' इति सूत्रेणाकारलोपे 'स्तोः श्चुना श्चुः' इति श्चुत्वेन ञकारे 'राज्ञः' इति सिद्ध्यति। तत्र 'अचः परस्मिन् पूर्वविधौ' इति शस्प्रत्ययं निमित्तीकृत्य भसंज्ञाद्वारा जायमानस्य अल्लोपरूपाजादेशस्य स्थानिभूताकारात्पूर्वत्वेन दृष्टात् जकारात्परस्य नकारस्य श्चुत्वे कर्तव्ये स्थानिवद्भावेन श्चुत्वप्रतिबन्धो न वाच्यः 'पूर्वत्रासिद्धे न स्थानिवत्' इत्यनेन तन्निषेधात्। न चाल्लोपस्य बहिर्भूतशस्प्रत्ययनिमित्तकतया बहिरङ्गत्वेनान्तर्भूतजकारयोगनिमित्तकतयाऽन्तरङ्गश्चुत्वदृष्ट्या 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषयाऽसिद्धत्वेन पुनरपि श्चुत्वं न स्यादिति वाच्यम्, तस्याः परिभा-

पाया 'वाह ऊठ्' इति सूत्रस्थोठ्ग्रहणज्ञापिततया सापादिकत्वेन यथोद्देशपक्षे तद्दृष्ट्या त्रैपादिकश्रुत्वस्यासिद्धतया तत्र तस्याः परिभाषाया अप्रवृत्त्याऽल्लोपस्यासिद्धत्वाभावात्। कार्यकालपक्षे यद्यपि परिभाषाया विधिदेशस्थतया तद्दृष्ट्याश्रुत्वस्यानसिद्धतया तया श्रुत्वस्यासिद्धता बोधयितुं शक्यते इति पुनर्दोषतादवस्थ्यं तथाप्येकपक्षेऽभीष्टसिद्धौ पक्षान्तरेण दूषणदानस्यानुचितत्वान्न दोषः। वस्तुतस्तु तत्र पक्षेऽपि असिद्धपरिभाषायाक्षिपायां न प्रवृत्तिरित्यन्यत्र विस्तरः।

**५२—न चाल्लोपस्य स्थानिवत्त्वम्, दीर्घविधौ तन्निषेधात्। बहिरङ्गपरिभाषा तूक्तन्यायेन न प्रवर्तते। प्रतिदीव्नः।** अयं भावः—प्रतिदिवन्शब्दात् द्वितीयाबहुवचने शसि प्रत्यये भसंज्ञायाम् 'अल्लोपोऽनः' इत्यनेनाकारस्य लोपे 'हलि च' इत्यनेन नकारे हलि परे वकारान्तदिव्धातोरुपधाया इकारस्य दीर्घे रुत्वे विसर्गे च 'प्रतिदीव्नः' इत्यस्य सिद्धिः। अत्र शङ्कते—अल्लोपस्य 'अचः परस्मिन् पूर्वविधौ' इत्यनेन स्थानिभूतादचो लुप्ताकारात्पूर्वत्वेन दृष्टस्य इकारस्य दीर्घे कर्तव्ये स्थानिवद्भावेन वकारान्तधातोर्हल्व्यवहितपूर्वत्वाभावेन कथं दीर्घ इति? तत्रोत्तरं—दीर्घे कर्तव्ये स्थानिवद्भावस्य 'न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु' इति सूत्रेण निषेधात् दीर्घस्य प्रवृत्तिरिति। न च 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया बाह्यशस्प्रत्ययनिमित्तकाल्लोपस्य बहिरङ्गतयाऽन्तर्भूतनकारनिमित्तकत्वेनान्तरङ्गदीर्घविधायक'हलि च'इतिशास्त्रदृष्ट्याऽसिद्धत्वात्पुनरपि दीर्घप्रवृत्तिः कथमिति वाच्यम्, यथोद्देशपक्षे 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यस्याः परिभाषायाः 'वाह ऊठ्' इति सूत्रस्थोठ्ग्रहणज्ञापिततया सापादिकत्वेन तद्दृष्ट्या 'हलि च' इति शास्त्रस्य त्रैपादिकत्वेनासिद्धतया तद्विषये तत्परिभाषाया अप्रवृत्तेः। कार्यकालपक्षेण तु दोषदानमनुचितं पक्षान्तरेणेष्टसिद्धेरित्युक्तम्। **५३—योगविभागसामर्थ्यात् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायं बाधित्वा 'एकाजुत्तरपदे' इति णत्वमपि निवर्त्यते। नकारे परे कुत्वविधिसामर्थ्यादल्लोपो न स्थानिवत्। वृत्रघ्नः।** अयमर्थः—वृत्रहन्शब्दात् द्वितीयाबहुवचने शसि भसंज्ञायाम् 'अल्लोपोऽनः' इत्यकारलोपे 'हो हन्तेर्ञ्णिन्नेषु' इत्यनेन हकारस्य कुत्वेनान्तरतम्याद् घकारादेशे रुत्वे विसर्गे च 'वृत्रघ्नः'इति सिद्धम्। नन्वत्र 'एकाजुत्तरपदे णः'इत्यनेन नकारस्य णत्वं कुतो नेति चेत्? न, 'अत्पूर्वस्य' इत्यनेन ह्रस्वकारपूर्वकस्यैव हन्तेर्नकारस्य णत्वनियमनादत्र नकारस्याकारपूर्वकत्वाभावात् णत्वाप्रवृत्तेः। न च 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायेन 'अत्पूर्वस्य' इति सूत्रं 'हन्तेः' इत्यस्यैव नियामकं न तु 'एकाजुत्तरपदे णः' इत्यस्येति वाच्यम्, तथा सति 'हन्तेरत्पूर्वस्य' इत्येकयोगेनैव 'हन्तेः' इत्यस्यात्पूर्वतरत्र निवृत्तौ सिद्धायां योगविभागस्य वैयर्थ्येन तत्सामर्थ्यादत्रोक्तन्यायाप्रवृत्तेर्बोधनेन विप्रकृष्टस्यापि 'एकाजुत्तरपदे णः' इत्यादेस्तेन नियमात्। न चाल्लोपस्य 'अचः परस्मिन्'इति स्थानिवद्भावेन कथं कुत्वमिति वाच्यम्, एवं सति सर्वत्रैव नकारे परे हन्तेर्हकारस्याल्लोपेनैव संभवात्तत्र च स्थानिवद्भावस्य नियमतः प्राप्त्या नकारे परे कुत्वविधानस्य वैयर्थ्येन तत्सामर्थ्यादत्र विषये स्थानिवद्भावाप्रवृत्तेः कल्पनेनादोषात्।

**५४—इह दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं न भवति बहुलग्रहणात्। तथा च श्वन्नुक्षन्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयसिद्धिमाश्रित्यैतत्सूत्रं प्रत्याख्यातमाकरे। 'हविर्जक्षिति निःशङ्को मखेषु मघवानसौ' इति भट्टिः। अयं**

भावः—मघवन्शब्दात्प्रथमैकवचने सुप्रत्यये 'मघवा बहुलम्' इति सूत्रेण 'अलोऽन्त्यस्य' इत्येकवाक्यतया नकारस्य स्थाने 'तृ' आदेशे ऋकारस्येत्संज्ञायां लोपे च 'उगिदचां सर्वनामस्थानेऽधातोः' इत्यनेन नुमागमे हल्ङ्यादिलोपे संयोगान्तलोपे च 'सर्वनामस्थाने चासम्बुद्धौ' इत्यनेनोपधादीर्घे संयोगान्तलोपस्यासिद्धत्वान्नलोपाभावे 'मघवान्' इति सिद्धम्। नन्वत्र संयोगान्तलोपस्य नलोपदृष्ट्याऽसिद्धत्ववदुपधादीर्घदृष्ट्याऽप्यसिद्धत्वात्कथं दीर्घ इति चेत् ? अत्रोच्यते, भाष्यानुरोधेन बहुलग्रहणेन उपधादीर्घदृष्ट्या संयोगान्तलोपस्यासिद्धत्वाभावबोधनात्। तथा हि भाष्यकृता 'श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति' इत्युणादिसूत्रेण पूजार्थकमहधातोः कनि प्रत्यये हस्य घकारादेशवुगागमयोर्निपातनेन मघवन्शब्दं तस्य रूपाणि च संसाध्य मघशब्दान्मतुप्प्रत्यये 'मादुपधायाश्च' इत्यादिना सूत्रेण मघवत्शब्दं तस्य रूपाणि च संसाध्य 'मघवा बहुलम्' इति सूत्रं प्रत्याख्यातम्। प्रत्याख्यानपक्षे च 'अत्वसन्तस्य चाधातोः' इत्यनेनोपधादीर्घे 'मघवन्' इति, सूत्रसत्त्वे च संयोगान्तलोपस्यासिद्धत्वे 'मघवन्' इति आरम्भप्रत्याख्यानयोः फलभेदप्रसङ्गे प्रत्याख्यानासङ्गतिः स्यादतस्तत्प्रत्याख्यानपरभाष्यानुरोधेन सूत्रारम्भपक्षेऽपि बहुलग्रहणेन संयोगान्तलोपस्यासिद्धत्वेन भवतीति कल्प्यते। तथा च भट्टिकविना प्रयुज्यते 'मघवान्' इति 'हविर्जक्षिति निःशङ्कः' इति पद्ये।

**५५—अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति। वैकल्पिकं चेदमष्टन आत्वम् 'अष्टनो दीर्घात्' इति सूत्रे दीर्घग्रहणाज्ज्ञापकात्।** अयं भावः—'अष्टन आ विभक्तौ' इत्यनेन हलादौ विभक्तावष्टन्शब्दस्य विकल्पेनाऽऽत्वविधानाल्लाघवानुरोधेन 'अष्टाभ्य औश्' इति सूत्रे 'अष्टभ्यः' इत्येवं वक्तव्ये 'अष्टाभ्यः' इति कृतात्वनिर्देशरूपप्रयत्नाधिक्येन आत्वस्य विवक्षया कृतात्वस्यैवाष्टन्शब्दस्य सम्बन्धिनोर्जश्शसोरौश्विधानेन जश्शसोश्चाजादिविभक्तित्वेन तत्राऽऽत्वस्याप्राप्तेः कृताकाराष्टन्शब्दप्रकृतिजश्शसावुद्दिश्य विहितौश्विधेवैयर्थ्येन जश्शस्विषये आत्वं कल्प्यते। न चेदमष्टन आत्वं न वैकल्पिकमिति वाच्यम् 'अष्टनो दीर्घात्' इति सूत्रे दीर्घग्रहणेन तस्य वैकल्पिकत्वज्ञापनात्। तथा हि 'अष्टनो दीर्घात्' इति सूत्रे दीर्घग्रहणं दीर्घान्तभिन्नाष्टन्शब्दात् सर्वनामस्थानभिन्नहलादिविभक्तीनामुदात्तत्वं मा भूदिति। तत्र हलादौ नित्यमात्वप्रवृत्तेस्तद्रहितरूपाभावेन व्यावर्त्यालाभात्तदन्यर्थं सदात्वस्य वैकल्पिकत्वं ज्ञापयति। फलं च 'अष्टभिः' इत्यादिरूपसिद्धिरिति। **५६—इह पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भावाच्च ष्टुत्वम्, कार्यकालपक्षे बहिरङ्गस्याल्लोपस्यासिद्धत्वाद्वा।** प्रियाष्टन्शब्दात् द्वितीयाबहुवचने शसि प्रत्यये भसंज्ञायाम् 'अल्लोपोऽनः' इत्यनेनाकारलोपे रुत्वे विसर्गे च 'प्रियाष्टनः' इति सिद्ध्यति। न चात्र 'ष्टुना ष्टुः' इति सूत्रेण टकारयोगे नकारस्य ष्टुत्वेन णकारादेशापत्तिरिति वाच्यम्, 'अचः परस्मिन् पूर्वविधौ' इत्यनेनाल्लोपस्यस्थानिभूतलुप्ताकारापेक्षया पूर्वत्वेन दृष्टाट्टकारात्परस्य णत्वे कार्ये कर्तव्ये स्थानिवद्भावेन टकारयोगाभावेन ष्टुत्वाप्रवृत्तेः। न च 'पूर्वत्रासिद्धे न स्थानिवत्' इति निषेध इति वाच्यम्। 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति णत्वे कर्तव्ये तन्निषेधात्। यदि तु लक्षणप्रतिपदोक्तपरिभाषया णत्वपदेन न ष्टुत्वनिष्पन्नणत्वस्य ग्रहणमित्युच्यते तर्हि 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया भसंज्ञाद्वारा बाह्यशस्प्रत्ययनिमित्तकाऽल्लोपस्य बहिरङ्गत्वेनान्तर्भूतटकारयोगनिमित्तकत्वेनान्तरङ्गष्टुत्वदृष्ट्याऽ-

सिद्धत्वात्। यथोद्देशपक्षेण 'राज्ञः' इत्यादाविवासिद्धपरिभाषायास्त्रैपादिकेऽप्रवृत्तिरिति दूषणं तु न युक्तमेकपक्षेणेष्टसिद्धौ पक्षान्तरेण दूषणदानस्यानुचितत्वात्। ५७—ननु त्वं स्त्री अहं स्त्री इत्यत्र त्व अद् अह अम् इति स्थिते अमि पूर्वरूपं परमपि बाधित्वाऽन्तरङ्गत्वाट्टाप् प्राप्नोति? सत्यम्, अलिङ्गे युष्मदस्मदी। तेन स्त्रीत्वाभावान्न टाप्, यद्वा शेषे इति सप्तमी स्थानिनोऽधिकरणत्वविवक्षया। तेन मपर्यन्ताच्छेषस्य अद् इत्यस्य लोपः। स च परोऽप्यन्तरङ्गे अतो गुणे कृते प्रवर्तते। अदन्तत्वाभावान्न टाप्। स्त्रीत्वविशिष्टार्थवाचकाद् युष्मद्शब्दाद् अस्मद्शब्दाद्वा प्रथमैकवचनविवक्षायां सुप्रत्यये 'ङे प्रथमयोरम्' इत्यनेनामादेशे 'त्वाहौ सौ' इत्यनेन मपर्यन्तभागस्य क्रमेण त्वअहादेशयोः कृतयोः 'त्व अद् अम्, अह अद् अम्' इति जाते शेषेलोपापेक्षयाऽन्तरङ्गतया पूर्वम् 'अतो गुणे' इति पररूपे ततः 'शेषे लोपः' इत्यनेनान्त्यदकारलोपे 'अमि पूर्वः' इति पूर्वरूपे 'त्वम्' 'अहम्' इति सिद्ध्यतः। नन्वत्र परमपि 'अमि पूर्वः' इति पूर्वरूपम् 'अजाद्यतष्टाप्' इति टाप्प्रत्ययोऽन्तरङ्गत्वात्प्रबाध्य कुतो नेति चेत्? न, 'अलिङ्गे युष्मदस्मदी' इत्यभियुक्तोक्त्या तयोर्लिङ्गबोधकत्वाभावस्यावगमेन स्त्रीत्वलिङ्गाभावेन टापोऽप्राप्तेर्न टाप्। न च युष्मदस्मदोः स्त्रीलिङ्गभावबोधकं नेदं वचनम् 'अलिङ्गे युष्मदस्मदी' इति, किन्तु युष्मदस्मच्छब्दयोः लिङ्गप्रयुक्तकार्येण रूपेषु वैषम्याभावस्यैव बोधकं, यथाऽव्ययेषु, तेन तयोः स्त्रीलिङ्गबोधकत्वेन पुनरपि टाप्प्रवृत्त्यापत्तिस्तदवस्थैवेति वाच्यम्, एवं सति 'शेषे लोपः' इति सूत्रे स्थानिनोऽधिकरणत्वविवक्षायां शेषे इति सप्तमीं स्वीकृत्य तस्याः षष्ठ्यर्थत्वावगमात् मपर्यन्तात् शेषस्य भागस्य लोपः इत्यर्थस्वीकारेण मपर्यन्ताच्छेषस्य 'अद्' इत्यस्य लोपेन 'त्व अम्' 'अह अम्' इति जाते प्रकृतेरदन्तत्वाभावेन टापोऽप्राप्तेः। ५८—मपर्यन्तस्य किम्? साकच्कस्य मा भूत्। युवकाम् आवकाम्। त्वया मयेत्यत्र त्व्या म्येति मा भूत् युवकाभ्याम् आवकाभ्याम् इति च न सिद्ध्येत्। अयमर्थः—युष्मदस्मदादेशप्रकरणे मपर्यन्तस्य इति किमर्थम्? तदभावेऽपि सर्वस्य स्थाने त्वाद्यादेशेषु 'त्वम्' 'अहम्' इत्यादिरूपसिद्धेरिति। अत्रोच्यते, यथा 'त्वम्' 'अहम्' इत्यादौ सर्वस्य स्थाने आदेशास्तथैव युष्मच्छब्दे अस्मच्छब्दे वा कुत्सादिविवक्षायामकच्प्रत्यये तस्य टेः प्राग्विधानेन मध्येपतिततया 'तन्मध्ये पतितास्तद्ग्रहणेन गृह्यन्ते' इति परिभाषया युष्मद्ग्रहणेन अस्मद्ग्रहणेन वाऽकज्विशिष्टस्य ग्रहणात्तद्विशिष्टस्य आदेशा मा भूवन्निति मपर्यन्तस्य ग्रहणम्। यथा युष्मकद् अम् अस्मकद् अम् इति प्रथमाद्विवचनेऽमादेशादन्तरं 'युवावौ द्विवचने' इति सूत्रेण मपर्यन्तस्य युवावादेशयोः 'प्रथमायाश्च द्विवचने भाषायाम्' इत्यनेनात्वे 'युवकाम्' 'आवकाम्' इति रूपे भवतः, अकज्विशिष्टस्यादेशयोस्तु 'युवाम्' 'आवाम्' इति रूपापत्तिरिति। नन्वकच्प्रकरणे 'ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच् अन्यत्र तु सुबन्तस्य टेः प्रागकच्' इत्युक्तत्वादत्र सुप ओकाराद्यादित्वाभावेनाऽकचः सुबन्तटेः प्राक्प्रवृत्त्या युष्मदस्मच्छब्दमध्यपतितत्वाभावेन तद्ग्रहणेनाग्रहणात्सर्वस्यापि युवावादेशयोः 'युवाम्' 'आवाम्' इति जातेऽकच्प्रवृत्तौ 'युवकाम्' 'आवकाम्' इति रूपसिद्धेः मपर्यन्तस्य इति व्यर्थमिति चेत्? न, एवं सति युष्मद्–अस्मद्शब्दयोः सम्पूर्णयोस्तृतीयैकवचने परे 'त्वमावेकवचने' इति त्वमादेशयोः त्व आ म आ इत्यत्र 'योऽचि' इत्यनेनान्त्यस्य यकारादेशे त्वया मया इत्यस्यासिद्ध्यापत्तेः, त्व्या म्या इत्यापत्तेश्च। नन्यत्रापि

'योऽचि' इति सूत्रस्थाने 'अच्ये' इति न्यासकरणेन त्वमयोः सर्वादेशत्वेऽपि तयोरन्त्यस्य एकारादेशविधानात्तस्य चायादेशेन तत्सिद्धिरिति मपर्यन्तस्य इति पुनरपि व्यर्थमिति चेत् ? न, युवकाभ्याम् आवकाभ्याम् इत्यस्यासिद्धयापत्तेः। तथा हि भ्यामो भकारादित्वेन तत्र सर्वनाम्न एव टेः प्रागकचः प्रवृत्त्या मध्यपतितत्वात् 'तन्मध्ये पतितास्तद्ग्रहणेन गृह्यन्ते' इत्यनेन तद्विशिष्टस्य युष्मद्ग्रहणेन अस्मद्ग्रहणेन वा ग्रहणात्सर्वस्य स्थाने युवावादेशयोः प्रवृत्तौ 'युवाभ्याम्' 'आवाभ्याम्' इत्यापत्तेः। तस्माद् 'युवकाभ्याम्' 'आवाकाभ्याम्' इति सिद्धयर्थं 'मपर्यन्तस्य' इति। ५९—इह शेषे लोपोऽन्त्यलोप इति पक्षेः जसःशी प्राप्तः 'अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्' इति न भवति। ङेप्रथमयोरित्यत्र मकारान्तरं प्रश्लिष्य अम् सान्त एवावशिष्यते न तु विक्रियते इति व्याख्यानाद्वा। अयं भावः—युष्मद्शब्दाद् अस्मद्शब्दाद्वा जसि विभक्तौ 'ङेप्रथमयोरम्' इत्यमादेशे 'यूयवयौ जसि' इत्यनेन यूयवयादेशयोः 'शेषे लोपः' इत्यनेनान्त्यलोपे 'अमि पूर्वः' इति पूर्वरूपे 'यूयम्' 'वयम्' इति सिद्धयतः। नन्वत्र 'यूय अम्' 'वय अम्' इति स्थितौ अमादेशस्य 'स्थानिवदादेशोऽनल्विधौ' इत्यनेन स्थानिवद्भावाज्जस्त्वारोपेणाऽदन्तसर्वनाम्नः परतया 'जसः शी' इत्यनेन शीआदेशः कुतो नेति चेत् ? उच्यते, 'अङ्गवृत्ते पुनर्वृत्तावविधिः' अङ्गकार्ये कृते पुनः द्वितीयमङ्गकार्यं न भवतीत्यर्थिकया परिभाषया यूयवयादेशयोरङ्गकार्ययोः प्रवृत्त्यनन्तरं शीआदेशप्रवृत्तेर्निषेधात्। यदि त्वियं परिभाषा 'युष्मभ्यम्' 'अस्मभ्यम्' इत्यादौ एत्वाप्रवृत्तिमात्रप्रयोजनिका तत्र 'अभ्यम्' इति आदेशस्वीकारेण तदन्यथासिद्धया प्रत्याख्यायते तर्हि 'ङेप्रथमयोरम्' इति सूत्रे संयोगान्तलोपेन मकारं प्रश्लिष्य मकारान्तामादेशस्य विधानेन विकारमात्रनिवृत्तेर्व्याख्याततया प्रकृते शीआदेशाप्रवृत्तिरिति बोध्यम्। ६०—अप्रत्ययग्रहणं ज्ञापयति—अन्यत्र धातुग्रहणे तदादिविधिरिति। तेनायस्कारः। अतः कृकमीति सः। अयमर्थः—'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इति सूत्रेऽप्रत्ययग्रहणं किमर्थम् ? तदभावे उत्तरपदाधिकारेण अञ्चुधातौ उत्तरपदे परे विश्वग्देवयोः सर्वनाम्नश्च टेरद्र्यादेशो भवतीत्यर्थं यत्र लुप्तप्रत्ययान्तःकेवलोऽञ्चुधातुरुत्तरपदं तत्रैव 'अदमुयङ्' इत्यादौ तत्प्रवृत्तेः 'विष्वगञ्चनम्' इत्यादौ च 'अञ्चनम्' इत्युत्तरपदस्य अञ्चधातुरूपत्वाभावेनैवाप्रवृत्तेः कुत्रापि दोषाभावात्। अत्रोच्यते व्यर्थं सज्ज्ञापयति—धातुग्रहणे तदादिविधिरिति। तथा च अप्रत्ययग्रहणाभावे अञ्चधात्वादावुत्तरपदे इत्यर्थापत्त्या 'विष्वगञ्चनम्' इत्यत्र अञ्चनमित्यस्य अञ्चधात्वादित्वादद्र्यादेशापत्तिरतस्तत्र अप्रत्यये इति क्रियते इति स्वांशे चारितार्थ्यम्। अन्यत्र फलं तु 'अयस्कारः' इति। तत्र 'अतःकृकमि' इति सूत्रेण कृधात्वादावुत्तरपदे इत्यर्थेन न कारशब्दे परे विसर्गस्य सत्वसिद्धिरिति। ६१—उगिदचामिति सूत्रेऽग्रहणं नियमार्थ-धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति। तेन स्रत् ध्वत् इत्यादौ न। अधातोरिति तु अधातुभूतपूर्वस्यापि नुमर्थम्। गोमान्। गोमत्शब्दात्क्यजन्तप्रकृतिकक्विबन्तादाचारक्विबन्तप्रकृतिकक्विबन्ताद्वा सुप्रत्यये 'अत्वसन्तस्य चाधातोः' इत्यनेन दीर्घे 'उगिदचां सर्वनामस्थानेऽधातोः' इत्यनेन नुमि हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्‌ इत्यादिलोपे संयोगान्तलोपे 'गोमान्' इति। नन्वत्र क्यजन्तस्य आचारक्विबन्तस्य वा 'सनाद्यन्ता धातवः' इति धातुसंज्ञकत्वेन ततः क्विप्यपि क्विपा धातुत्वानपायात् 'उगिदचां सर्वनामस्थाने' इति सूत्रे 'अधातोः' इत्युक्ते कथमत्र नुम्प्रवृत्तिरिति चेत् ? अत्रोच्यते, तत्र

सूत्रेऽच्ग्रहणेन अञ्चुधातोरेव ग्रहणात्तस्य चोकारेत्सञ्ज्ञकतया उगित्पदेनैव ग्रहणसिद्धेस्त-द्वैयर्थ्येन 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव' इत्यस्य अञ्चधातुभिन्नधातोरुगित्कार्यं न भवति इत्यर्थकस्य ज्ञापिततया तेनैव तत्सूत्रस्य धातौ निवृत्तिसिद्धया सूत्रे क्रियमाणो धातोरित्यस्य वैयर्थ्यापत्त्या तत्सामर्थ्येन भूतपूर्वस्य अधातोरपि उगितो नुमिति ज्ञापनेन क्यच आचार-क्विपो वा प्रवृत्तेः पूर्वं गोमतोऽधातुतया भूतपूर्वाधातुत्वेन नुमः प्रवृत्तेः सुवचत्वादिति। ६२—अन्तरङ्गोऽपीडागमः सम्प्रसारणविषये न प्रवर्तते अकृतव्यूहपरिभाषया। सेदु-षः। अयमर्थः—पदान्वाख्यानपक्षे पदपर्यन्तं प्रकृतिप्रत्ययान् संस्थाप्य ततः संस्कार इति सि-द्धान्तात् सद् वस् अस् इति सद्धातुक्वसुप्रत्ययशस्विभक्तीः संस्थाप्य ततः वसोरार्धधातुकत्वेऽपि शस्प्रत्ययनिमित्तक 'वसोः सम्प्रसारणम्' इति शास्त्रप्रवृत्त्या वलादित्वनिमित्तविनाशसम्भाव-नायामन्तरङ्गस्यापीडागमस्यात्र 'अकृतव्यूहाः पाणिनीयाः' इति परिभाषया 'यदि पूर्वमन्तरङ्ग-शास्त्रं न प्रवर्तेत इति सम्भावनायां बहिरङ्गशास्त्रप्रवृत्तौ अन्तरङ्गशास्त्रनिमित्तविनाशसम्भावना तत्र पूर्वमन्तरङ्गशास्त्रं न प्रवर्त्तते' इत्यर्थिकयाप्रवृत्तिप्रतिबन्धेन तिङन्तप्रकरणे वक्ष्यमाणेषु द्वि-त्वादिकार्येषु जातेषु सम्प्रसारणे पूर्वरूपे च इणः परत्वाद् 'आदेशप्रत्यययोः' इति षत्वे रुत्वे विसर्गे सेदुषः इति सिद्ध्यतीति। ६३—शावल्लोपस्य स्थानिवत्त्वाद्झलन्तत्वान्न नुम्। अजन्तलक्षणस्तु नुम् न, स्वविधौ स्थानिवत्त्वाभावात्। बेभिदि ब्राह्मणकुलानि। अयं भावः-बेभिद्यधातोर्यङन्तात्क्विपि अतो लोपे यलोपे च कृदन्तत्वात्प्रातिपदिकसंज्ञायां प्रथमाबहु-वचनविवक्षायां जसि 'जश्शसोः शिः' इति शिआदेशे बेभिदि इति सिध्यति। नन्वत्र शिआ-देशस्य 'शि सर्वनामस्थानम्' इत्यनेन सर्वनामस्थानसञ्ज्ञायां 'नपुंसकस्य झलचः' इत्यनेन झलन्तलक्षणो नुम् कस्मान्नेति चेत्? न, 'अचः परस्मिन् पूर्वविधौ' इत्यनेन अल्लोपस्य स्थानिवद्भावेनाकारबुद्ध्या नुमोऽप्राप्तेः। न चाल्लोपस्य स्थानिवद्भावेनाजन्तलक्षण एव नुम् स्यादिति वाच्यम्, पूर्वस्यैव विधौ स्थानिवद्भावस्यानेन सूत्रेण विधानात्स्वविधौ स्थानिव-द्भावाप्रसक्तेरिति। ६४—असहत्पूर्वा किम्? महाशूद्री। अयं भावः—'शूद्रा चामहत्पूर्वा जातिः' इति वार्त्तिकेऽमहत्पूर्वाग्रहणाभावे शूद्रशब्दात् टाप् भवति जातिश्चेद्वाच्येति तदर्थं शूद्र-शब्दाट्टापि शूद्रा इति, महत्पूर्वकशूद्रशब्दस्य तदन्तविधिनैव शूद्रशब्देन ग्रहणसम्भवात्तस्य चात्र प्रत्ययविधायकतया 'समासप्रत्ययविधौ प्रतिषेधः' इति निषेधेन महाशूद्रशब्दाट्टापोऽप्र-सक्त्यैव दोषाभावेन जातिलक्षणङीप्प्रत्यये 'महाशूद्री' इत्यस्य सिद्धौ तद्व्यावृत्त्यर्थं क्रियमाणं तद्ग्रहणं स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति तेन नदशब्दात् ङीपि नदी इतिवत् परमनदशब्दा-दपि ङीपि परमनदी इति सिद्ध्यति इति दिक्। ६५—उगिदचामिति सूत्रेऽञ्ग्रहणेन धा-तोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियम्यते। तेनेह न—उखास्रत्। अयमर्थः—उखापूर्वकस्रं-सुधातोरुगितः क्विपि अनिदितामिति नलोपे कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायां सुप्रत्यये हल्ङ्या-दिलोपे सकारस्य पदान्तत्वाद् 'वसुस्रंसुध्वंस्वनडुहां दः' इति दकारे चर्त्वे च कृते 'उखास्रत्' इति। नन्वत्र उगित्त्वात् स्त्रीत्वविवक्षायाम् 'उगितश्च' इति ङीबापत्तिरिति चेत्? न, 'उगि-दचां सर्वनामस्थानेऽधातोः' इति सूत्रे अञ्चुधातोरुगित्त्वेनैव नुम्सिद्धेरज्ग्रहणेन व्यर्थीभूतेन अञ्चुधात्वतिरिक्तधातूनामुगित्कार्याभावज्ञापनेन स्रंसुधातावपि तदप्रवृत्तेरिति। ६६—पञ्चेत्यत्र

